# विषयानुक्रम


| पृष्ठ | विषय |
|---|---|
| ४ | द्रव्यलोकनुं निरूपण । |
| ५ | रूपादि ४नुं सहचारीपणु । |
| ७ | शब्दनी द्रव्यपणानी सिद्धि । |
| १० | द्रव्यनु नित्यानित्यपणानु वर्णन । |
| १३ | स्थिति आश्री जीव अने पुद्गलनी चतुर्भंगी । |
| १४ | सादि अनतभागे सिद्धजीव । |
| १६ | अनादिसातभागे भव्यजीव । अनादिअनतभागे अभव्यजीव अने सादिसांतभागे पुद्गल । |
| १८ | आदिअनतभागे भविष्यकाल । |
| २० | अनादिअनंतभागे धर्मास्तिकायादि । |
| २७ | क्षेत्रलोकनु निरूपण । |
| २८ | वाचस्पति आदिनु बुद्धिमंदपणु । |
| ३० | उर्ध्व अधो अने तीर्च्छालोकनु वर्णन । |
| ४१ | काललोकनु अने समय आवलिका-विगेरे तेना भेदोनु वर्णन । |
| ४५ | पूर्व-पल्योपम-सागरोपमनु वर्णन । |
| ४९ | पुद्गलपरावर्त्तनु वर्णन । |
| ५१ | भवलोकनु निरूपण । |
| ,, | नारकजीवनी सिद्धि । |
| ५२ | देवजीवनी सिद्धि । |
| ५५ | नारकादि जीवोनु शाश्वताशाश्वत-पणुं । |
| ५९ | भावलोकनु वर्णन । |
| ,, | गतिकषायनुं वर्णन । |
| ६० | लिंग-मिथ्यादर्शननु वर्णन । |
| ६२ | अज्ञाननु वर्णन । |
| ६५ | असंयतत्वनु वर्णन । |
| ६८ | विरति न स्वीकारवामा वादि-तरफना ज्ञान, अज्ञान, मिथ्या-सस्कार, आलस्य, मोह, आशसा, भविष्यज्ञाननो अभाव, सामग्रीनो अभाव, अने कर्मोदय आ नव ९ विकल्पोनु खडन । |
| ११० | असिद्धत्वनु वर्णन । |
| ११२ | लेश्यानु वर्णन । |
| ११७ | गति-कषाय आदि औदयिक—भावोनु क्रमप्रयोजन । |
| १२१ | औपशमिक भावनु वर्णन । |
| १२४ | समकितनु वर्णन । |
| १२७ | चारित्रनु वर्णन । |
| १३० | क्षायिकभाव अने तेना भेदोनु वर्णन । |
| १३९ | क्षायोपशमिकभाव अने तेना भेदोनु वर्णन । |
| १४१ | स्मृतिनी प्रमाणपणानी अने मति-ज्ञानपणानी सिद्धि । |
| १४२ | प्रत्यभिज्ञाननी ,, |
| १४४ | तर्कनी ,, |
| १४५ | अनुमाननी ,, |
| १४७ | उपमान प्रत्यभिज्ञाथी जुदु नथी तथा अर्थापत्ति अनुमान अथवा तर्कथी जुदी नथी । |
| १४८ | अभावप्रमाणनु खडन । |
| १५५ | मतिज्ञान आदिनाक्रमनु प्रयोजन । |

| पृष्ठ | विषय |
| --- | --- |
| १६८ | अन्यदर्शनीओनी ईश्वर-आत्मा आदि बावतोमा भिन्नभिन्न मान्यता। |
| १८३ | परिणामिकभाव अने तेना भेदोनु वर्णन। |
| १८९ | भावलोकनु निरूपण। |
| १९० | रागद्वेषनु ,, |
| १९२ | द्रव्य अने भावसमकितनु स्वरूप। |
| १९३ | पर्यायलोकनु निरूपण। |
| १९४ | पर्यायनयनो मत। |
| १९६ | गुणनु वर्णन। |
| १९७ | क्षेत्रपर्यायनु वर्णन। |
| २०१ | नारकभवनो अनुभाव। |
| २०९ | तिर्यंच भवनो ,, |
| २१० | मनुष्य भवनो अनुभाव। |
| २१५ | देव ,, ,, |
| २१८ | भावपरिणाम। |
| २१९ | परिणामवाद। |
| २२१ | अधकारनी द्रव्यपणानी सिद्धि। |
| २२६ | छायानी भावपणानी सिद्धि। |
| २३० | वर्ण निरूपण। |
| २३२ | रस ,, |
| २३५ | गध ,, |
| ,, | सस्थान ,, |
| २४१ | स्पर्श निरूपण। |
| ,, | गुरुत्वाकर्षणनु खडन। |
| २४७ | अवगाहना निरूपण। |
| २४८ | गति निरूपण। |

# शुद्धिपत्रम्

| पृ | प | अशुद्ध | शुद्ध |
|---|---|---|---|
| ४ | १२ | निवृत्ति | विवृति |
| ५ | ८ | षड् | प्रड् |
| ७ | ३ | श्रव | श्रव |
| ७ | २१ | रूपिण | रूपिण: |
| ८ | ११ | वादन्ति | वदन्ति |
| ८ | १८ | परमा० | पारमा० |
| ९ | २४ | सावयत्व | सावयवत्व |
| ९ | २५ | ग्रऽथिवत-लऽलपितामे | ग्रथिलता लपितमेव |
| ११ | ४ | नास्त्येत्र | नास्त्येव |
| ११ | ८ | मिमता | भिमत |
| १४ | १७ | कषणात्।कर्म | कषणात् कर्म |
| १५ | १५ | ललग्न | न लग्न |
| १६ | १४ | समय | ससमय |
| १६ | २२ | वृ्त्ति | वृत्ति |
| १९ | २ | सादिसा | सावन |
| २४ | १६ | द्यो.ग | द्योग: |
| २८ | २५ | रक | रिक |
| २९ | ३ | कलप्य | कल्प्य |
| ३० | ७ | घटापट | घटपटा |
| ३३ | १७ | उड्डे | उड्ढे |
| ३५ | २० | दूर्व्वा | दूर्व्व |
| ३८ | ८ | ग्रथा | यथा |
| ४० | ८ | चेद | चेद् |
| ४४ | २ | मुहू.ते | मुहूर्त्ते |
| ४५ | १९ | पेक्ष्या | पेक्षया |
| ४९ | २ | सुसम | सुषमा |
| ५५ | ७ | कल्पा | कल्पा |
| ५५ | ११ | चेत | चेत् |
| ५८ | ४ | नपर्त० | नपवर्त० |
| ६२ | ८ | ज्ञानया | ज्ञानस्या |
| ६२ | १२ | अतु | अस्तु |
| ६२ | १४ | तत्वस्या० | तत्स्वभा० |
| ६५ | २६ | नृत | नृता |
| ७० | ३ | स्ति | त्ति |
| ७१ | १२ | स्विरति | विरति |
| ८१ | २२ | वत्द्य | वद्यत् |
| ८३ | १९ | वत | वत |
| ८४ | ५ | त्यागिव | त्यागित्व |
| ८४ | १२ | त्यागिवो | त्यागित्वो |
| ८४ | १८ | त्यागोऽय | त्यागोऽप्य |
| ८८ | १२ | पूव | पूर्व |
| ९१ | ३ | प्रत्याया | प्रख्या |
| ९१ | ३ | ख्या | ख्या |
| ९४ | ४ | नित० | नि० |
| ९४ | २१ | माख्य | माख्या |
| ९५ | २३ | परिष्क० | परिष्कि० |
| ९६ | १६ | सयत्त | सयत |
| ९७ | २१ | सापेक्षा | सापेक्षा. |
| ९८ | १९ | नैतसुदरा | नैतत् |
| १०१ | ३ | घाति | घाती |
| १०१ | २२ | बघ्ना | बघ्ना |
| १११ | ५ | तयो | तयो: |
| १११ | १४ | दर्शन य | दर्शनस्य |
| १११ | २३ | यथाचारित्र | चारित्र |
| ११२ | ६ | जीवाजी | जीवाजीव |

| पृ | पं | अशुद्ध | शुद्ध |
|---|---|---|---|
| ११५ | ८ | एर्सि | एएर्सि |
| ११६ | २० | समित्ते | समिते |
| ११८ | ९ | क्रुष्ट | क्रुष्ट. |
| ११९ | १६ | वघ्ना | बघ्ना |
| ११९ | १७ | वनर्धम् | वर्धनम् |
| १२० | २३ | य | य |
| १४१ | ३ | यद्धा | यद्वा |
| १७० | ११ | च्छद | दन्त |
| १८७ | ४ | शेषा | शेषा' |
| २०४ | ३ | रुद्देत | रुद्दे अ |
| २०५ | ५ | लत्थ | तत्थ |
| २०६ | २३ | वघ | वर्घे |
| २१० | १७ | सिट्ठ | रुट्ठ |
| २१८ | १५ | शुभ | ऽशुभ |
| २१८ | १७ | तृतीयं | चतुर्थं |
| २४६ | १६ | द्वय | द्वय |

। ॐ नमो जिनाय ।

आगमोद्धारक-आचार्य श्री आनन्दसागरसूरीश्वरेभ्यो नमः ।

आगमोद्धारक-आचार्य श्री आनन्दसागरसूरिनिर्मितवृत्तियुता

आचार्यश्रीहरिभद्रसूरिपुरन्दरप्रणीता

# द्वितीयविंशिका ।

नत्वा प्रकल्पितानल्प-कल्पितार्थं जिनं ब्रुवे ।
भव्यबोधाब्जमिहिरां, लोकानादित्वदीपिकाम् ॥१॥

गुरोरेवानुभावोऽयं, कल्पद्रोः कल्पितार्पकात् ।
गरिष्ठो येन दुर्बोधं लोकरूपं विवेच्यते ॥२॥

यद्वाऽयो मणिसंस्पर्शात् स्थितिमत् स्यात्कयादिषु ।
सुवर्णभावतश्चित्रं, तत्र नाण्वपि सद्धियाम् ॥३॥

सत्तर्कपेशलं क्वेदं, हारिभद्रं वचो गुरु ? ।
क्व चाज्ञातागमाध्वाहं, तद्विभासन उद्यतः ॥४॥

तथापि तत्पदाम्भोज-भक्तिप्रेरितचिल्लवः ।
मत्तो मन्दमतेर्बुद्धयै, वक्ष्ये दाता मतिं स मे ॥५॥

गुरुप्रभावा गुरवो, बालबुद्धिविकाशकाः ।
जयन्ति तत्पदार्चैव, यतः सर्वं विधास्यति ॥६॥

इह हि शारीरिकमानसिकानेकदुःसहतरदुःखव्रातोपनिपात-पीडितेनासुमता समानन्ताव्याबाधशाश्वतानन्दमयपरमपद—श्रवण-जाततदवाप्तिसमुन्मुकभावेन च यतनीयमिष्ट तदपगमावाप्तिसिद्धये। परं तत्र यथार्थपदार्थप्रतीतिप्रतीतमन्तरा सम्यक्त्वमाप्यते केनापि। यतोऽलब्धसम्यक्त्वस्य ज्ञानमप्यनिश्चितस्वाधिकारस्य वाचनमिव दुश्चरतरविविधक्रियादिमय चारित्रमपि च भ्रष्टपथपरिज्ञानदुर्ग-दुर्गतराध्वबिषमताव्याहतपरिश्रान्तपान्थपरिश्रमवत् न किमपि प्रापयितुमात्मनोऽन्मभविष्णु अनिष्टतमदुःखस्तोमविध्वसाय सुख-सन्दोहदिव्यपदप्रापणसामर्थ्याय कल्पनीय। नचैतत्त्रितयमन्तरेणा-वाप्यतेऽभीष्टं निश्चयज्ञप्तिक्रियारहितनामरपान्थवद् इष्टवस्तु-निचयनिरन्तरशालिनगरप्राप्तिः। तच्च दर्शनमोहक्षयोपशमजन्य-सद्भाव प्रशमसवेगनिर्वेदानुकम्पास्तिक्यादिलक्षणमपि देवगुरुधर्माणा यथार्थस्वरूपावगमे यथार्थश्रद्धानरूपम्।तत्र च तस्य श्रीमदकलङ्कित-ज्ञानभानुदुरिततिमिरतनिप्रतताऽज्ञानान्धतमसतिरस्करणतरणिप्रभ-श्रीमद्देवतत्त्वनिर्णयेन गुरूणा तद्वचनानुष्ठानानुष्ठायितया धर्मस्य च तन्निर्दिष्टतया स्यात् श्रद्धानं सुकर, यदि भवेदपास्तमिथ्यात्वदोष-विकारप्रसरो जन्तुरसौ। तत्र च गाढतममिथ्यात्वहृत्पूरभक्षण-क्षीणात्मविवेकास्तस्य देवत्वमुररीचक्रुर्योऽस्य चराचरस्य जगतो भवेत् विधाता। ऊचुश्चात एव—'कार्यायोजनधृत्यादे'रित्यादिना विश्वविधातृतयैव तस्य साध्यता। ततश्च यावन्न ज्ञात भवेद् विश्व-विदितस्य सचराचरस्यास्य जगतः स्वरूप, न तावन्निर्णीतो भवति अपास्ताशेषजन्त्वनिष्टविधानेश्वररागद्वेषमोहदोषतमोजाल प्रति-समयमवलोकिताशेषद्रव्यपर्यायपूर्णलोकालोकावलोकनाप्रतिहतभानुः समस्तपदार्थसार्थयथार्थस्वरूपप्रकाशनप्रवीणगोप्रचार समग्रामर-नरनायकशिरःशेखरमणिमृष्टाखिलाङ्घ्रिकल्याणकरणप्रवणपादो निः

श्रेयसार्पणकलिपतकल्पककल्पपादपातिगगरिमप्रभाव: प्रभु: । अतस्त-न्निर्णयाय असदाग्रहविलुप्तविवेकलोचनयुगलतया विपरीतपदार्थ-श्रद्धानसूदितामलसम्यक्त्वरत्नानां मिथ्यादृशामसदुपदेशवितरणाने-कमुग्धप्राणिप्रमोहनजाललुब्धानेकभव्याभव्यजीवानां च शिक्षार्थं याकिनीमहत्तरावदनमलयनि:सृतासाधारणचाकचिक्यचमत्कृतिमद्व-चनावगमावाप्तानादिकालीनरूढघनमिथ्यात्वग्रन्थिभेदविकचितविवे-कविलोचना: परस्पराविरुद्धवस्तुप्रकल्पनापादितासमविद्वज्जनमन:-सन्तोषपोषकसदालोकचतुर्दशशतग्रन्थग्रथनावाप्तपरस्परविरुद्धपदा-र्थापादनपटुवहुलतमदुःखप्रकरस्वरूपदर्शनापादितस्वरूपवोधकबुधज-नान्त:करणपरितापनपटिष्ठसृष्टिप्रलयावस्थावैचित्र्यविचित्रलोक-चतुर्दशलोकविधानकल्पनाकल्पितब्रह्माद्यभिधानाभिधेयपरमेशितृश-तगुणमहिमानस्तत्रभवन्त: श्रीहरिभद्रपूज्यपादा लोकस्य यथास्थितं स्वरूपं दिदर्शयिषवो द्वितीयविंशिकायां सिद्धलोकस्वरूपं तावदाहुस्त-द्विषयिणीं विप्रतिपत्तिं निराकृत्य तस्य प्रमाणसिद्धतां चाख्यायन्त आद्यगाथया—

**'पंचत्थिकायमइओ अणादिमं वट्टए इमो लोगो ।**
**न परमपुरिसाइकओ पमाणमित्थ च वयणं तु' ॥१॥**

मङ्गलाभिधेयादिनिर्देशस्तु नात्र विहितो, ग्रन्थैकदेशत्वाद-स्या: । अथ लोक इति क: शब्दार्थ: ? कतिविधश्चासाविति चेदुच्यते—लोक्यते—आलोक्यते यथार्थवेदिभिरप्रतिहताशेषपदार्थाव-वोधवन्धुरकेवलवेदसा य: स लोक: । आलोक्यते च केवलविदा सर्वमेव रूप्यरूपिद्रव्यपर्यायादि 'सर्वद्रव्यपर्यायेषु केवलस्ये'तिवचनात् । अष्टविधश्चासौ । यत आहुश्चरमश्रुतकेवलिपादा आवश्यकनिर्युक्तौ—

'नाम ठवणा दविए खित्ते काले भवे अ भावे अ। पज्जवलोगे अ तहा अट्ठविहो लोगनिक्खेवो ॥१॥ तत्र नामस्थापने क्षुण्णे इत्यनादृत्य द्रव्यादिलोकस्वरूप व्याचिख्यासव इदमाहु —

'जीवमजीवे रूवमरूवीसप्पएसमप्पएसे अ। जाणाहि दव्वलोअं निच्चमनिच्च च ज दव्व ॥१॥ तत्र यदिति सामान्यनिर्देशेन व्याप्ति दर्शयति। यत्किमपि द्रव्य द्रवति-गच्छति गत्यर्थाना प्राप्त्यर्थत्वाविरोधात् प्राप्नोति ताँस्तान् पर्यायानिति द्रव्यं जीवाजीवादिस्तद्द्रव्यलोकं विजानीहीतिसम्बन्ध । कथमित्याह-'जीवमजीवेत्ति'। जीवति जीविष्यत्यजीवीदिति जीव.-उपयोगलक्षण. स्वसवेदनसिद्ध· शुभाशुभकर्मणां कर्त्ता भोक्तेत्यादिलक्षणो । यदाहुर्दुष्षमाग्यामोद्भूततिमिरतितिरस्करणावाप्तयथार्थदिवाकराभिधाना श्रीदिवाकरपादा·—

'प्रमाता स्वान्यनिर्भासी कर्त्ता भोक्ता निवृत्तिमान्। स्वसवेदनससिद्धो, जीव क्षित्याद्यनात्मक· ॥१॥ प्रकरणकारा अप्याहु.—'य कर्त्ता कर्मभेदाना, भोक्ता कर्मफलस्य च। ससर्त्ता परिनिर्वाता, स ह्यात्मा नान्यलक्षण ॥१॥' अन्यत्राऽपि।

तत्र ज्ञानादिधर्मेभ्यो, भिन्नाभिन्नविवृत्तिमान्। शुभाशुभकर्मकर्त्ता, भोक्ता कर्मफलस्य च ॥१॥ चैतन्यलक्षणो जीव इति तद्विपरीतश्चाजीवश्चेतनादिरहितो धर्माधर्माकाशपुद्गलरूपो, यदाह—'यच्चैतद्विपरीतवान् अजीव स समाख्यात':। 'अजीवकाया धर्माधर्माकाशपुद्गला' इति च। अत्र चैकवचन जातावेवानेकत्वाद् जीवानां,'जीवाश्चे'तिवचनान्। न केवलमनेकतैव, किन्त्वनन्तता। मितात्मवादे जीवोच्छेद—मुक्तावृत्याद्यापत्तेस्तदुक्त—

'मुक्तोपि वाऽभ्येतु भवं भवो वा, भवस्थशून्योऽस्तु मितात्मवादे। षड् जीवकायं त्वमनन्तसङ्ख्य–माख्यस्तथा नाथ! यथा न दोष ।। इति। न च भवति विना जीवाना पार्थक्यं विभिन्नविभिन्नतमसुखदु खज्ञानादि। अत्र मकारो ह्यलाक्षणिक. पृथक् पदे वा। नपुस्त्वं च प्राकृतशैल्यैव। यदाह पाणिनि –'लिङ्गमतन्त्र'मिति। एकारश्चोभयत्राऽपि 'एतसी मागध्या पुसी'तिसूत्रप्रभव.। द्वितीयाबहुवचनोद्भवो वा। समासपक्षे एत्र सर्वत्र रूप्यरूप्यादावपि। अत्र च जीवाजीवयोर्लोकतामाख्यायद्भि पञ्चास्तिकायमयस्य षड्द्रव्यमयस्य वा द्रव्यलोकतोक्ता। यतो नह्यस्ति समस्तेऽपि भुवने सन्निकृष्टासन्निकृष्टे द्रव्य यन्नैतेष्वन्तर्भवति। यद्यपि व्याख्यायमानं द्रव्य पर्यायभावाद्यन्वितत्वान्न केवलो द्रव्यलोको, न चास्त्यपि तादृश', पर्यायवर्जितस्य द्रव्यस्यैवासम्भवाद्यदाहु.– 'दव्व पज्जवविजुय दव्वविजुया अ पज्जवा नत्थि'त्ति। तथापि द्रव्यप्राधान्यादत्रैव व्यपदेशो। भवति चैवमपेक्षया व्यपदेशो युक्तियुक्त, 'अर्पितानर्पितसिद्धे'रितिवचनादेवमेवाग्रेऽपि। एवं जीवाजीवत्वेनोक्त्वा द्रव्यलोकता प्रकारान्तरेणाऽप्याहु –'रूवमरूवी'त्ति। प्रकारान्तरव्यपदेशो हि विवक्षाप्रभववाक्याना यथार्थताज्ञापनार्थं। यथाहि–'जीवाजीवौ द्रव्यलोक' इतिवाक्यं यावद्द्रव्यगोचरीकरणाद् द्रव्यलोकनिरूपणापेक्षयाऽवितथ, तथैतेन प्रकारेणोच्यमानमप्यवितथमेवेति। विवक्षया वा भवति द्रव्याणा विभागस्तत्र जीवत्वेतरधर्माभ्या विभागोऽन्यत्र च रूपेतरत्वादिनेतिदर्शनाय वा। तत्र रूप्यते–निरूप्यते इन्द्रियैरिति रूप–स्पर्शादितद्वद्रूपिद्रव्यमितिप्रकृत। अत एव च 'रूपिण: पुद्गला' इत्यत्र मूर्त्ता इति व्याख्यान सङ्गच्छते। न भवति च रूप स्पर्शादिव्यभिचारि। न च जले रूपरसस्पर्शसत्त्वेऽपि गन्धा''य, तेजसि रूपस्पर्शसद्भावेऽपि रसगन्धयोः वायौ च स्पर्शे

विद्यमानेऽपि नास्तीतरत्त्रयमिति कथङ्कारमुच्यते ? स्पर्शाद्यव्य-भिचारि रूपमितिवाच्यं । यतो न हि किमप्यस्ति सचराचरेपि भुवने मूर्तं द्रव्य यद्भवेत् स्पर्शाद्यन्यतमाभाववत्, तादृशस्य पुद्गलस्यैवा भावात् । 'स्पर्शरसगन्धवर्णवन्त पुद्गला' इति परमपुरुपवचनात् । यच्च नैति ग्राह्यता क्वचित्किञ्चित्किञ्चित् तदनुद्भूत तदिति । नह्यनुद्भूतमेति ग्राह्यता, भस्मावस्थाया व्यक्तभावमापन्नोपि पापाणस्थो यथा गन्ध । न चानुमीयतेऽसौ तत्र भस्मावस्थाया गन्धदर्शनेनार्वागपि, 'यद्द्रव्य यद्द्रव्यध्वसजन्य तत्तदुपादानोपादेय' मिति नियमात्, दृश्यते च पापाणभस्मनि गन्धोऽविप्रतिपन्नतया । न चैव जलादावस्त्यनुद्भूतगन्धादेरनुमाने हेतुर्येनानुमीयेतेतिवाच्य । यतो यथाहि–'यद् द्रव्य'मित्यादिनियमस्तथैवायमपि नियमो–यत्र पुद्गला स्पर्शाद्यन्यतमविकला सन्ति । वाय्वादयोऽपि पुद्गलरूपास्त थानुपलभ्यमानास्ते तत्रानुद्भूता सन्तीति बोध्यं वा । विचार्यतां च–वायुविकारजातजलविकाररूपे करके किमिति न दृश्यन्ते गन्धा दयो ?,दृश्यन्ते चेद्'यद् द्रव्य'मितिनियमेन स्वीकारस्यावश्यम्भाव । तेजसोऽपि च तद्ध्वसजन्यधूमकज्जलादि न तदभाववत् । सति च तस्मिँस्तस्मिँस्तेजस्यपि कथ न स्वीकार्यं गन्धादीति । अत एव च राद्धमुद्गमाषादीनामग्निपुद्गलरूपता व्याख्याप्रज्ञप्तौ व्याख्यातापि सङ्गच्छते । न चाग्निद्रव्यस्य निरन्वयो भवति नाशो, 'नासतो विद्यते भावो नाभावो विद्यते सत' इतिवचनात् । अनभ्युपगमे चास्य स्पष्ट शौद्धोदनिमतप्रवेश । परिणामस्यैव तथा तथाऽभ्युप-गमे चोपपद्यते सर्वं । एवमेवोद्योतस्यान्धकार , आतपस्य च छाया-दिरूप परिणामोऽवगन्तव्य इत्यल विवादेन । स्थितमिद यदुत-रूप न स्पर्शादिव्यभिचारीति । यद्वा'एकग्रहणे तज्जातीयग्रहण'मितिनियमाद् रूपग्रहणेनेन्द्रियगोचरा अन्येऽपि गन्धादयो ग्राह्या । विरोधा-

भावश्च पूर्वमुपपादित एव। न च वाच्यं भविष्यति तर्हि शब्द-ग्रहोऽपि, तस्यापीन्द्रियगोचरत्वात्। तस्य तथात्वेऽपि द्रव्यत्वेन तस्य कथञ्चिद्विजातीयत्वात्। द्रव्यता चास्य तीव्रमन्दभेदात् अनुवायुश्रवणात् तीव्रशब्दजन्यबाधिर्योपलम्भात् परिमितक्षेत्रश्रवणविषयत्वात् गत्यादेरन्योऽन्याभिभावुकत्वाच्चावसेया। गुणत्वे च कथं तस्य श्रोतृश्रवणदेशप्राप्तिः? वीचितरङ्गकदम्बकगोलकन्यायेनान्याऽन्यशब्दोत्पत्तिरपि न सङ्गच्छते एव, दृष्टान्तस्य द्रव्यत्वादिना वैधर्म्यात्। न च गुणरूपः स, उत्पन्नः सन्नमवेतत्वाद् द्रव्ये गच्छति पुरतो येनोत्पादयेन्नूतनान् शब्दान् दशसु दिक्षु। यद्यप्युत्पादयेत् स स्वाधिकरणे परं नान्यत्र तस्य तदुत्पादनसामर्थ्यं। नहि सनिकृष्टमपि गुणानर्पयति द्रव्यं, नवा घटैकदेशस्थितो रक्ततादिगुणोऽन्यत्रावयवे याति, तन्न गुणरूपतायां तस्य स्याच्छ्रवणं। न च कथमेकत्रावयवे उत्पन्नं सुखं समग्रेऽप्यात्मनीति। तत्स्वभावत्वादेकोपयोगस्वाभाव्याच्च तस्येत्यलं प्रसक्तेन। रूपं मूर्त्तत्वमस्यास्तीत्यभ्रादित्वादप्रत्यये रूपं–रूपवद् द्रव्यमित्यर्थः। तथाविधाश्च पुद्गला एव 'रूपिणः पुद्गला' इति नियमात्। नियमश्चात्रोभयथैव–पुद्गला एव रूपिणो, रूपिण एव पुद्गलाश्चेति। तथाऽरूपममूर्त्तत्वमस्यास्तीत्यरूपि, अरूपशब्दस्यामूर्त्तत्वे रूढत्वात्। अन्यथा स्यादेव बहुव्रीहिणा न रूपं यस्येत्यरूपमितिलक्षणेन मत्वर्थीयानर्थक्यं स्याद्वा 'गौरखरवदरण्य'मिति सत्यपि बहुव्रीहिणार्थप्रतिपादने मत्वर्थीयः। अरूपीणि च धर्माधर्माकाशजीवलक्षणानि अस्तिकायद्रव्याणि सकालानि तान्येव वा द्रव्याणि 'रूपिणः पुद्गला' इत्यादावुभयथावधारणादेवेति लभ्यते। आहुश्च–'नित्यावस्थितान्यरूपीणी'ति परमर्षयः। तृतीयं प्रकारमप्याहुः–'सप्पएसमप्पएसे'त्ति। तत्र दिश्यते-निरूप्यतेऽवयवी येन स देशो 'व्यञ्जना'-दिति घञ्, विवक्षितवस्तुनो विवक्षितो भागः, प्रकृष्टो–द्विधा कर्त्तु-

मशक्यो देशो-भाग. प्रदेश -असाधारणसूक्ष्मतया परमसूक्ष्मोऽवयव ।
प्रदेशेन सहितं सप्रदेश–द्व्यणुकादिपुद्गलस्कन्धो धर्माधर्माकाश-
जीवा·। नास्ति च परमाणो· कालस्य च प्रदेशः, आद्यस्य परमाणु-
ताव्याघातात् । अत एव 'नाणो'रित्यार्षम् । पारमार्थिकश्चात्र
परमाणुर्ग्राह्यो, नत्वितरोदीरित कल्पितो। यतस्तैर्हि–

'जालकान्तर्गते भानौ, यत् सूक्ष्म दृश्यते रजः । तस्य त्रिंश-
त्तमो भाग·, परमाणु प्रकीर्तित.' ।। इतिवाक्येन दृश्यमानावयवि-
त्रिंशत्तमो भाग उदीरितो । नचेद विचार्य व्याकृत, यन्त्रेणाऽपि
तस्य कोटिशो विभागोपलम्भात् । निश्चेय चात एवापरमाणोरपि
परमाणुत्ववादिनामसर्ववित्त्वम् । निरस्ताश्चानेन य आहु –यज्जैना:
सर्वमसङ्ख्यतयाऽनन्ततया च वादन्ति ते । यतो जैनाना यथार्थ-
वादित्वमेवानेन ध्वन्यते । यतो हि जिना केवलालोकवन्तो
ददृशुर्याननन्ताऽवयवतया तांस्तथोदाजह्रु. । तथाविध हि तेषामेव
ज्ञान, यत्प्रभावादवभासन्ते पदार्था यावदनन्ताऽवयवा अनन्तावय-
वतया । न च वैशेषिकादिवत् केवलकपोलकल्पितकल्पनासत्यापिता-
र्थव्याहृतयस्ते । भवति च म्लेच्छाना पुरतो वरचातुरन्तचक्रवर्त्ति-
नगरवर्णनमिव बह्वाश्चर्यकरमेतत्, परमविवेकिनामेतन्नासम्भवि ।
तन्नाणो. परमार्थिकस्य प्रदेशा·, अणुताव्याहतेः।इद च द्रव्यापेक्षयैव,
स्पर्शनापेक्षया तु सप्ताकाशप्रदेशस्पर्शनात् वर्णगन्धाद्यपेक्षया च द्विगु-
णादिशुक्लादिमत्त्वात् समयापेक्षयानेकसमयस्थितिकत्वाच्च सप्रदेश-
ताऽपि । क्षेत्रापेक्षया तु प्रदेश एकस्मिन्नाकाशस्यावस्थानान्नियमादप्र-
प्रदेशता । अनेन चोन्मत्तप्रलापो निरस्तोऽयं यदाह कश्चन यदुत-
परमाणुना परमाणु. कथं सयुज्यते ?, देशेन कात्स्न्र्येन वा ? आद्ये,
परमाणोः सावयवतापत्तिरन्त्ये च न स्कन्धापत्ति , तन्न कथञ्चनापि

स्कन्धीभावो घटतेऽङ्गीकारेऽप्यणूनामिति । परमाणोः स्पर्शनापेक्षया सप्रदेशत्वनियमात् । युक्तश्चाय पन्था एकस्मिन्प्रदेशे आकाशस्यावगाहनात् षण्णा दिशां चैकैकप्रदेशेन स्पर्शाच्च । दृश्यते च सूक्ष्मोऽपि विन्दु सर्वतः सजातीयैः स्पृशन् । न च भवत्यन्यथा कथमपि प्रत्यक्षमधिगम्यमानानां घटादीनामुपपत्ति. । भ्रान्तित्वं च तस्य यदभ्युपगम्यते तदेव भ्रान्तिमूलं । न च भ्रान्तमपि सर्वथाऽसत्त्वे,शशशृङ्गभ्रान्त्यनुपलब्धे । केचित्त्वाहु -द्व्यणुकादिपुद्गलानां न सन्त्येवावयवास्तस्यावयवित्वानुपपत्तेः । दृश्यादृश्यत्वे तु केशवदुपपादनीये। यत एको न दृश्यतेऽसौ, परं समुदितास्ते दृश्यन्त एव, पुञ्जव्यवहारश्च धान्यराशिवदिति । तदयुक्ततर बन्धाभावे एकावयवग्रहेण समग्रग्रहणस्यायोगात्, घटैकदेशग्रहणेन समग्रघटग्रहणवत्, धान्यसमुदायादेककणग्रहे नैव भवति समग्रग्रहणं न च भवति सम्बन्धशून्यानामणूना ग्रह, परमाणुत्वव्याहतेः केशदृष्टान्तोऽनुपपन्न एवात्र । यतस्तस्यैकस्यापि प्रत्यक्षादासन्ने । न चाणुर्भवति केवल. प्रत्यक्षविपयः कदाचनापि । न च भवति सम्बन्धाभावे स्थौल्योत्पादो । नन्वासीदेव पूर्वं चेत् कथ नागतोऽर्वाग्दृष्टिपथम् । द्रव्यतयाऽऽसीन्नतु पर्यायेणेति तु युक्त पन्थाः । सति सम्बन्धे योग्ये तदुत्पादात् सत्कार्यवादमतप्रवेश इति चेद् । द्रव्यार्थिकापेक्षया तथात्वमस्त्येव, पर्यायार्थिकापेक्षया परमुद्भवात्तस्येति । अन्ये त्वाहु -सन्त्यवयविना प्रदेशाः परमाणूनृते, परमाकाशात्मादीना न ते युक्तियुक्ता अभ्युपगन्तु, सावयवत्वेन अनित्यत्वापत्तेरवयविनोऽनित्यत्वनियमादिति । तदप्यसमञ्जसमेव । इहाकाशे ध्रुव इह चन्द्रमा इत्यादिनाकाशस्य शरीरावच्छेदेन ज्ञानोत्पादाभ्युपगमाच्चात्मनश्च सावयत्वस्यावश्यमभ्युपगमार्हत्वात् । यच्चोदीरित-अवयव्यनित्य इति । तदपि स्वकदाग्रहग्रऽथिवतल्ऽलपितामे,

तादृशनियमस्याप्रामाणिकत्वात् त्र्युटयादीनामवयवित्वेऽपि कैश्चिन्नि-त्यताऽभ्युपगमात् अवयवित्वस्यानित्यताऽप्रयोजकत्वाच्च । तत्त्वतस्तु स्वस्वपर्यायविनाशेन सर्वेषा पर्यायविनाशिता द्रव्यतोऽविनश्वरत्व चाऽऽकाशदीपमवगन्तव्य सुनिश्चितम् । तत् सुष्ठूच्यते-द्वचणुकाद्या. स्कन्धा धर्माद्याश्च सप्रदेशा , परमाणुरेवाप्रदेश इति । चकारस्तु त्रयाणामपि जीवाजीवरूप्यरूपिसप्रदेशाप्रदेशलक्षणाना द्रव्यलोकता समैवेतिप्रतिपादनार्थं । एतन्त्रय किमित्याह-'जाणाहि दव्वलोग'ति । जानीहि- अववुद्धयस्व, द्रव्यलोकमिति । तत्र द्रव्याण्येव जीवाजी-वरूप्यरूपिसप्रदेशाप्रदेशानि लोको–लोकशब्दवाच्यस्तेषामपि निरूपणीयत्वादालोक्यमानत्वाच्च । सञ्ज्ञाशब्द एवैव प्रज्ञाप्यते द्वारप्रस्तावादिति द्रव्यलोको । यद्वा द्रव्याण्येव त्रिकालिकपर्याय-परिणामित्वाज्जीवादीनि पर्यायलोककारणानीति तेषा द्रव्यलोक-ता,भूतभाविकारणार्थत्वाद् द्रव्यशब्दस्य, तदुक्त–

'भूतस्य भाविनो वा भावस्य हि कारणं तु यल्लोके । तद् द्रव्य तत्त्वज्ञै. सचेतनाचेतन कथित'।। मिति । न केवलं पूर्वोक्तभेदभिन्न एव, किन्त्वन्यथापि भवतीत्याह–'निच्चमनिच्च ज दव्व'ति । तत्र नितरामतिशयेन यम्यते-उपरम्यते नाशादनेनेति नित्यं ' शिक्यास्याढ्यमध्यविन्ध्यधिष्ण्यान्ध्यहर्म्यसत्यनित्यादय' (३६४) इति त्ये इष्टरूपनिष्पत्ति । जीवधर्माधर्माकाशपुद्गला , 'नित्यावस्थितान्यरूपीणी'तिवचनात्।'तद्भावाव्यय नित्य'मित्येवास्य लक्षणम् । नच जीवादीना पर्यायपरावृत्तिसम्भवेऽपि द्रव्यतयास्ति परावृत्तिस्त्रिकालमेकरूपत्वाद् द्रव्यस्य,अन्यथा द्रव्यत्वमेव न भवेत् । विशिष्टनाशे विशेष्यनाशाभ्युपगमो हि द्रव्यपर्याययोः कथञ्चि-दभिन्नत्वात् पर्यायाणां व्यपगमादेव । द्रव्य स्वस्वरूपेण तु न नश्यत्येव

कदाचनापि । ननु दृश्यते एव घटादेर्विनाश इति चेत् । सत्यं, दृश्यते घटाकृते ,न तु द्रव्यस्य,अन्यथा कपालयोरद्रव्यत्वापत्तेः । नच विद्यतेऽद्रव्य· पर्याय । न-च वाच्य-तर्हि किमिति नास्त्येव द्रव्यमनित्यमिति चेद् । नास्त्येव, स्वस्वरूपेण तस्य नाशाभावात् । कथं वक्ष्यन्ति तर्हि यदनित्य द्रव्यमिति । सत्यं वक्ष्यन्ति, पर पर्यायिनाशापेक्षया कथञ्चिद् द्रव्यस्य नाशमभ्युपगम्य । नहि द्रव्यव्यतिरिक्ता सन्ति पर्यायाः,नाशे च तेषा तदव्यतिरिक्तत्वाद् द्रव्यस्यापि स्यान्नाश इति तस्याभिमता पर्यायनाशापेक्षयैवानित्यता, द्रव्यस्वरूपापेक्षया तु न कथञ्चनापि सम्भवोऽस्त्यनित्यस्य द्रव्यस्य । अपेक्ष्यैनमेवाभिप्राय 'भेदादणु'रित्यत्राणोरप्यौत्पत्तिकत्वं परमपुरुषैः स्वीक्रियते, अन्यथा नास्त्यैवाणोर्नाश उत्पादो वा, पर्यायापेक्षयैव तद्भावात् । न च तद्भावाव्ययस्य नित्यलक्षणत्वेन विरोधलेशोऽपि । स्यादेव तेषामसौ, ये प्रागभावाप्रतियोगित्वे सति ध्वसाप्रतियोगित्व अप्रच्युतानुत्पन्नस्थिरैकस्वभावत्व वाहुर्नित्यलक्षणं, तेषा हि विशिष्टनाशे स्वलक्षणपरिभाषयाऽनित्यस्वीकारापत्तेः । यतो हि मनुष्यतया विनश्य देवत्वेनोत्पादे जीवस्य,घटतया विनश्य कपालतयोत्पादे च मृद्द्रव्यस्यावस्थानघटना दुर्घटा, आकाशप्रमुखाना चापरापरावगाहनादेश्चानित्यता, तेषा नूतनस्वभावोत्पादेन स्यादावश्यकी । परिणामवादिना तु द्रव्यत्वापेक्षया नित्यताया पर्यायापेक्षया चानित्यताया स्वीकारान्न विरोधगन्धोऽपि । तद्विपरीतमनित्य । यद्वा-नित्य धर्माधर्माकाशजीवा । यतस्तेषा नास्त्यवयवितया भेदो । ननु छिन्नगृहकोकिलापुच्छादौ कम्पोपलम्भात् कथं नावयविभेद ? इति चेत् । तन्न, पद्मनालतन्तुवदात्मप्रदेशश्रेण्यास्तत्राव्यवच्छिन्नत्वान्न भिन्नावयवित्वम् । अदृष्टवशेन नानामन समायोगे कम्पोपलब्धे. कल्पन, सर्वव्यापित्वमात्मनो यदभ्युपगतपूर्वं तन्निर्वाहमूल,

सर्वथा मनःसमायोगे तु मूलशरीरस्य निश्चेष्टतापत्तिः, यतोऽणु मनस्तेषां, यावच्छरीरव्यापिताभ्युपगमे च मनसो न तत्कल्पनप्रसङ्गः । युगपज्ज्ञानानेकत्वनिवारणं त्वात्मन एकोपयोग-स्वाभाव्यात्, रासनप्रत्यक्षकाले स्पार्शनापत्तिवारणाय प्रतिबन्धक-त्वकल्पनापेक्षयाऽस्यैवोचितत्वात् । अनित्यं च स्कन्धादि द्रव्यं 'सङ्घात-भेदेभ्य उत्पद्यन्ते' इतिवचनात् । पूर्वमेकतयाध्यवसितः स्कन्धो विभक्ततयाऽधुना द्वयमिदमिति प्रतीयते । एकत्वाध्यवसायोऽपि भवति तथैव भिन्नयोः पूर्वमधुना मीलने । न चेदमवयवितयोत्पादविनाश-योरभावे । न चैवं धर्मादौ, तेषां विभागाभावात् । ननु घटाका-शादिव्यपदेशेन भवेदाऽऽकाशादेरप्युत्पत्तिनाशप्रसङ्गेनानित्यतेति चेत्, न तस्यौपाधिकत्वात् । न हि घटादिनाऽऽकाशस्य किञ्चित् क्रियतेऽमूर्त्तत्वात्तस्य । न च घटादेरुत्पत्तिनाशादिनाऽऽकाश-स्यास्ति परावृत्तिर्भिन्नता वोद्योतस्येव जलधारया काचादिना वा । यच्चावगाहदानस्वभावत्वात्तद्भेदेन भिन्नताऽस्य नोद्येत, सा तु न नाभ्युपगम्यते, परं नैतावताऽवयवितयोत्पादविनाशभावौ । यद्वा-सर्वोऽपि पुद्गलास्तिकायोऽनित्योऽणोरपि भेदादुत्पादात् स्कन्धी-भावादिना कथञ्चिन्नाशाच्चेति । द्रव्यत्वेन पुद्गलानामवस्थितेरपि भिन्नावयवित्वभावादेव व्यपदेशः । यद्वा भिन्नभिन्नव्यपदेशभावेन-जीवाः पुद्गलाश्चैतद् द्वयमपि भवत्यनित्यं, नैव धर्माद्या इति ते नित्या इति व्यपदिष्टा ज्ञेयाः । एतादृशं 'यदि'ति सामान्यनिर्देशेन यद् यद् यद्यदपेक्षया तथोच्येत तत्तत्तथा तथा ज्ञेयमिति दर्शयति । यदिति वा जीवादि परमाण्वादि वा । किमेवंविधं?, इत्याह—द्रव्य-पूर्वोक्तस्वरूपं, गुणपर्यायाणामनित्यानां सतामपि नात्र चिन्ता, तेषां द्रव्याधारत्वात् । चकारः पूर्वोक्तपक्षत्रयसमानकक्षताद्योतनाय । तद् द्रव्यलोकं 'जानीहि'ति पूर्वोक्तमत्राप्यनुयोजनीयम् । भिन्नव्य-

पदेशश्चास्य यथावदुत्पादादिस्वरूपपरिज्ञानानन्तरं विवक्षयैतन्नि-रूपणमिति ज्ञापनाय, अन्यथा सर्वस्यैवोत्पादव्ययध्रौव्ययुक्तत्वात्त-च्छून्यस्य चासत्त्वान्नास्त्येव नित्य । तद्विपरीत वा द्रव्यमिति कुत एतदपेक्षया द्रव्यलोकव्यपदेश. सम्भवी स्यात्, परं पूर्वोक्तानुसारेण व्यपेक्षयाऽयं व्यपदेश सम्भवेदिति। गत्यानन्त्यानुलोम्याद्य व्यपदे-शोऽत्रैवं स्याद् । यत· पूर्वोक्तेषु जीवाजीवादिष्वप्यपेक्षयैव व्यपदेश-सम्भव इति। कथ ज्ञेय द्रव्याणां नित्यत्वमनित्यत्व वेत्याहु: स्थितिमपेक्ष्य जीवपुद्गलयोश्चतुर्भङ्गी–

**गइ सिद्धा भविआया अभविअ पुग्गल अणागयद्धा य ।**

**तीयद्ध तिन्नि काला जीवाजीवट्ठिई चउहा ।। २ ।।**

तत्र गम्यते–कर्मवशवर्त्तिभि: प्राणिभिराश्रीयते इति गति – नरकादिनामकर्मोदयसम्पाद्यो जीवपरिणामविशेष । साद्यन्तैव सा। यत उत्कृष्टतोऽपि जीवाना त्रयस्त्रिंशत्सागराण्यायु , तत्क्षये चावश्य गत्यन्तराश्रय । कर्मोदयजन्यपरिणामरूपत्वाच्चाऽऽदिरपीति गति: सर्वाऽपि सादिसान्तैव। न चेमा गतयो जीवाद् भिन्ना, जीवो वा ताभ्यो भिन्न इति जीवस्यैवेय सादिसान्ता स्थिति: पठिता। ननु च कथ तर्हि भणिष्यन्ति या: शास्त्रकृतोऽन्या स्थितयस्ता योजनीया , स्थितीना परस्परपरिहारेणावस्थानादिति चेत्सत्यं, य परिणाम-मपेक्ष्य या स्थितिस्तमपेक्ष्य तत्कथने न परस्पराविनाभावित्वाख्यो विरोधो, घटतया नष्टत्वेऽपि पार्थिवत्वेन स्थितिवत् । एवमत्रापि गत्यपेक्षयाऽऽद्यभङ्गगतत्वेऽप्यन्यापेक्षयाऽन्यभङ्गगतत्वेऽपि नैव विरोध । एकजीवस्यापि द्वितीय साद्यनन्त भङ्गमाहु – 'सिद्धा' इति। तत्र सिद्धयन्ति स्म–निखिलनरामरस्वातन्त्र्य-

सूदनसमर्थज्ञानावरणीयाद्यष्टविधादृष्टदुष्टसृष्टिसमूलकापकषणा-
वाप्ताव्याबाधाद्यपरिमितविशेषणविशिष्टानन्दमयपदत्वात् निष्ठि-
तार्था भवन्ति स्मेति सिद्धाः। न च वाच्य कर्मणामनादित्वान्न
स्यात् क्षय', सर्वथाऽनादित्वस्यानन्तत्वेन व्याप्तेरिति। न तावत्
किञ्चिदपि कर्मानादि, तेपामुत्कृष्टतोऽपि सप्ततिसागरोपमको-
टिस्थितिकत्वात्। तथाच नश्यन्त्येव सर्वकर्माणि स्वस्वस्थिति-
क्षयेणार्वागपि ससारे, पर नवीनवन्धसद्भावान्न निर्वृतिरुत्पद्यते।
न च प्रवाहेणानादेर्न व्युच्छेद । अतीतस्यानादेरपि प्रवाहेणास्त्येव
स, वर्त्तमानक्षणे तदन्तसद्भावात्। न चादृष्टाना क्षय एव न, तथा
सत्यदृष्टाभ्युपगमवैयर्थ्यात् वन्धाभावप्रसङ्गाच्च। अन्यच्च–यथाहि
मिथ्यात्वादिभिर्भवत्येपा वन्धस्तथैव तत्प्रतिपक्षभूतैः सम्यक्त्वा-
दिभिर्निर्जरया च कथ न तन्नाश?, यो हि येनोपचयमा-
प्नोति, तत्प्रतिपक्षसेवनया सोऽपचयमप्याप्नुयादेव। यथाऽपथ्य-
सेवनया वृद्धोऽप्यामय तत्प्रतिपक्षेण क्षयमुपयाति। नच धातव
इव शरीरस्य जीवस्याधारभूतमदृष्ट, किन्त्वौपाधिकमेवेति।
तेपा च सादित्व भवक्षयानन्तर भावात्। न च तेषा तत्त्वक्षय
कदाचिदपि समूलकापकषणात्। कर्मद्रुमाणा नहि कर्मबीजदाहे
भवरूपो भवत्यङ्कुरोद्गम । यदवाचि–

'दग्वे वीजे यथात्यन्त, प्रादुर्भवति नाङ्कुरः। कर्मवीजे तथा
दग्वे, न रोहति भवाङ्कुरः' ॥१॥ न च कर्मरहितस्य पुन.
कर्मणा सङ्ग', आकस्मिकत्वापत्तेर्वन्धस्य। तथाच कृतनाशाकृता-
भ्यागमदोपो। न च क्षीणकर्मणां तृष्णाद्यपि, कर्मविकाररूपत्वा-
त्तस्य, तदभावे च कुतस्तरा भवावतारो। यदाह–

'अज्ञानपाशुपिहितं पुरातनं कर्मवीजमविनाशि । तृष्णाजलाभिषिक्तं मुञ्चति जन्माङ्कुरं जन्तो.' ॥१॥ वन्धहेतवोऽपि मिथ्यात्वाविरतिप्रमादकषाययोगरूपा क्षीणा एव, तदन्तरेण सिद्धत्वाभावात्, क्षीणेषु च तेषु कुतस्तरा विपाक·, तदसत्तायां जात्यायुर्भोगानां सुतरामभाव एवेति सिद्ध सिद्धानामनन्तस्थितिकत्वम् । अन्यैरपि 'नित्य विज्ञानमानन्द ब्रह्मे'ति अनावृत्तिशब्देन चैतदेव गीयते । अत एवैतल्लक्षणमेव प्रोच्यते, यदुत–

'यन्न दु खेन सम्भिन्नं, न च भ्रष्टमनन्तरं । अभिलाषापनीत च, तज्ज्ञेय परमम्पद'मित्यादि । वृहदारण्यकेपि–'स लोकमागच्छत्यशोकमहिम तस्मिन्वसति शाश्वती. समा' इत्याद्युक्तमेवेति । अनेन च य आहुरनादिसिद्धत्व केषाचित्ते निरस्ता. द्रष्टव्याः । यतो हि सिद्धत्वमेव तेषामनुपपन्न, प्रथम असिद्धत्वे सत्येव सिद्धत्वभवनात्, अन्यथाऽतीतकालीनक्तप्रत्ययायोगात् । बन्धननिरोधबद्धव्यवच्छेदाभावे हि न सिद्धत्वं, न चासावनादिरिति कथं सभविनी सिद्धताऽनादिकाललग्न एव केषाचित् कर्ममल इति तेऽनादिसिद्धा इति चेन्ननु किं न सर्वे तथा । नहि विचित्रत्वं युज्यते, जीवत्वाविशेषात् । क्षय एकेषा कथ ? कथ न सर्वेषामिति तु नैव नोद्यम् । ये ये कर्मक्षयसाधनसाधितात्मस्वभावास्तेषामसौ जातोऽस्ति च तथाभव्यत्वेन वैचित्र्यं तेषा । न चानादिसिद्धत्वसाधकः कोऽपि विशेषः । केवलज्ञानादिमन्तश्च तेऽभ्युपगमनीया. । न च क्षपकश्रेणिसाधनकमोहक्षयाभावे । न च क्षपकश्रेणिरन्यस्य चरमभवेभ्यस्तन्नानादिका. सिद्धा. सम्भवन्ति । सम्भवेयुश्च प्रवाहतस्ते तथा । यतोऽनादिर्हि ससारो, न च ससारसद्भावे षण्मासाधिको विरहश्च न भवति सिद्धभावमापत्तौ कस्यचिज्जीव-

विशेषस्येति तथाऽनादितायाः सिद्धानाः, तथापि प्रत्येक ते साद्य-
नन्ता एवेति द्वितीयभङ्गवर्तिन एव । अथ तृतीया स्थितिमाहु-
रुद्दिश्य तद्वतो जीवान्–'भविआय'त्ति । तत्र भव्या–भाविनी
सिद्धिर्येषा ते भव्या योग्या वा मोक्षवधूवरमालायाः ते च ते आत्मा-
नश्चेति भव्यात्मानस्ते चानादिसान्ता एव । योग्यता हि वस्तुन.
स्वभावभूता । स्वभावश्च वस्तुसहसिद्धो । वस्तु च जीवरूपमना-
दीति भव्यताऽपि तथैव । पारिणामिक एवासौ भावो । न चाभव्य.
सन् पूर्वं भवति पश्चाद् भव्यो, भव्यो वाऽभव्य इति । आगमग्राह्य
एवाय । भव्याभव्यत्वादिर्भावः तत्र न हेतुयुक्त्यादिप्रयोगो, विरा-
धकतापत्ते । तदूचिवासोऽनूचाना –

'दुविहो धम्मावाओ अहेउवाओ अ हेउवाओ अ ।

तत्थ अहेउवाओ भविआभविआदओ भावा' ॥१॥ तथा

'जो हेउवायपक्खमि हेतुओ आगमे अ आगमिओ ।
सो समयपण्णवओ सिद्धतविराहओ अन्नो'त्ति। अनादिकोऽप्यसौ भावो
व्यपैतीति चित्रमिति न वाच्यं । कारणता हि तावदेव यावन्न
कार्योद्भवः । कार्योद्भवे तु कार्यरूप पदार्थ । तद्वदत्रापि भव्यता
मोक्षगमनयोग्यतैव, सा चावाप्तौ मोक्षस्य पूर्णवेति नष्टैव । नहि
प्राप्तमोक्षस्यास्ति योग्यतया प्रयोजनं, न च सापि, कारणकाल-
भावित्वाच्छक्तेरिति । नच वाच्य तर्हि किमसावभव्य इति ।
घटतया परिणताया मृदो घटोत्पादनयोग्यताऽयोग्यता वा यथा
न वक्तु पार्यते, योग्यतायाः परिणामादर्वाग्भावात् अयोग्यताया-
श्चोपादानकारणवृत्तित्वस्यात्यन्तमयोग्यत्वात् तद्वदत्रापि । प्रति-
पादित चात एव परममुनिभिः-'नो भविआ नो अभविआ सिद्धा'

इति। कथ नष्टोऽसौ भाव इति चेद्? भवचरमसमयेन सिद्धत्वाद्य-
समयेन वेति गृहाण। घटयोग्यता हि मृदो घटोत्पादेनैव नाश्यते।
चतुर्थभङ्गदर्शनाय तद्वत आहुः– 'अभविअ'त्ति। भव्यविपरी-
तोऽभव्य.। स हि नैवाप्नोति निस्सीमसुखधामाऽपवर्गं, घटत्वमिव
तन्तव। नहि स्वभावोऽर्हति पर्यनुयोगम्। नहि तेषां निर्जरा
नास्ति, ग्रन्थि यावदनन्तश आगमनस्य, द्रव्यत श्रुतसम्यक्त्वस्य च
शास्त्रकृद्भि. अनेकश' प्रतिपादनात्। अभव्यता च न कदाप्युत्पन्ना,
पूर्वं विद्यमानभव्यत्वस्याभव्यत्वावाप्तौ स्यादेव। न च भवत्येवमेव,
नचापि नश्यति कदापि। यदि हि अभव्यत्वपरित्यागेनावाप्तु
स्याच्छक्य भव्यत्वं, स्यान्नाशोऽस्याः। न चासौ सम्भवतीत्यनाद्य-
नन्तोऽसौ भाव.। एव चतुर्धा क्रमेण सादिसान्त-साद्यनन्ताऽनादि-
सान्ताऽनाद्यनन्तरूपाश्चतु प्रकाराः स्थितयो दर्शिता. क्रमशो
गतिमत्ता – सिद्धता – भव्यत्वाभव्यत्वलक्षणाना तथास्थितिमता
दर्शनेन। अथैवमेवाजीवस्यापि चतुर्विधा स्थिर्ति दिदर्शयिषव
आहुः–'पुग्गल' इत्यादि। तत्र पूरणगलनधर्माणः पुद्गलाः।
पृषोदरादित्वादिष्टरूपनिष्पत्तिः। न हि धर्मादीनामस्ति प्रदेशैरुप-
चयोऽवस्थितपरिणामत्वात्तेषा। एकद्रव्यत्वेनान्यद्रव्याभावात्तादृ-
क्प्रचयोऽपि नैव, जीवस्यानेकद्रव्यत्वेऽपि पद्मनालतन्तुवदवबद्धत्वा-
दन्योऽन्यं नान्यस्मिन्नन्यस्य प्रचय। नच विप्रयोगोऽपि प्रदेशाना
तेषा, येनापचयो भवेत्, अनाद्येकरूपत्वेन प्रदेशा भवन्ति जीवस्य
विप्रयुक्ता न ते परमसम्बद्धाः। नचान्यैः प्रदेशैः सयुज्यते इत्यव-
शेषात् पुद्गलानामेव सङ्घातभेदयोग्यत्वादुपचयापचयौ भवत'।
तेनैत एव पूरणगलनधर्माणस्त एव च पुद्गला उच्यन्तेऽन्वर्थसङ्ज्ञा-
ज्ञापनार्थमिदम्। इमे च सादिसान्ताः। यत. स्कन्धस्तावन्नानादिकः
कश्चित्, सङ्घातरूपत्वात्। सङ्घातश्च नातीत्यासङ्ख्येयं कालस-

वतिष्ठते। तावत्येव च स्थिति स्कन्धानामेकरूपेणावस्थाने। स्निग्धरूक्षत्वाद्धि वन्ध। स्निग्धरूक्षत्व च पर्याय, पर्यायाणा च नाविचलत्व। ततो भवत्येवासङ्ख्येयेनानेहसा भेदस्तथा भिन्नः स्कन्धादिरिति युक्तैव सादिसान्तता तेषा, परमाणूनामपि भेदादुत्पत्तेर्नहि स्कन्धदशायामणुता। तथा सति अचाक्षुषत्व-प्रसङ्गात् स्कन्धानामपि, परमाणुप्रचयरूपत्वात्तेषा। असत्या चाणुताया स्कन्धावस्थायामणूना, सा भेदादुपजायते इति तेषा-मुत्पत्तिस्तथापेक्षया। यदा च पुनरन्यैः परमाणुभि स्कन्धैर्वा सयुज्य स्कन्धतया परिणमन्ति तदा स्पष्ट एव परमाणुत्वाभावाद् विनाशस्तद्रूपतया तेषा। नचातिवृत्त्यासङ्ख्येय कालमवतिष्ठते परमाणुरपि तद्रूपतया, ततोऽवश्य परैरणुभि स्कन्धैर्वा सयुज्य स्कन्धत्वारम्भनियमात् स्निग्धरूक्षान्यतरगुणवत्त्वादणूना परिमित-त्वाल्लोकस्य प्रतिजातीयाऽनन्तानन्तस्कन्धसमूहयुक्तत्वाच्च लोक-स्यावश्य तेषा स्कन्धीभाव इति स्कन्धानामणूना च तदवस्थया सादिसान्तत्वमेव युक्त। पुद्गलत्वेनाऽनाद्यनन्तस्थितिकत्वेऽपि तेषा पूर्वोक्तापेक्षया सादिसान्तत्वमविरुद्धमेव, पूरणगलनभाव-स्यानित्यत्वात्। गतिर्विचित्रा सूत्राणामिति वा स्कन्धाणुरिति वक्तव्ये पुद्गला इत्यूचिवास साधारणाभिधानेन। अथ द्वितीयं भङ्ग दिदर्शयिषयाहु —'अणागयद्ध'त्ति। न आगतो वर्त्तमानतामि-त्यनागत। 'एष्यंश्च नाम स भवति-यः प्राप्स्यति वर्तमानत्व'मि-तिवचनात्। स चासावद्धा च कालः। अत्यते इत्यत् ता ज्ञानं पर्याय वा धारयतीति अद्धा। अव्ययमिद अनागताद्धा। असौ च सादि. सन्ननन्त एव। यतो वार्त्तमानिको हि क्षणोऽधुनेति। तत परेषां समयादीनामनागतता युक्तैवेत्यस्यादिर्न चास्ति तस्या-न्तो,वर्त्तनादिर्हि तस्य लक्षणं। न च कदाचनापि भविष्यति सम्भवि

वैतद्यदुत-इद जगद्वर्त्तनाशून्यं भविष्यति । न चेत्तथा, स्पष्टैवानन्त-ताऽस्येति तस्य युक्तमेव सादिसान्तत्वम् । नच नास्त्येव कालो नाम द्रव्याणा या वर्त्तना तामाश्रित्यैतदभिधानस्योपचरितत्वाद् । अत एवोच्यते पारमार्षे–'किमिद भते ! कालुत्ति पवुच्चइ ? । गोयमा ! जीवा चेव अजीवा चेव'त्ति । निर्दिश्यते परममुनिभिरितिवाच्यं । इदानी घटोऽभूत् भरतादिर्भविष्यति पद्मनाभादिरितिव्यपदेश: सनिबन्धनो न स्यादेवं सति । नच ऋत्वार्दिविभागो नृलोके । एतच्चेन्ननु सर्वत्र वर्त्तना । न च जीवाना पुद्गलानामन्येषा चान्याऽन्यपर्यायप्राप्तावस्त्यन्यत् कालात् कारण । अत एव च क्रिया तस्योपकारभूता पापठ्यते मुनिमहत्तरैस्तथा च तद्वच -वर्त्तना परिणाम. क्रिया-परत्वापरत्वे च कालस्ये'ति । अनेनार्वतृतीयद्वीपमात्रवृत्ते: कालस्य किमिति युज्यते द्रव्यतेति निरस्तम् । तत्र तु सूर्यचन्द्रादिगतिव्यङ्ग्यकालस्योक्तत्वात् । वर्त्तनालक्षणस्तु समग्रे भूवलयेऽन्यत्र च कालोऽस्त्येव । पारमार्ष वचन च समयमात्रता ज्ञापयित्वा कालस्यानेकाणुमयतानिरासाय, प्रतिपाद्यते च कैश्चिल् प्रत्येकं लोकाकाशप्रदेशेषु काल्गाणुस्थितिरिति । नचैतद्युक्त । यतोऽणवस्ते मूर्त्ता अमूर्ता वा,आद्येऽणूना मूर्त्ताना वर्तनादिमत्त्वात् तत्कारकान्यद्रव्यस्वीकारापत्ति । स्वतो भावे चादित एवान्येषा तथास्तु, किमेतेनेति । अन्यथा सत्त्वमेव । अन्त्ये, तेषामणुत्वमेव, परिणामवाचकत्वादेतस्य । अथ च 'अणव स्कन्धा श्चे'ति वाचकमिश्रव्याहृत्यपि न पुद्गलास्तिकाय विहायान्यत्राणुतादिरित्यप्यालोच्यमेवालोचनालोचनै: । न च प्रदेशत्वमपि भवति, तथासम्बद्धाना तेषा सम्वन्धे च स्पष्टास्तिकायतापत्ति:। तन्न कालस्याणवो युक्तियुक्ता नापि पारमार्षे सम्मता: अन्ये त्वलोकाकाशस्यापि वर्त्तनायुक्ततामभिमन्य तत्रापि तत्स्वीकारस्यावश्यकता ज्ञापयित्वा वस्तूना वर्त्तनादिपर्यायैरुपचरित एव

कालोऽतएव 'जीवा चेव अजीवा चेव'त्ति व्यवस्थितं पारमार्षम्। वाचकपादा अपि 'कालश्चेत्येके' इत्यनेनारुचिमाहुस्तस्य द्रव्यत्वे इति व्याचख्यु, व्याचख्युश्च प्रत्याचक्षाणा। यदुत–समयमात्रत्वेन तस्यास्तिकायत्वानापत्तावपि जगद्वृत्तित्वेन कथं न सामयिक्यस्तिकायता। यतो विचार्यता स समयलक्षण कालो भवदभिप्रेत सर्वत्रैकत्र वा कुत्रचित् ?, सर्वगत्वे सर्वव्यापकत्वे तस्य द्रव्यत्वाभिमानात् स्पष्टैवास्तिकायता। नह्यणुर्भवति सर्वव्यापक। स क्षणिक इति त्वन्यदेव। एकत्रावस्थाने तु न सर्वत्र वर्त्तना, तदभावे च कुतस्तरा तेषा सत्त्वं, वर्त्तनादियुक्तस्यैव सत्त्वात्। 'उत्पादव्ययध्रौव्ययुक्त स'दितिवचनात्। अन्यच्चाऽस्य द्रव्यत्वे धर्माधर्मादिवदवगाहनाद्यपि स्याद्वक्तव्यम्। नच तत् कुत्राप्युपलभ्यते सम्भवति वा। अत एव चानाख्यायैव कालस्य द्रव्यता 'द्रव्याणि जीवाश्चे'ति द्रव्यसूत्रे उपकारककथनमकारि पूज्यै। नच वाच्य कथ तस्य द्रव्यत्वाभावे उपकारविधायकता ?। उपचरितेन तेन किं कार्यमितिदर्शनार्थत्वात्तस्य। भवति च प्रयोजनार्थ एवोपचारो, निष्प्रयोजनकोपचारस्यासम्भवात्। तत्त्वमत्रत्य बहुश्रुता विदन्ति। अनागताद्धा साद्यनन्त इत्येव प्रकृतम्। चकार समयभेदेन सादिसान्तोऽपि काल। समुदितानागतापेक्षया युक्त साद्यनन्तत्वमिति ज्ञापनाय। अत एव चास्तिकायत्वाभावेपि विवक्षितसमुदायापेक्षया विवक्षितधर्मतोपपत्ति। न चादिभङ्गो वार्त्तमानिक काल उदाहृतोऽत एवोपचाराद्धेतो सम्भवति। अनुपचरिते उपचरितदर्शनस्यायुक्तत्वाद् विचित्रा वा सूत्रगतिरित्येवाऽत्र कारण भवेत्। अथ तृतीयभङ्गदर्शनायाहु – 'तीयद्ध'त्ति। तीतोऽनीतोऽद्धाऽतीताद्धा। अत्र च तीतशब्दोऽतीतार्थतयोक्तो निर्युक्तिकाराणां परमाप्तत्वान्नापशब्दोऽयमिति। प्रयुक्तश्चायमन्यत्राप्यभियुक्तै –'तीतादिपरिच्छेद-

कमल ध्रुव चेति समयज्ञै'रित्यादौ । श्रूयते च सृष्टिविनिश्चया-दावेतस्यानेकश. प्रयोग । यथा हि अवाप्योरल्लोपमाहु केचित्तथा तैरपीतौ क्तान्ते भविष्यत्येतदल्लोप इत्यनुमीयते । नहि श्रुतकेवलिनामनाभोगगन्धोऽपि । 'दिट्ठिवायमहिज्जग'मिति तु दृष्टिवादमधीयत एवाऽय तु सर्वाक्षरसन्निपातीति नात्र वाक्स्खलनासम्भवः । श्रूयते चान्यत्रापि 'तीयाणागयकाले' इत्यादि । असौ चानादि' सन्नपि सान्त एव, यतो नहि जगतां वर्त्तनाया अस्त्यादि , प्रागतथा-त्वापत्तेर्निर्मूलस्योत्प दाभावात् । 'नासतो विद्यते भाव'इति'नाभावो भावतामेति' शशशृङ्गे तथाऽगते'रितिवचनाच्च । न च वाच्यं 'भवति स नामातीत. प्राप्तो यो नाम वर्त्तमानत्व'मितिवचनात् प्राप्तवर्त्तमानत्वस्यैवातीतत्वात् कथमसावनादिरिति । वर्त्तमानता-परिणतेरनादित्वात्, प्रतिक्षण वर्त्तमानतापर्यायजन्यत्वेऽपि वर्तनाया वर्त्तमानत्वं, यतोऽनादिस्ततो नैवास्यानादित्वेऽघटमानता । अनादित्वे सत्यपि चाधुनातनसमय यावत्तन्मर्यादया सान्तत्वमेव । अनादेरनन्त-त्वेन व्याप्तिरिति तु पूर्वमेव निराकृतम् । अथ तुर्यं भङ्ग दर्शयन्त आहु -'तिन्नि काय'त्ति । तत्र चीयन्ते इति 'चितिदेहावासोपसमाधाने कश्चादे'रिति घञि काया इति समुदाया इत्यर्थ । अत्राजीव-स्थितिप्रस्तावादजीवाना काया.– समुदाया कायशब्दवाच्या वा पदैकदेशे समुदायोपचारादस्तिकाया. । कियन्त इति चेदाहुस्त्रय-सङ्ख्याका' । चत्वारस्तावदजीवकाया धर्माधर्माकाशपुद्गला , कालस्य समयमात्रमानत्वान्नास्तिकायता, शेषेषु त्वस्तीना प्रदेशाना काय:– समुदायोऽस्तिकाय इति व्युत्पत्तिलभ्यप्रदेशबहुत्वोपेतत्वा-दस्त्यस्तिकायता, समग्रलोकव्यापित्वाद् । आद्यत्रयाणामनवयवत्वे च कथङ्कार सङ्गच्छते तेषा लोकव्यापित्वं ? । नह्यनवयवोऽप्रदेशो वाणुर्व्याप्नोति लोकस्यैकप्रदेशाधिक भागं अवयवारभ्यत्वं

ह्यवयवित्वमितिचेत्, स्वकल्पनाकल्पितेन नार्थसिद्धिः। यतोऽवयव-वत्त्वमात्रमवयवीत्यस्यार्थः। यद्वा कः किमाह? अवयवित्वमपि भवतु, अमूर्त्तद्रव्याणामपि परिणामाभ्युपगमात्। स्याद्वादिनेति चेदवयवाना तथाविधानादितापरिणतौ कथङ्कार विलयो नादितायाः, 'रूपिण्यादिमानि'ति वचनाच्छेपाणामनादिपरिणामात्, अन्यथा कथङ्कारमेकाद्यवयवावच्छेदेन सर्वव्यापितयाऽभ्युपगते भवद्भिरात्माकाशादौ ज्ञानशब्दादेरुत्पत्ति। नहि निरवयवे सर्वथा स्यादवच्छेदक परमाणोरिवादिमध्यान्त्यविभाग इति। न च वाच्यमवयवित्वेन नाशित्वापत्तेरनित्यता स्यादेषामिति। नहि मूर्त्तानामवयविना घटादीना विनाशो दृष्ट इति सर्वेऽप्यवयविनस्तथेति कल्पयितु युक्त, सूर्यचन्द्रादेरदृश्यमाननाशतया त्रुटेरविनाशाभ्युपगमाच्च कैश्चित्, अवयवित्वावयविना मूर्त्तानामपि कथञ्चिद् वैचित्र्योपगमस्यावश्यकत्वात्, अन्यथा निरवयवस्याणोरन्यद्रव्यारम्भकत्वनियमेन किमिति नाङ्गीकरणीयं स्याद् निरवयवाणामात्माकाशादीनामन्यद्रव्यारम्भकत्व, न चैतदभ्युपगम्यते इति, मूर्त्तामूर्तयोर्वैचित्र्यं यथाऽत्र तथैवावयवित्वेऽपि सति स्यात्तदा को विरोधः?। अन्यच्च—नावयवित्वेन नाश्यता उत्पत्तिमत्त्वेन वा, किन्तु बन्धकारणवैकल्येन। अन्यथा द्वितीयसमय एवावयवित्वेन कार्यस्य नाशापत्ति स्यात्। अत एव च न संयोग-नाशमात्रेण कार्यनाशाभ्युपगमः, किन्तु संयोगविशेषनाशेन, विशिष्टता च तद्व्यपदेशनाशकत्वेन। नहि तन्तुमात्रछेदेन पटो नष्ट इति, प्रत्यभिज्ञानाद्यभावापत्ते। न च भ्रान्त तत्, तथाव्यवहारस्य प्रामाणिकैरपि क्रियमाणत्वाद्। अन्यथा प्रतिक्षणमन्यान्यावयवगमागमेनावयव्यन्यत्वस्वीकारेण स्पष्ट क्षणिकवादाभ्युपगमः स्यात्। स्वीक्रियते चेदात्मादीनामनित्यप्रसञ्जनाय क्रियमाण उपक्रमः

स्वपक्षं समूलघात हन्तुमलम्भूष्णुर्जतिः। वस्तुतस्तु स्वीक्रियत एवात्माकाशादे. कथञ्चिदनित्यता। नहि सर्वथा नित्यमनित्य वा वस्तु समस्ति समग्रेऽपि भुवने, सर्वेषा सतामुत्पादव्ययध्रौव्याक्रान्तत्वेन कथञ्चिन्नित्यानित्यरूपत्वात्। ननु कथ तर्हि घटादिष्वेव नष्टोऽयमिति व्यपदेश, उपलभ्यतेऽपि च तेषामेव दृश्यमानानां नाशो, नात्मादीनामिति चेत्। सत्य, घटत्वादिक हि परिणामो द्रव्यस्य, तन्नाशवदात्मादेरपि मनुष्यत्वादिपर्यायापेक्षयाऽस्त्येव तथात्व,नष्टो मनुष्यो,मनुष्य उत्पन्न इति व्यवहारस्य जागरूकत्वात्। एवमेव घटपटादिनाकाशस्यापि पर्यायेणास्त्येव नाशो। यदेवाकाशं पूर्वं यस्य पटादेरवगाहमदात् तदधुना नैवविध, घटाद्यपसारणात्। व्यपदिश्यते चात एवाभूदत्र घटादिरिति। न चैकत्वादाकाशस्य भ्रान्तोऽय व्यवहार इति, तदवच्छेदेन तु तथात्वाभ्युपगमस्यावश्यकत्वात् अन्यथा कथमुपपादनीय इह न घट इति व्यवहार प्रामाणिकोऽपि। तथाच घटावगाहनदातृतयाऽतीतो योऽसौ परिणाम, स नष्ट इत्याकाशादेरप्यनित्यता स्पष्टैव कथञ्चित्। नन्वेव पर्यायाणा प्रतिक्षण परावृत्तिभावात् स्पष्टैव क्षणिकतेति चेद्, अस्तु का नो हानिः, पर्यायापेक्षया क्षणिकत्वेऽभ्युपगम्यमाने नहि नो विद्वेषः, किन्तु सर्वथानाश एव प्रतिषिध्यते, अवस्थाने च द्रव्यस्य नैव निरन्वयो नाश। कार्यता च समस्तापि पर्यायरूपैव। न चास्ति पर्यायाणामनेकानामेकाश्रयत्वे विरोध, अनन्तोत्पादव्ययानामेकस्मिन् समये एकस्मिन्नेव वस्तुन्यभ्युपगमादाहुश्च मिथ्यात्वान्धतमसाधरीकरणाधिगतान्वर्थाभिधाना दिवाकरसूरय –

'एगदविअस्स बहुआ एगसमयंमि हुंति उप्पाया। उप्पायसमा विगमा ठिइओ उस्सग्गओ नियम'त्ति। नच कार्यतारहित

द्रव्य किंचनेति। सर्वेषामप्यनित्यत्वमापाद्यमानं न नः क्षति विदध्याल्लेशतोऽपि, तन्नावयवित्वेऽभ्युपगम्यमाने क्षुण्णमीक्ष्यते किञ्चिदस्तिकायानामित्यल विस्तरेण। ते चास्तिकाया धर्माधर्माकाशाख्या अनाद्यनन्ता। यतो न तेषामादिर्निरुपादानत्वात् निर्भयत्वात् अरूपित्वाच्च। अन्यथात्मनामपि समुत्पत्तेः स्वीकरणीयत्वापत्तेः, ब्रह्मणोपि वोत्पादाभ्युपगमप्रसङ्गात्। न च तन्नात्मा सुखादिसमवायिकारणतावच्छेदकतयाऽऽत्मसिद्धेर्नित्यस्य स्वरूपयोग्यस्य फलावश्यम्भावनियमात्तस्य सार्वदिकसुखाद्यभावादिति वाच्य। चेतनावच्छेदकतया सिद्धाया आत्मजातेस्तत्र स्वीकारावश्यकत्वात्। नच निर्ज्ञानं ब्रह्मेति, 'नित्यं विज्ञानमानन्दं ब्रह्मे'ति श्रुतिसङ्कोचापत्तेः। अज्ञानाभाव उपचरितं ज्ञानमिति चेन्, न उपचारो हि सति बाधे मुख्यार्थस्य। न च निर्धर्मत्वश्रुत्या बाधः,औपाधिकधर्माभावमात्रप्रतिपादनपरत्वात् प्रकृतश्रुतेरिति। न ज्ञानं कल्पितं तस्मिन्। न चैष नियमः प्रामाणिको नित्यस्येत्यादि। कारणाभावे हि न कल्पकोटिभिरप्युत्पद्यते कार्यम्। न चास्ति नियमोऽसावपि यदवश्यं भवेद्योगः कारणैर्योग्यानां, अनादिस्थितिमतोऽप्यात्मनो मुक्तियोग्यत्वेऽपि नैवापतितः कारणयोगो। यद्वा-अनादेरप्याकाशस्य न कदाचनाऽप्युद्भवति चेतना, स्वरूपयोग्यता नात्रेति ब्रह्मण्यप्यदृष्टाभावे तथाभ्युपगमे का क्षतिर्भवताम्। न च 'आत्मन आकाशः सम्भूत' इतिश्रुत्या विरोध इति। नहि सर्वा अपि श्रुतयो यथार्था एव सन्तीत्यस्माकं ग्रहः, किन्तु तत्प्रणेतॄणां यत्किञ्चिज्ज्ञत्वेन परस्परविरुद्धार्थभाषित्वेन हिंसामयानुष्ठानाधिष्ठायत्वेन दुर्बुद्धिपरिग्रहाच्चाप्रमाणमेव ता, किन्त्वनाग्रहादेव सत्यतीव्राभिलाषादेव वा क्वचित् क्वचित् सवदन्ती व्याख्यायते दर्श्यते वा प्रामाण्यतया। न चैवमर्धजरतीयन्यायानुधावनं स्यात्तद् यदि

तासामेव स्वतन्त्र प्रामाण्याभ्युपगम· कृत स्यादन्धितविवेक-दृशामिव मिथ्यात्वपटलेन, किन्तु सर्वज्ञप्रणीतागमानुसारितयैव तत्प्रामाण्याभ्युपगमान्न किञ्चिदपि नोद्यम् । वस्तुतस्तु स्वत -सिद्धप्रामाण्यस्यापि श्रीजिनागमस्य सवाददर्शनमपरेषा तदाग्रह-शथिलानामपि तद्वस्तु – सत्यताज्ञापनायैवेत्यलमप्रस्तुतेन । न चात्राऽऽकाशस्योत्पत्तिरुक्ता, किन्तु प्राणप्रचारणलक्षणवायु-सञ्चाराय शरीरान्तर्गता नाड्य एवात्मना योगादाकाशवत्य शुपिरत्वादाकाशशब्देनोक्ता । दृश्यन्ते चैतज्ज्ञापकानि वाक्यान्य-न्यत्र । यथा प्रश्नोपनिषदि–'तस्मै सहोवाचाकाशो ह वा एप देवो वायुरग्निराप' इत्यादि, 'सप्राणमसृजत प्राणाच्छ्रद्धा ख वायुर्ज्यो-ति'रित्यादि । मुण्डके च–'एतस्माज्जायते प्राणो मन सर्वेन्द्रियाणि च खं वायुर्ज्योतिराप'इत्यादि, तैत्तिरीये-'अन्नादन्नरसमयात् प्राणो व्यानोऽपान आकाश'इत्यादि । अत एव चात्मानं प्रज्ञापयन्ती जगाद श्रुति -'यस्मिन् द्यौ पृथिवी चान्तरिक्षमोत मन. सह प्राणैश्च सर्वै'रित्यादि । तथा'दिग श्रोत्र भूत्वा कर्णं प्राविशत्', छान्दोग्ये च-अय वावस योऽन्तर्हृदय आकाशस्तदेतत्पूर्ण'मित्यादि,बृहदारण्यके तु'आत्माश्वस्य मेध्यस्य द्यौ. पृष्ठमन्तरिक्षमुदर'मित्यादि । यद्वा–'मनोऽन्तरिक्षलोक' इत्यादिना निर्णय निर्णयविचक्षणैर्यदुत–नेयमा-काशलक्षणस्य भूतस्योत्पत्ति व्यावर्णयित्री श्रुति , किन्त्वौपचारिक कञ्चिदेवाकाश, कथमन्यथाऽग्नेरपामुद्भव इति प्रख्यापने प्रस्वेदो-त्पादो ग्रीष्मेण जायमानो दृष्टान्तयिष्यत् । तन्न श्रुतिविरोध आका-शस्यानादित्वे । अत एव च स्वाभाविकात्मस्वरूपवर्णने उज्जगार श्रुति'रवाय्वनाकाशमसङ्गमरसमगन्ध'मित्यादि । यद्वा–तस्यामेव ब्रह्मानन्दवल्ल्या प्रतिपादितमेव शारीरमात्मानमभिप्रेत्य–आकाश आत्मेति । तन्नाग्रह. कार्यो विपश्चिताऽऽकाशस्योत्पद्यमानत्वे । एवं

नैतस्यान्तोऽस्ति, पूर्वोक्तेभ्य एव हेतुभ्य । एवमेव धर्माधर्मयोरपि ज्ञेयाऽनाद्यनन्तैव स्थिति । एतस्य कायत्रयस्य प्रमाणप्रसिद्धि तु वक्ष्यामोऽग्रत पञ्चास्तिकायसिद्धौ । तेन नात्र तच्चर्चा । यद्यपि कालत्रिकस्यैकत्वविवक्षया तस्यानाद्यनन्तत्व शक्येत प्रतिपादयितुमजीवत्वात्तस्य, पर विचारणीय तत्र स्याद्-यन्न समय व्यतिरिच्य कालो नामाऽस्ति । प्रतिपाद्येतानागताद्धादिवत् तस्यानाद्यनन्ततोपचरिता, पर सत्यनुपचरिते उपचरितपदार्थाश्रयिणी प्ररूपणा न युक्तिसङ्गतेत्येवमुपन्यासोऽनागताद्धातीताद्धयोरुपन्यासस्तु तादृग् साद्यनन्तानादिसान्तस्याजीवस्यानुपलम्भादित्यल विस्तरेण । तथा चाजीवानधिकृत्य क्रमेण सादिसान्त-साद्यनन्तानादिसान्तानाद्यनन्तलक्षण स्थितिचतुष्क क्रमश एव पुद्गलानागताद्धातीताद्धास्तिकायत्रिकमाश्रित्य प्रतिपादितम् । तत्प्रतिपादनेन द्रव्यलोकप्ररूपणावसरे 'नित्यमनित्य च यद् द्रव्य, तद् द्रव्यलोक जानीही'ति निपुणमतिगम्यतया पृथक् प्रतिज्ञातमभूत् तत् सुकरत्वाय व्युत्पादितम् । न च शङ्कनीयमेतद् यदुत—काललोकाभिधेयमेतत्, यतो यदा स्थितिमधिकृत्य व्याख्यायते, तदा स्थितिमता मुख्यत्वेन द्रव्यलोकनिरूपणागता, यदा तु कालत्वेनैव स्यात् प्राधान्य, स्यात्तदा काललोकतेत्यलमप्रस्तुतेन । अथोपसञ्जिहीर्षव आहु —'जीवाजीवठिई चउह'त्ति । तत्र जीवा अजीवाश्च सामान्यत पूर्वोक्तस्वरूपास्तेषा स्थितिर्विवक्षितरूपेणावस्थानकालश्चतुर्धा—चतु प्रकार पूर्वोक्तरीत्या ज्ञेयेतिशेष । यद्यपि अत्र जीवत्वेन जीवाना पुद्गलत्वेनाजीवाना पुद्गलानां चानाद्यनन्तत्व वक्तु शक्यते तथापि पर्यायापेक्षयैतत्स्थितिप्रतिपादनपरतयैवमभिहितवन्त । न च धर्माद्या द्रव्यभूता आत्ता अन्त्ये इति । तेषामपि परिणतेरेव ग्रहणात् । यद्वा—अन्योऽन्यं तेषां त्रयाणा सम्बद्धत्वेनानाद्यनन्तकालावस्थानमपेक्ष्य

प्राधान्यतोऽत्र निर्देश इति नात्र शङ्कावकाश: । एव च जीवाजीवस्थित्यभिधानेन द्रव्यलोकनिरूपणा क्रमप्रापिता समाप्तेति सूचनायाहुर्द्वारमिति । यथाहि—यथार्थनीतिविनिवेशित महानगर नाद्वार सुखाधिगतये । एव प्रस्तुत लोकस्वरूपमिति द्वाराण्यस्य विहितानि । तत्र द्वारमिव द्वारमवतारमार्ग प्रवेशमार्गो वेत्यर्थ. । नामस्थापने तु सुगमत्वान्न द्वारतयाभिमते इति तु पातनिकयैव द्योतितम् । एव द्रव्यलोक निरूप्य क्रमप्राप्त क्षेत्रलोकं विविवूर्षव आहु —

**आगासस्स पएसा उड्ढ च अहे अ तिरियलोए य ।**

**जाणाहि खित्तलोग अणतजिणदेसिअ सम्म ।।४।।**

तत्र आङ-मर्यादया स्वस्वभावेन काशन्ते—शोभन्ते पदार्था धर्माद्या अस्मिन्निति आकाश । व्यञ्जनादिति घञ् । सदावस्थितिमन्तोऽप्यस्मिन्ते न स्वस्वभाव परित्यज्यैतद्रूपता प्राप्ता प्रानुवन्ति प्राप्स्यन्ति वेत्याकाशताऽस्य । अभिविधौ वाऽऽङ । सर्वत्रैवाय, नहि किमपि स्थल, यत्र नासौ स्यात्, लोकालोकव्यापकत्वादस्य । अन्ये न च न मानमत्र, यतो हि तद् अवगाहदानस्वभाव, न च लोकात्परतो न तत्, किं तर्हि परत इति वाच्य, न किञ्चिच्चेदेतदेव भवद्धियाकाशत्व, आवरणाभावरूपत्वात्तस्य । वस्तुतस्तु परत इति सर्वत्रेति च निर्देशादेवाकाशस्य सर्वव्यापकता अवगाहदानाभावस्तु तत्र धर्माद्यभावेन जीवपुद्गलाना गतिस्थितियुगलाभावादेव । नह्यरण्य उदितो रविप्रकाशो नोपयुक्ततामेति, वार्द्धिमध्यपतिता वा वर्षा, एतावता तत्स्वभावतापरित्यागोऽवस्तुत्व वा,एवमलोकाकाशेऽप्यवगन्तव्यम् । श्रुतिरपि 'नैवास्या अन्त गच्छत्यनन्ता हि दिशो दिशो वै सम्राट्' इत्यादिना । ततश्च श्रद्धातव्यमेवैतदेव

निगमकुशलै । यत्तु—अलोकाकाशप्रविष्टस्य सततोर्ध्वगमनं मोक्ष इति जैनाभिप्रायेणोज्जुघुषुर्वाचस्पत्याद्यास्तदुन्मत्तप्रलपितमिवानादरणीयमेवानुपासितगुरुकुलाना वैतण्डिकाना भवत्येवैवविधा हास्यजनिका क्रिया । यतो नहि तेन जैनेन्द्रशासनलवोप्याघ्रातोऽपि । नैव भवति चाशतोऽपि पीतपीयूषाणा विषविषमोद्गार । एतत्तु कियन्मात्रमेव तेषामज्ञान, यावन्न तै कर्मणामन्वयोऽप्यत्रवुद्धो जैनाभिमतो, योऽववुद्धचते जैनशिशुभिरप्यादावेव । अनेन च तेषा केवलमाविर्भवति परमतमनाघ्रायापि तत्खण्डनमात्ररसिकता, कथमन्यथाऽनभिमत जैनानामशतोऽपि विवृत्याभिमततया व्याख्यायेरन् । न चाग्रहमात्रविजृम्भितमेतत् । यतो नहि खण्डनमेतस्य विदधे, किन्तु केवल मयूरनृत्यवत् स्वचातुर्यमात्र प्रकाशित, निराकृतोऽशस्त्वनेनैवावगम्यता यत् कथङ्कार समर्थितो भविष्यति, पर पारम्पर्यमेवैतदेतेषां । भाष्यकारापसदेनापि तथैव स्वकपोलकल्पनाविजृम्भित जीवस्यानन्त्यावयवत्वमपि प्रदर्शितमेवानाम्नात जिनमते । यदि चेन्न भेदोऽनन्तासङ्ख्ययो सम्यक् तर्ह्यवगाहित निरङ्कमप्यार्हत मत दूषणीयधियापि यन्मेरुसर्षपयोरिवातिमहदन्तरान्वितयोरपि न लक्षीचक्रे भिदा । तेन लोकव्यवहारेण तथेति शिवमस्तु तस्मै,तेभ्यो वा सूक्ष्मतमवुद्धिविभवधारणपटिष्ठताख्यातिमागृह्यापि प्राकृतजनसमानाचरणपटुभ्यो, यत् स्वयरुचिवचनोद्गारशोभनमालालङ्कृतोरस्कतया मोदन्ते इत्यलमपरवुद्धिमान्द्यप्रदर्शनेन । लोकालोकव्यापकमाकाशमिति लभ्यते द्वितीयया व्युत्पत्त्या । अथ लोकालोकतया विभागस्तर्ह्याकाशस्येति चेद्धर्माधर्माद्यन्वित लोकाकाश, केवल त्वलोकाकाशम् । अनेनापि गेहेनर्दिनस्ते दूरतो निरस्ता एवावसेया । य आहुर्जैनाभिमन्तव्यमुद्दिश्य यत्—सासारकजीवाश्रयो लोकाकाशोऽलोकाकाशस्तु मुक्तानामाश्रय इति ।

लेशतोऽप्येतादृशस्यासम्भविनो विरुद्धस्योल्लेखस्यादर्शनादप्रतिहत-साम्राज्ये आर्हतशासने । एतदेव च साम्राज्यमार्हतशासनस्याभि-नन्दनीयमितरेषा, यन्न तत्र क्वचिदपि स्वकपोलकल्पनया विकल्प्य पराभिमततया दर्शितम्, परैर्यथा 'समूलो वा एष परिशुष्यति योऽनृतमभिवदती'त्युद्घुष्यमाणैरप्यनेकश तज्जैनैरेवाभिमत सम्यक्तयोपनिपद्ग्रन्थो यत्सत्यान्न प्रमदितव्य कथ प्रमाद्येरन्न-न्यथा तदभ्युपगम्यापि । धर्मादिरहितत्व च कथमलोकाकाशस्येति त्वग्रे पञ्चास्तिकायव्याख्यायामनुसन्धेयम् । तस्यैवविधस्याकाशस्य प्रदेशा -प्रकृष्टा अविभाज्या केवलिधियापि देशा-अवयवा प्रदेशा । नहि येनावच्छेदेन वा घटादेरवगाह ददाति तेनावच्छेदेन तदभावा-वस्थान पटाद्यवस्थान वेति स्पष्ट एवाकाशस्य सप्रदेशत्वम् । यद्यपि चाकाशस्यानन्ता एव प्रदेशा, 'आकाशस्यानन्ता' इति पारमर्षप्रामाण्यात् पूर्वोक्तयुक्तेश्च तथाऽप्यत्र लोकप्ररूपणस्य प्रस्तुतत्वाल्लोकाकाशस्यैव ते ग्राह्या, अन्यथा पुरस्तान्निर्दिश्यमान-विभागत्रयस्यासामञ्जस्यापत्ते । ननु केय चातुरी नूतना यदुत—क्षेत्रलोक प्रस्तावयित्वा द्रव्यभूतस्याकाशस्य निरूपणम्, स हि द्रव्य-लोक एव, परिपठितश्च तिन्नि कायत्ति वाक्येन । पूर्वमेव तत् क्षेत्र-लोक एव वक्तुमुचितो यथार्थख्यानख्यातयशसा निर्युक्तिकाराणा-मिति चेन् ननु मा भवन्तस्त्वरिषत क्षमन्ता वैकमपराधमेन निर्युक्ति-काराणाम् । तत्त्वतस्तु न क्षेत्रमाकाशादन्यदिति प्रस्तुतमाकाशम् । यत 'क्षि निवासगत्यो' रिति तौदादिको धातु । तस्मात् 'हुयामाश्रुव-सिभसिगुवीपचिवचिधृयम्यमिमनितनिसदिछादिक्षिक्षदिलुपिपतिधू-भ्यस्त्र' (४५१) इत्यौणादिकोऽधिकरणे त्रप्रत्यय । 'स्ताद्यशितोऽत्रो-णादे' (सि ४।४।३२) रिति त्रवर्जनान्नेट् । तथाच क्षियन्ति धर्माधर्मा स्तिकायौ जीवा पुद्गलाश्चास्मिन्निति क्षेत्रमिति व्युत्पत्तेराकाशमेव

क्षेत्र, नान्यत्, तत्रैव 'धर्माधर्मयो कृत्स्ने' 'एकप्रदेशादिषु भाज्य पुद्गलाना' 'असङ्ख्येयभागादिषु जीवाना'मित्यनघसूत्रत्रयीनिर्देशेनावगाहनप्रतीते । पठ्यते च उणादावपि-'क्षेत्र भार्या कर्षणभूमि शरीरमाकाश चे'ति । 'न विणा आगासेण कीरइ जंकिंचि खित्तमागास'तिवचनाच्च क्षेत्रव्यपदेशबलेनैव पृथक्क्षेत्रलोकव्यपदेशोऽन्यथा गतार्थ एव द्रव्यलोकेनेति । यद्वा-क्षेत्रस्यैकविधत्वेऽपि औपाधिकोऽस्त्येव भेद । यथाऽऽकाशस्य घटापटदिना जलस्य वा नदीकूपतटाकादिना । तद्वदेकरूपस्याप्याकाशस्य शुभाशुभमिश्रपुद्गलादिसयोगभेदाद् भिन्नव्यपदेशार्हत्व स्यात्तदा नानौचितिपदवीमञ्चत्यशतोऽपि । व्यक्तीभविष्यति चागत एतदिति । एवमेव कालेऽपि समयादिकेऽवगन्तव्यम् । उत्सर्पिण्यादिको हि काल आयुष्कादीना वृद्धिकृद्, इतरस्तु विपरीतो, न चासौ समयमूलकत्वात् तदनथात्वे कारण च कालोपि तन्न तत्रापि शङ्कालेशो विधेय । क्वैत इत्याहु - 'उड्ढे अ अहे अ तिरियलोए अ' त्ति । तत्रोर्ध्व-उपरिवर्त्ती पदसमुदायोपचारादुपरिवर्त्तिलोक तस्मिन्, अधश्चाधोवर्तिनि लोके, तिर्यक्च तिर्यग्वर्तिनि लोके च ये आकाशप्रदेशा, तान् क्षेत्रलोक विजानीहीति सम्बन्ध । अत्र निर्दिष्ट लोकत्रैविध्य परिज्ञाय तद्वर्त्तिन आकाशप्रदेशानूर्ध्वादितया व्यपदेष्टु शक्नुयादिति तन्निरूपणार्थ सङ्क्षेपेण प्रसङ्गानुगत लोकस्वरूप क्षेत्रतो व्युत्पाद्यते । तत्र प्रथम तावदवधेयमिद, यदुत-यदि न निर्दिष्ट स्यान्नियमितो लोकभाग, स्यादेवानियमित ऊर्ध्वादिविभाग इति तान् निर्दिदृक्षयोच्यते-तिर्यग्लोके—असङ्ख्ययावत् शुभनामभृद्द्वीपसमुद्रात्मके सममध्यभूभागे योजनशतसहस्रविष्कम्भो जम्ब्वोपलक्षितो जम्बूनामा द्वीप प्रत्यक्षीक्रियमाणोऽस्ति । तस्यापि सममध्यभूभागे विदेहक्षेत्रान्तर्गतदेवकुरूत्तरकुरूक्षेत्रयोरन्तराले सममध्यभाग एव त्रिलोकप्रविभक्तमूर्त्ति-

मेखलात्रयकाण्डत्रयशोभितशरीर सुराचल , तस्याधस्तने वज्रलक्षणे प्रथमक्काण्डे सममध्ये तिरश्चिनलोकस्यास्ति प्रदेशाष्टक व्यवस्थि-तदिगादिदेशकत्वात् दिगादिप्रभवभूतम् । तदुक्त–'एस पहवो दिसाण एसेव भवे अणुदिसाण पी'त्यादि । अत एव लोकमध्यमपि तत्रैव व्यपदिश्यते, तदाह–'रयणपहाइघणोदहि तणुसखासखभाग-मइगतु । तत्थ य चउदसरज्जुमज्झ'न्ति । रुचकाकारेण गोस्तना-कारेण प्रदेशानामवस्थानाद् अष्टाना रुचक इति सञ्ज्ञेति तदेव मध्यम् । अत एव लोकमध्यादूर्ध्वाधआदिव्यवस्थाया नियमात् सत्तुड्ढसत्ताहो'त्ति व्यपदिश्यते । न सौक्ष्म्यस्थौल्यादिवदणुस्कन्धाना-मापेक्षिकोऽत्रोर्ध्वादिविभाग इति । नच तापक्षेत्राश्विदनियमितता । यतो हि परिभ्रमन्मेरु प्रदक्षिण कुर्वन्नागच्छत्यादित्य , सा पूर्वेतिव्य-पदेशेन सर्वत्रानियमितपूर्वादिदिशा व्यवस्थानाद् । अत एव पठ्यते- 'सव्वेसि उत्तरो मेरू' इति । अन्येपि सर्वेषामेव वर्षाणा मेरुरुत्तरत स्थितो, अत्रवर्षाणामिति क्षेत्राणामिति, 'वर्षस्तु द्वीपागवृष्टिषु' इति कोशोक्तेरिति । अत्र तु नियतत्वाद् रुचकस्य, न तथाऽनियमित-तोर्ध्वाधस्तिर्यग्भागानाम् । अनेन ऊर्ध्व गच्छन्त्या. कीटिकाया उपरितनोऽधोभागो भूमिश्चोपरिभाग इत्यनियतैवोर्ध्वादिदिगिति जडशेखरप्रलापो निरस्त । अथैव लोकस्य मध्यमूर्ध्वतादिबोधाय निरूप्य प्रथम तदाकृतिराख्यायते, येन स्याद् बाहुल्यादिपरिज्ञान तस्योर्ध्वादौ'वइसाहठाणट्ठियकडित्थकरजुगनरागिई लोगो'त्ति । अन्यत्रापि लोकपुरुषोऽय वैशाखस्थानस्थ पुरुष इव कटिस्थकरयुग्म इति च । एव समुदायेनाकृति निर्दिश्यापि बालबोधाय अपरथापि निर्दिश्यते–'अहमुहमहमल्लगट्ठियलहुमल्लगसपुडसरिच्छ'त्ति । अत्राधोमुखं महन्मल्लकं यत् स्थाप्यते, पश्चात्तदुपरि लघुमल्लक-सम्पुटं, भवति चोभाभ्यां याऽऽकृति. तया सदृशो लोकस्य सम्पूर्ण-

स्याकारो, वैशाखस्थानस्थो न्यस्तकटिकरयुग्मोऽप्याकारेण पुरुष एतादृश एवाकार। इति नच वाच्य कथममूर्त्तस्याकार, सस्थानस्य पुद्गलधर्मत्वादिति । स्वनन्त्राकाराभावेऽप्यौपाधिकस्य तस्यानिषेधात् । अय च चतुर्दशरज्जुप्रमाण ऊर्ध्वाध । यदाह–'सो चउद्दसरज्जुच्चो'त्ति । आद्यन्तभागेन मर्यादामप्याह–'मघवइतलाउ जा सिद्धि'त्ति । अनेन अस्योच्चत्वे ऊर्ध्वाध शब्दाभ्यामुपरितनावस्तनौ भागावेव प्रज्ञाप्येते, न तूर्ध्वादिलोक इति ज्ञापितम् । लोकप्रमाण चानेन पारमर्षप्रधानेन प्रवचनेनावगन्तव्यम्, तथाहि–'लोए ण भते! के महालए पन्नत्ते, गोयमा! अयण्ण जबूद्दीवे दीवे जाव परिक्खेवेण० तेण कालेण तेण समएण छ देवा महिड्ढीया जाव महेसक्खा जबूद्दीवे दीवे मदरपव्वए मदरचूलिय सव्वओ समता सपरिक्खित्ताण चिट्ठिज्जा, अहे ण चत्तारि दिसाकुमारिओ महत्तरियाओ चत्तारि वलिपिडे गहाय जबूद्दीवदीवस्स चउसुवि दिसासु वहियाभिमुहीओ ठिच्चा ते चत्तारि वलिपिडे जमगसमग वहियाभिमुहे पक्खिविज्जा, पभू ण गोयमा! ताओ एगमेगे देवे ते चत्तारि-वलिपिडे धरणियलमसपत्ते खिप्पामेव पडिसाहरित्तए, तेण गोयमा! ते देवा ताए उक्किट्ठाए जाव देवगतीए एगे देवे अहोभिमुहे पयाए, एव दाहिणाभिमुहे एव पच्चत्थाभिमुहे एव उत्तराभिमुहे एव उड्ढाभिमुहे एगे देवे अहोभिमुहे पयाए। तेण कालेण तेण समएण वाससहस्साउए दारए पयाए, तए ण तस्स दारगस्स अम्मापियरो पहीणा भवति, नो चेव ण ते देवा लोगत सपाउणति, तएण तस्स दारगस्स आउए पहीणे भवति, नो चेव ण जाव सपाउणति, तएण तस्स अट्ठिमिजा पहीणा भवति, नो चेव ण० तएण तस्स दारगस्स आसत्तमे व कुलवसे पहीणे भवति, नोचेव ण० तएण तस्स दारगस्स नामगोए वि विप्पहीणे भवति, नो चेव ण । तेसिण

भते ! देवाण गए वहुए अगए वहुए ? । गोयमा ! गए बहुए नो अगए वहुए, गया से अगए असखेज्जइभागे, अगयाओ से गए असखेज्जइगुणे, लोए ण गोयमा ! एमहालए पन्नत्तेत्ति । अत एव रज्जुव्यपदेशे वहुका असख्यातकोटाकोटचो योजनानामुच्यतेऽनूचानप्रधानैः । 'उद्धारसागराण अड्ढाइज्जाण जेत्तिया ममया । दुगुणपवित्थरदीवोदही य रज्जु य एवइय'त्तिवचनात् । न चासौ सर्वत्र समबाहल्य किन्तु विषमबाहल्यो, यत आह–

सग रज्जु मघवइतला पएसहाणीउ महियले एगा । तो वुड्ढि वभि जा पण पुण हाणी जा सिवे एग'त्ति । क्व क्व कियद्बाहल्योऽसौ रज्जाविति तद्विज्ञानाय पूर्वमहर्षिप्रतिपादित खण्डाद्युच्यते–प्रथम कोष्टककरणविधि दर्शयति-'सगवन्नरेहतिरिय ठवसु पणुड्ढ च'त्ति । कियद्भागमिद खण्ड रज्जोरित्याह–'रज्जु चउअस'त्ति । अत एव रज्जोरेखापचक अपवरकचतुष्कस्य भित्तिपञ्चकवत् । सर्वत्र समबाहल्यस्य सञ्ज्ञाविशेष सप्रमाण निर्दिदिक्षुराह–'इगरज्जुवित्थरायय चउदसरज्जुच्च तसनाडी'त्ति । अथ विषमबाहल्यज्ञानाय खण्डकसङ्ख्यामाह–

"उड्ढे तिरिय चउरो दुसु छद्दुसु अट्ठ दस य एक्किक्के ।
२-८ २-१२ १-८ १-१०
वारस दोसु सोलस दोसु वीसा य चउसु पुढो ॥१॥
२-२४ २-३२ ४-८०
पुणरवि सोलस दोसु वारस दोसु च तिसु दस तिसुट्ठ ।
२-३२ २ २४ ३-३० ३-२४
छ द्दुसु दुसु चउ खडय सव्वे चउरुत्तरा तिसया ॥२॥
२-१२ २-८ ३०४

एवमूर्ध्वलोकखण्डान्याख्यायाऽधोलोकगतान्याह–

ओयरिय लोगमज्झा चउ चउ ठाणेमु सत्तपुढवीसु ।
चउर दस सोल वीसा चउवीसा छवीस अडवीसा ॥१॥
१६ ४० ६४ ८० ९६ १०४ ११२-५१२

प्रमाणमाहाऽधोलोके खण्डाना–'अह पणसय वारुत्तर खड्डुअ'त्ति। समग्रखण्डसङ्ख्यामाह उभयोर्भागयोर्मीलिता– 'सोलहिअ अट्ठसय सव्वे'त्ति। अथैनस्मिन् पूर्व मध्यतया निर्दिष्टो लोकस्य यो रुचकः स क्व? इति त मध्यभागलक्षणगौणनाम्नाऽऽह–'घम्माइ लोगमज्झो जोयणअस्सखकोडीहि'ति। अथोपरितनोक्तखण्डरीत्याऽधोलोके यद् बाहल्य यस्या नरकपृथिव्यामायात रज्ज्वा तत्सङ्ख्याक्रमानुसारत आकृति चाह–

'सगनरया इग १ ढाइय २ चउ ३ पण ४ छग ५ सड्ढ छ ६ सग ७ रज्जुपिहो। इक्किक्करज्जुदीहा अहो अहछत्ताइछत्तठिई ॥१॥

अथोर्ध्वलोके कल्पग खण्डप्रमाणमाह–

छमु खडगेसु अ दुग चउसु दुग छमु अ कप्प चत्तारि।
चउसु अ चउ सेसेसु अ गिविज्जणुत्तरयसिद्धिते ॥१॥

एतदेव रज्जुसङ्ख्यया निर्दिशन्नाह–

'सोहमंमि दिवड्ढा अड्ढाइज्जा य रज्जु माहिंदे।
चत्तारि सहस्सारे पणुच्चए सत्त लोगते'त्ति।

अथोर्ध्वलोकाधोलोकयोर्मध्यभागमर्थज्ञातमपि स्पष्टयति सार्धगाथया

'रिट्ठमि बभ तइयमि पत्थडे उड्ढलोगद्ध।
पकाए अवगासस्स अतरग साइरेगमइगतु ।

तत्थाहोलोगमज्झ भगवइअगमि निद्दिट्ठ॥ति एव तिर्यग्लोकमध्यमपि पृथग् व्यपदिश्यते–'मज्झ तु तिरियलोगस्स मेरुम-

ज्झमि रुयगठाणंमि'त्ति। रुचकस्तु लोकमध्यनिर्देशाधिकारे व्याख्यात एवेति। अय कियन्माना एते के च तत्र तिष्ठन्तीति गाथयैकया निर्दिदिक्षुराह–

'सगरज्जु १ जोयणसया अठार २ ऊणसगरज्जुमाण ३ इह।
अह १ तिरिय २ उड्ढलोया ३ निरय नर सुराइ भावुल्ला ३ ॥१॥

एतदेव स्पष्टतरमाह अवस्थानं तद्वता निर्देशेन–

अहलोइ निरय असुरा १ वतरनरतिरियजोइसतरुग्गी।
दीवुदही तिरियलोए सुरसिद्धा उड्ढलोगमि॥ तदेव सप्रपञ्च निर्दिष्ट ऊर्ध्वादिभेदो यो लोक तत्र ये आकाशप्रदेशा इति प्रकृत। चकारास्त्रयोपि अवान्तरभेदपरिग्रहाय, अनेकविधाश्च ते प्रत्येक भेदाश्चैतेपामधस्तिर्यगूर्ध्वाना सप्तानेकपञ्चदशविधत्व व्याख्याप्रज्ञप्त्यादिभ्य सविस्तरमवसेया। तद्भेदनिवासिप्रभृतिनिदर्शने स्यादतिमहान् विस्तर इति विरम्यते। एते किमित्याहुर्निर्युक्तिकारपादा–'खित्तलोग विजानीहि त्ति। क्षेत्र पूर्वोक्तस्वरूप तदेव लोको विवक्षितत्वात्तस्य क्षेत्रलोकस्त विजानीहीति। ते समुदिता ये ऊर्ध्वाधस्तिर्यग्लोकवर्त्तिन आकाशप्रदेशा तान्। अनेनैकवचनेन समुदायोद्भवा ह्येषा सञ्ज्ञेति ज्ञापयन्ति, समुदायकृता च सञ्ज्ञाऽवयवेपि स्यादेवेति प्रत्येकस्य तथात्वे न कोपि विरोधः। न च वाच्य किंनिमित्त एपामूर्ध्वादिविभाग, आकाशस्य सर्वत्र समावस्थत्वात्। पूर्वप्रतिपादितस्वरूपादूर्ध्वादिक्प्रभवाद्योर्ध्वानुगताकाशश्रेणि सा तथा। अन्याऽन्याविधा। पूर्वाद्यन्वितास्तु तिर्यगिति। यद्वा–उत्तमपुद्गलावस्थानतयोर्ध्व, मध्यमपुद्गलान्वितस्तु तिर्यग्, अशुभान्वितस्त्वधोलोक। 'असुहो अहोत्ति भणिओ दव्वाण

तेणहोलोगो' इत्यादिवचनात्। नच वाच्यमधोलोकेऽप्यसुरादय उत्तमा ऊर्ध्वं चैकेन्द्रियादिभावात् कथमेतदिति। 'ओसण्ण'मिति वचनात् वाहुल्याभिप्रायकस्यैतस्य कथञ्चिदपि विरोधानाघ्रातत्वात्। यद्वा—शुभाशुभाण्वादिसद्भावेऽपि स्वस्वादृष्टानुसारेणैव परिणमन्ते, कथमन्यथैकत्रैवावस्थितानामनेकधा स्वस्वादृष्टानुकूलविपाकोद्भवो युक्त स्यादिति। अत एवोच्यते-'नेरइयाण असुभा पोग्गला असुभे पुग्गलपरिणामे, असुरकुमाराण सुभा पोग्गला सुभे पोग्गलपरिणामे जाव थणियाण, पुढविकाइया जाव तेइंदिया' इत्यादि। पुद्गल—परिणामोभयग्रहणमेव ज्ञापयत्येतत् स्थानाङ्गे च-अत एवाशुभा पुद्गला अन्धकारकर्त्तार इति। स्पष्ट चैतदाकरे। अत एव च लोह-लोहोपलवज्जीवाना तथाविधादृष्टेन स्वयमेव भवान्तरोत्पाद नरकान्धकारे प्रतिपादित भगवद्भि। ननु क्षेत्रलोक आकाशप्रदेशा ,ते चारूपिणोऽरूपिपदार्थज्ञान च न साक्षात् छद्मस्थाना भवति, तत्कथमेतत्प्रत्येय्यमित्याह—अणतजिणदेसिय सम्मति। तत्र जयन्ति रागद्वेषमोहलक्षणानन्तरङ्गारातीनिति 'जीण्शीदीवुध्यविमीभ्य कि [२६१] दि'ति किति ने जिना-अर्हन्तः अनन्ता-अनन्तसङ्ख्याका। ननु कथ परिमितकालेनैतावता सद्भाव? इति चेन् न,कालस्यानादित्वेन प्रत्युत्सर्पिण्यवसर्पिणि च चतुर्विंशति-चतुर्विंशतिभावात् स्यादेवानन्ता सत्त्वासाधारणोपकारपरायणतीर्थप्रवर्तनपरास्तीर्थकरा अनन्ता , किमुत केवलिन । यद्यपि जिनवरस्य केवलालोकावलोकितलोकालोकस्य करामलकन्यायेनास्त्येव स्वत प्रामाण्य, अत एव च 'केवलिपन्नत्तो धम्मो लोगुत्तम' इत्यादि परिपठ्यते, तथापि न तेषा मतभेदो, यथास्थितपदार्थप्रकटनपटुक्षायिकभावाप्तनिखिलज्ञेयसार्थसाक्षात्कारस्वभाव केवल ह्येकविधमेव सर्वेषा यतो, भवति हि क्षयोपशमवतामेव यथास्थि-

तार्थवादित्वेऽपि क्षयोपशमतारतम्यादवबोधवैचित्र्य, न त्वेषामिति-ज्ञापनायाऽनन्तेति । तैर्देशित—ससुरासुरमनुजाया पर्षदि प्रज्ञापित, एन क्षेत्रलोक विजानीहीति योजना कार्या । अनेनैतज्ज्ञापयति यदुत-नावबुद्ध यत्,न सम्यक् तत् परेभ्य प्ररूपयेत् । प्ररूपयेच्चेद् यथालाभ-मुदाहृत्यैव । अत एव च सर्वश्रुतस्कन्धानामादौ नन्दीव्याख्यान प्रायेण क्रियते, मङ्गलमपि चैतदर्थमेव शास्त्रस्यादौ । यन्नात्र विवृतोऽर्थ स्वमनीषिकया, किन्तु श्रीमदकलङ्कज्ञानसम्पत्समन्वितश्रीजिनवरे-न्द्रोपदेशानुसारेणेति ज्ञापित तेन स्यात् । अत एव च गुरुपर्वक्रम-लक्षण सम्बन्धमभिधेयतापदवीमञ्चतीत्यभिदधुरभिधेयतात्पर्य-विद । यतस्तैर्महापुरुषै प्रणीतमपि न गुरुपर्वक्रममन्तरेण स्व यावदायातमिति, तज्ज्ञापनेनैव व्याख्येयप्रामाण्यतेत्यलम्प्रसङ्गेन । स्वबुद्धिप्रज्ञापितमर्थमन्वाख्यायता चानन्तकेवलिश्रुतधराद्याशात-नापत्तिश्च, या श्रीमद्भगवत्याख्याता साप्यनेनावेदिता बोध्या । अनन्तकेवल्यादिप्ररूपिताद् वितथार्थभाषित्वेन तथात्वस्यावश्यक-त्वात् । न चैतादृशे ऽरूपिण्यर्थे यथा तथावगम सम्पद्यते किन्तु श्रद्धानेनैवेतिज्ञापनाय सम्यगिति । अन्यथा सर्व एव धर्मादि सूक्ष्म-बुद्ध्यैव ज्ञेयोऽन्यथा तु धर्मबुद्ध्यैव तद्विघातप्रसङ्गात् । यत आहु. प्रवचनानुयोगप्रधाना -सूक्ष्मबुद्ध्या सदा ज्ञेयो, धर्मो धर्मार्थिभिर्नरै । अन्यथा धर्मबुद्ध्यैव, तद्विघात प्रसज्यते ॥ इति । यद्वा—सम्यगिति वचनेन तस्यानुमानप्रमाणज्ञेयताऽविसवादिता च ध्वन्यते । ननु चाकाशस्यानन्तप्रदेशमयत्वेऽप्यसङ्ख्येया एव लोकाकाश इति प्रति-पाद्यते, जीवपुद्गलाश्च तन्मध्यवर्त्तितया अनन्तानन्ताश्च ते, तत् कथमेषोऽर्थ उपपद्येतेति चेत्, सम्यक्पर्यन्वयुङ्क्षत भवन्त । जीवास्तावद् द्विविधा—ससारिणो मुक्ताश्च । तत्राऽन्त्यास्तावद् 'असरीरा जीवघणा' इत्यादिवचनात् दीपोद्योतवत् एकस्मिन्नपि

नर्तक्यादिवस्तुनि अवेक्षकाक्षिप्रचयप्रच्चावतिष्ठन्ते इति नैतेषा परिमितेऽपि क्षेत्रेऽवस्थानमसङ्गत । परैरपि काल-खात्मदिशा सर्वगतत्वाङ्गीकारेण स्वीकृतमेवैतदेव-यन्नामूर्तानामवकाशरोधित्व-मिति । ससारिणोऽपि द्विधैव-साधारणा प्रत्येकाश्च । तत्राप्याद्या: तावत्तथाविधनामकर्मोदयनाथवन्तोऽन्योऽन्य सम्पिण्डिता एकस्मिन् कायेऽवतिष्ठन्तेऽनन्ता, असङ्ख्येयान्येव च तेषा शरीराणि । न च वाच्य कथ तेषामनन्ताना जीवानामपि तथाविधाया सूक्ष्मा-यामेकस्या तनाववकाश सम्भवति । नासाध्य किमपि कर्मभिर्यथा जीवत्येव मातु कुक्षौ घनान्धकाररुद्धाया वाय्वादिगमागमवर्ज्याया जीव । न चावाप्तजनु कथमपि क्षणमेक तथा स्थातुमल स्यात् । यद्वा-जीवाना तावदमूर्त्तत्वान्नावकाशमानत्वे विरोधलेश, कर्मा-द्यणूना पुरस्ताद् वितीर्यमाणपुद्गलावगाहसमाधानेनैव समाधेय-मन्त करणमिति । अन्त्यानामपि चासङ्ख्येयान्येव तानि तेषा सदेवासुरमनुजानामपीति न किमपि चर्च्यमत्र । पुद्गलाना मूर्त्त-त्वादवकाशरोधकत्वाच्च कथमेतावत्तामतिबहूनामेतावत्याकाशे तदपेक्षयाऽत्यल्पतरपरिणामेऽवगाह इति चेन् मा भवन्त त्वरिषत स्माऽववीयता तावद् भवद्भिरेतद्यदुत-द्विधा पुद्गला - अणव स्कन्धाश्च । ननु चतुर्विधा पठ्यन्तेऽन्यत्र स्कन्धदेशप्रदेशपरमाणु-भेदेनेति चेत् । सत्य, भण्यन्ते परमुपचारतो व्यपदेशभेदविवक्षातो वा । यतोऽवयविनोऽखण्डस्य कतिचिदवयवसमुदाय तत्सम्बद्ध एव भिन्नो विवक्ष्यते, तदाऽसौ देश इति व्यपदेशमर्हति, नत्वेताव-ताऽस्य भिन्नत्व । एवमेव सयुक्ता अवयवा एव परमाणव प्रदेशा इत्युच्यन्ते । न च प्रदेशपरमाण्वोर्विना सम्बन्धमस्ति कश्चिद् भेद. । तत्र नायान्ति अननन्ताणुसमुदाया ग्राह्यता, परमाणुत्वव्याघातात् । नहि पञ्चमेन षष्ठेन वा भागेन दृश्यमानाना त्रिशतमेनापि

भागेन परमाणुता, यन्त्रेण कोटिगो विभागावलोकनात् सुसूक्ष्मतरस्यापि दृश्यस्य। न चैवमवयवपरम्पराकल्पनेऽनवस्था मेरुसर्षपयोरनन्तावयवत्वेन साम्यप्रसङ्गश्चेति वाच्य। यतो नहि कल्पनाभिया पदार्थस्वरूपमन्यथाकारमाख्यान्ति विद्वास.। न चानवस्था, परमाणौ तात्त्विके विश्रामात्, अर्वाग्विश्रामे तु न परमाणौ तात्त्विके विश्राम इति परिमाणविश्रान्तिस्थानमेतत् स्यान्न। यच्च नोद्यते मेरुसर्षपयो, तदपि न विचार्य व्यागीर्णम्, यत कल्पनेऽपि परम्पराया न समाना सा द्वयो, अन्यथा घटशावकयो साम्यापत्तिः किं न भवतामपि, तन्नैतत् सुन्दरम्। तथा यथाऽनन्ताणुकस्कन्ध परिमितेऽपि क्षेत्रे तिष्ठति तयाऽन्येपि तिष्ठेयुश्चेत् को हि विरोध। एष एवविधमहिमा यद्—एकीभूता तिष्ठन्ति अल्पेपि क्षेत्रे। तन्नाणूनामनन्तानामवस्थान क्षेत्रे परिमितेऽपि विरुद्धयते। अनेनैतदपि निरस्तमेव—यद्यावत्प्रमाण आकाशस्य प्रदेशस्तावत्प्रमाण एव।

'सत्थेण सुतिक्खेणवि छेत्तु भेत्तु व जो न किर सक्को।

त परमाणु सिद्धा वयति आइ पमाणाण' मितिवचनात् परमाणुरिति कथ मायादेकस्मिन्नाकाशप्रदेशे स्कन्ध ? इति। वन्धस्यानुभावो वा विचित्रो, येनैतन्नासम्भवम्, येनोदाहृत 'भेदसङ्घाताभ्या चाक्षुषा' इति। अचाक्षुषाणामपि स्कन्धाना भेदसङ्घाताभ्या चाक्षुषापत्ति. कथमन्यथा युक्तियुक्ता भवेद् न चेत् स्याद् वन्धमहिमा, अखण्डखण्डितकाचनीलिम्नैतत् सुश्रद्धेयमेव। ननु वद्धाना स्कन्धाना प्रत्येकमनन्तत्वाद् अणूना भिन्नानामप्यनन्तत्वात् कथमवगाहस्तेषा स्कधाना वन्धमहिम्नावगाहसम्भवेऽपीति चेद्। अवगाहदानस्वभावत्वादाकाशस्येति गृहाण। यथा ह्येकस्यापि दीपस्योद्योतेनावमथ पूर्णपूर्व द्वितीयतृतीयादेरपि यावतमङ्ख्या-

च'चइस्सामित्ति जाणइ चयमाणे न जाणइ'त्ति सङ्गच्छते समय-स्थितिकस्य वेत्तुमशक्यत्वाच्छद्मस्थैरिति । कथं वेद्यश्चेद्, अणु-वदनुमानेन भाव्य कालेनापि सुसूक्ष्मेन, कालतारतम्येनैव परापर-व्यवहारात् । पर्यन्त पुद्गलावर्त्तादावुपरितनोऽधश्च समय एव । यद्वा-अवयवधाराप्रतिबद्धोऽय व्यपदिश्यमान काल छद्मस्थज्ञान-गोचर', । यतोऽस्य त्र्यणुकादिवत् परिमाणेन परमाणुरिवायमपि कालपरिमाणेन परमाणुभूतो, यतो नैवासौ केवलवेदसापि प्रज्ञया द्विधा व्यपदेष्टु शक्यते, ते चासङ्ख्येया एकत्र व्यपदिष्टा' समुदि-तिसमागताश्चेदाऽऽवलिकोच्यते । तदुदाहृतवन्त. सूत्रकारा अपि समयरत्नाकरे–

'असङ्खेज्जाण समयाण समुदितिसमागमेणं सा एगा आवलिअत्ति वुच्चइ'त्ति । ताश्चैककोटिसप्तषष्टिलक्षसप्तसप्तति-सहस्रषोडशाधिकद्विशतमानाश्चेत् समुदीयन्ते, तदैको मुहूर्त्त. स्याद् । यदाह–

'एगा कोडिसगसट्ठिलक्खा सत्तहत्तरि सहस्सा य ।

दो य सया सोलहिया आवलिया एगमुहुत्तमि'त्ति । यद्वा-सूच-कत्वात् सूत्रस्य आवलिकात आमुहूर्तादन्तरा ये कालविभागास्तेऽपि सूचिता एव द्रष्टव्या. । तथाच सङ्ख्येयावलिकावमित उच्छ्वास-निःश्वासकालो य. प्राण इत्युच्यते । असौ चैतादृशस्य हृष्टादि-विशेषणविशिष्टस्यैव, नतु यस्य कस्यचिद्यदाहु –

हट्ठस्स णवगल्लस्स निरुवगिट्ठस्स जतुणो ।

एगे ऊसासनीसासे एस पाणुत्ति वुच्चइ।।त्ति तेषा च त्रीणि सहस्राणि त्रिसप्तत्यधिकानि सप्तच शतान्येको मुहूर्त्त । यदाहु –

तिण्णि सहस्सा सत्त य सयाइ तेवत्तरिं च ऊसासा ।

एम मुहुत्तो भणिओ सव्वेहि अणतनाणिहि॥ति । अथ क्रमोऽत्र—सप्त प्राणाः स्तोक., सप्त स्तोका लव , सप्तसप्ततिर्लवाश्च मुहूर्त्त इति । तदुक्त—

'सत्त पाणूणि से थोवे सत्त थोवाणि से लवे ।

लवाण सत्तहत्तरीए एस मुहुत्ते वियाहिए॥त्ति । नपुंस्त्वं चात्र प्राकृतत्वात् । यद्वा—षट्पञ्चाशे द्वे शते आवलिकानामेकस्मिन् क्षुल्लकभवे, ते च पञ्चषष्टिसहस्राणि षट्त्रिंशदधिकानि पञ्च शतानि चैको मुहूर्त्त । ननु कथमिद सङ्गमनीय? यत एतेन मानेन त्वहोरात्रमध्ये लक्षैका त्रयोदश सहस्राणि नवत्यधिक च शत स्यात् प्राणाना श्वासोच्छ्वासनामधेयानाम् । शास्त्रे तु-'षट्शता-भ्यधिकान्याहु , सहस्राण्येकविंशतिम् । अहोरात्रे नरि स्वस्थे, प्राणवायोर्गमागम'॥मित्यल्पैव सङ्ख्या सङ्ख्यायितेति चेद् । अवधा-रयन्तु सावधानमनसो—यदेतत्'षट्शताभ्यधिके'त्यादि पठित प्राणा-यामोपयोगितया यो वायुनिर्गमो निरुध्यते तमुद्दिश्याभिहितम् । भवति चाय निर्गमस्तावत्परिमाण । अत्र तु रुधिरादिनाडीवहनमा-श्रित्येय सङ्ख्या प्रतिपादिता, आयुष्कमानोपयोगादिति न कमपि विरोधमुत्पश्यामोऽत्रेति । प्रत्येय चैतदत्रोक्त प्राणप्रमाण नाडी परामृश्य हस्तयोर्हृदये वा यत् कम्पप्रमाणम् । अनुवदिष्यत्येतत् विलोकनीय वा नाडीपरीक्षाशास्त्रम् । यच्च किञ्चित् स्यान् न्यूना-धिक्य पुरुषविशेषेण तदत्र न न्यूनम्, यतो 'हृष्टस्ये'त्याद्युदितमे-वाऽऽदित । यवना अपि प्रतिपल जगुरेव धमनीकम्पान् षष्ट्यधि-कानिति । समयादीनां द्वन्द्व । क्रमप्राधान्यान्नावलिका प्राग् । पञ्चदश मूहूर्त्ताश्च दिवसमान मध्यमया रीत्यैतत् । अन्यथा तु जघन्यतो द्वादशमौहूर्त्तिकस्योत्कृष्टतोऽष्टादशमौहूर्त्तिकस्यापि तस्य

तिगानामपि यदि स्यादुद्योतो मात्येव, तत्र गन्धपुद्गला वाऽनेकश आगता यथा। न चानुद्भूतस्पर्शास्ते इति तदवस्थ एवानाश्वास, तेषामग्रहणादेवानुद्भूतस्पर्शवत्ताकल्पनात्। तत्त्वतस्तु नानुद्भूतैकगुणमपि ग्राह्यतामेति, अग्राह्यता चोद्भूतेपि स्यात् त्रसरेणोरिव स्पर्शस्य, प्रत्यक्षता योग्यत्वेनैवेति नासमञ्जस किञ्चित्। यद्वा—न सर्वे स्कन्धा उद्भूतस्पशवन्तोऽभिमता येन स्याद् दृष्टान्तवैषम्यम्। पानीयभृते कलशे किं माति शर्कराततिरुद्भूतस्पर्शादिमत्यपि। अस्त्येव गुरुतोपलभ्यमाना चेद, अस्तु का नो हानि, स्कन्धाना गुरुताया विवादो न, पर नासावपि नियमो युक्तो, यत् स्कन्धबहुत्वे गुरुत्वमेव, तारतम्येन बाहुल्येन यद्यप्यस्त्येव तथाभाव, पर नियमस्य तथाविधस्याभावात्। उद्योतबाहुल्ये तदभावेऽपि गुरुताविशेषानुपलम्भात्। अभिमतोद्भूतस्पर्शवत्त्वस्यापि सुवर्णस्य नैवोपलभ्यतेऽशेनापि गुरुता औषधिविशेषेण यदि सम्मील्यते रसेन्द्रे। न चेद ततो नष्ट, औषधिविशेषेण निर्गमोपलब्धे। नचोत्पन्न तत्तत', सामान्यरसेन्द्रेण सयोगेऽनुपलम्भाल्लेशतोऽपीति। अत एवोदाहृत श्रीव्याख्याप्रज्ञप्तावविरोधगुणगुम्फिताया सिद्धतया निष्कलङ्कवृत्तिभिर्भगवद्भि —

एगेण से पुण्णे दोहि वि पुण्णे सयपि माएज्जा। कोडिसएणवि पुण्णे कोडिसहस्सपि माएज्जे'त्यादि। यतोऽवगाहदानस्वभावो ह्यसौ ददात्येवावगाहमागताना स्वप्रदेशे, न पूर्यते कथञ्चनापि। तत्त्वतस्तु चतु स्पर्शिकाष्टस्पर्शिकसूक्ष्मपरिणामबादरपरिणामव्यवस्थयोपपद्यत एव सर्वमिति नानुपपन्न लेशतोऽप्यसङ्ख्याकाशप्रदेशमये लोकेऽनन्तानन्तपरमाणुकस्कन्धपरमाणूनामवगाहे। इत्यलमतिप्रसङ्गेन। एव द्रव्यान्तर्गतमप्यवगाहप्राधान्यादाकाशरूप क्षेत्रलोक निरूप्य काललोक निरूपयिषव आहु —

**समयावलिअमुहुत्ता दिवस अहोरत्तपक्खमासा अ ।**
**संवच्छरजुगपलिआ सागर ओसप्पिपरियट्टा ॥ ५ ।'**

तत्र समय –कालविशेष योऽसौ परमप्रकृष्ट जीर्णपट्टशाटिकास्फाटनोत्पलपत्रशतभेददृष्टान्तेनागमे प्रसिद्ध । स हि न वेदितु शक्योऽन्तरा केवलिन. । यद्यपि परमाणुविज्ञानमस्ति छद्मस्थाना, परमावधीना तावत्पर्यन्तरूपिपदार्थप्रभासनप्रवणत्वान्, पर तस्य रूपित्वाद् रूपिष्ववधेरितिनियमाच्च सम्भव्येनत्, पर नाऽस्य । न च वाच्यमसङ्ख्य हि कालमवधिर्जानाति कालतो, लोकप्रमितानसङ्ख्यखण्डुकान् यथाऽलोके क्षेत्रत । यदुदाहृत–'खेत्तओ ण ओहिनाणी उक्कोसओ अलोए लोअमित्ते असखिज्जे भागे जाणइ पासइ । कालओ ण असखेज्जाओ उस्सपिणीओ ओसप्पिणीये' त्यादि । तत् कथ नासौ वेत्ति समयमिति ?। प्रथम तावदरूपित्वात् क्षेत्रकालयोर्नासौ जानात्येव, किन्तु तद्वर्त्तीनि द्रव्याण्येव रूपीणि । न च वाच्यमलोके नास्त्येव रूपिद्रव्यमिति किं द्रष्टव्यमनेन । अन्यथाऽनृतमेव स्यादेव सूत्र, लक्ष्यदोषे लक्षणस्यैव दुष्टत्वादिति । तस्य यथा यथा विशुद्धया विषयवृद्धिस्तथा तथाऽत्र सूक्ष्मतरसूक्ष्मतमद्रव्यदर्शन सम्पद्यते यावत्परमाणुरिति । नच वस्त्वभावेनाऽदर्शने व्याहति काचिदपि, अस्मादृशानामपि स्पार्शनादिप्रत्यक्षाणामपि मत्येव वस्तुन्यवलोकनात् । न चास्ति नियमो यदवयवदर्शने सत्येवावयविदर्शनेन भाव्य । सति तस्मिन्भिन्ने अन्यथास्मदादीनामपि घटादयोऽवयविनोऽदृश्या एव समापद्येरन् । नहि दृश्यन्तेऽस्मदादिभि परमाणव पारम्पर्यतोऽवयवभूता इति न परमाणुसमयैकक्षेत्रावगाहादिदर्शनाभावेऽपि तेपा विशेषस्यादर्शन तेषाम् । अत एवोच्यते– आन्तर्मुहूर्त्तिको हि छाद्मस्थिक उपयोग । अत एव

भावात् क्रमेण कर्कमकरसङ्क्रान्त्यो समीपे। द्वादशनाडमानत्वेन व्यवहारात्तत्पादोनमानमुहूर्त्तेन दिवसस्यैतत् प्रमाण च न कथञ्चनापि विरुध्यति। मध्यभरतमध्यभागापेक्षया चैतत्सर्वं दिनादिमानमुक्तमवगन्तव्यम्। तथैव शास्त्रोक्तेरिति। तावन्मानैव च ज्ञेया रात्रिरनुक्तापि, तेन त्रिशन्मुहूर्त्तमानोऽहोरात्र इति सम्पन्नम्। 'सिच-यनिकाय्यरात्रवृत्रा' [लिङ्गानु०] इति पुस्त्व। ते च पञ्चदश पक्षः समुदिता। पक्षौ च द्वौ मास। ततश्च दिवसादीना मासान्तानां द्वन्द्व। चकार सर्वेपा कालत्वेन तुल्यताज्ञापनाय अवान्तरानुक्तभेदसमुच्चयाय वा। ततश्च मासद्वयमान ऋतु. 'द्वौ द्वौ मार्गादिकावृतु'रितिवचनात्। ते च त्रयोऽयन'शिशिराद्यैस्त्रिभि'रितिवचनात् शिशिरवसन्तग्रीष्मा उत्तरायण,वर्षाशरद्धेमन्ता दक्षिणायनं चेत्यर्थ। ते च द्वे संवत्सर। 'अयने द्वे गतिरुदग्दक्षिणार्कस्य वत्सर' इति वचनात्। आद्यमुदीचीनमन्यदपरमिति। यद्यपि मासवर्षयो सौरचन्द्रादिका भेदा. सन्ति। न चात्र विशेषनिर्देशस्तथापि ऋत्वधिकारात् तत्सवत्सरो मासश्च ग्राह्य। युग च सवत्सरपञ्चकमान, यदाश्रित्योच्यते चन्द्र–चन्द्राऽभिवर्धित–चन्द्राऽभिवर्धिताख्यपञ्चवर्षमित युग 'पचसवच्छरे जुए'त्तिवचनात्। अग्रतोऽप्यनुसन्धेयमेतत्सूत्रसूचिततया

'वीस जुयाइ वाससयं, दस वाससयाइ वाससहस्सं, सय, वाससहस्साण वाससयसहस्स, चउरासीइ वाससयसहस्सा से एगे पुव्वगे, चउरासीइ पुव्वगसयसहस्सा से एगे पुव्वे, एतन्मान चेद पठ्यते शास्त्रान्तरे–

'पुव्वस्स उ परिमाण सयरी खलु होंति कोडिलक्खाओ।

छप्पन्न च सहस्सा बोद्धव्वा वासकोडीण॥ति। अङ्कतो यथा ७०५६०००००००००००। अग्रत चउरासीइ पुव्वसयसहस्साइ से एगे तुडियगे[२]। चउरासीइ तुडियगसयसहस्साइ से एगे तुडिए[३५३]। एव अडडे[५] २ अववे[७] २ हूहूए[९] उप्पले[११] २ पउमे[१३] २ नलिणे[१५] २ अच्छिनिउरे[१७] २ अज्जए[१९] २ पज्जए[२१] २ नउए[२३] २ चूलिया[२५] २ सीसपहेलियगे[२६] सीसपहेलिया तेण पर ओवमिए त्ति। एतावया ताव गणियस्स विसए[७] अङ्कतो यथा-८२६९६६४१९५१११९७१५९०६६३३०५३१४३१३५१७७०८-६३७१७४४०३२२२७३२८ अग्रतश्च चत्वारिंश शत शून्याना, सर्वपरिमाण च चतुर्नवत शतमङ्कानाम्। अय च सर्वोऽप्यधिकार शास्त्रकृद्भि सूचित एव द्रष्टव्योऽन्यथा युगवर्णन नाकरिष्यन्,युगाद्धि पूर्वादिनैवौपम्यगणना यावद् गमनार्हत्वादिति। यद्यपि च युगस्य द्विचतु कृतादिवाचकत्वमस्त्येव, पर पारिभाषिकेय सञ्ज्ञा 'इत्यतु सङ्ख्ये'त्यादिवदिति। पञ्चवर्षप्रमाणकालवाचकतायामपि नासमञ्जसम्। अथ पल्येति। तत्र पदैकदेशे पदसमुदायोपचारोऽत्रापि। तेन पल्योपममिति ग्राह्यम्। तत्र पल्यो-धान्यभाजनविशेष,तेनोपमा यस्य तत् पल्योपम। स च त्रिविध उद्धाराद्धाक्षेत्रभेदात्। तदुदाजह्रु सूत्रकारा अपि-

'से किं तं पलिओवमे ? पलिओवमे तिविहे पण्णत्ते-उद्धारपलिओवमे अद्धापलिओवमे खित्तपलिओवमे य'त्ति। एकैकमपि तत् सूक्ष्म-व्यावहारिकभेदेन द्विविधम्। तत्र व्यावहारिकस्य क्रियते निरूपण-यथा नाम आयामविष्कम्भाभ्या योजनमान पल्यो योजनोच्च सविशेषत्रिगुणश्च परिधिनाऽसौ चैकाह-द्व्यह यावत्सप्ताहप्ररूढैर्वालाग्रैराकण्ठ निविडीकृत्य भृत कोटचाद्यपरिमेयै तथाविध

यथा न दाहको दहेत् प्रवेशाभावात्तस्य अयोगोलकादिवत्, न च वायुर्हरेत् निविडत्वादेव, न वा क्वथयेत् पानीय ग्रावादिवत्तत्र प्रवेशाभावादेव, तथा च नैव पूतिभावमागच्छेत् क्वाथाभावे दुर्गन्धित.-भावादेव । एतस्माच्च प्रतिसमयमेकैकस्य वालाग्रस्यापहारे क्रियमाणे यावता समयेनाऽसौ रिक्तीभवति पल्य सर्वथा, स व्यावहारिक उद्धारपल्योपम । सूक्ष्मस्तु तेषामेव वालाग्राणामेकैक वालाग्रमसङ्ख्येयश खण्डयते । तच्च दृश्यरेणोरसङ्ख्येयभागमित स्यात्, सूक्ष्मपनकजीवावगाहनायाश्चासङ्ख्येयगुण खण्ड स्यात् । पूर्ववदत्राप्यपहार प्रतिममयमेकैकस्य खण्डस्य, निष्ठिते च सर्वथा सूक्ष्मोद्धारपल्योपम काल । एवमेव अद्धाक्षेत्रपल्योपमयोरपि वाच्यम्, पर अद्धापल्योपमं कालप्रधानत्वात् एकैक वालाग्र खण्ड च प्रतिवर्षशतमेकैकमपहरता ज्ञेयम् । क्षेत्रपल्योपमस्य च क्षेत्रप्राधान्यात् तैरेव वालाग्रै क्रमश प्रदेशा आकाशस्य तत स्पृष्टा स्पृष्टास्पृष्टाश्चापह्रियन्ते, तदा भवति क्षेत्रपल्योपम द्विविधमपि क्रमेण । ननु तादृशे निचिते सम्भवन्ति किमाकाशप्रदेशा अस्पृष्टा वालाग्रै ? येन स्पृष्टास्पृष्टोभयापहारो व्यपदिश्यते इति चेद् । ओम्, यथा कूष्माण्डभृते मातुलिङ्गास्तैर्निचिते बिल्वानि, तैश्च सम्पूर्णे आमलकान्येव क्रमश बदराणि चणका सर्षपा गङ्गावालुकाकणाश्च पूर्वपूर्वैरापूर्णेऽपि मायादपरमपर, पूर्वस्योत्तरापेक्ष्या स्थूलतरत्वाद् । एवमत्रापि केशाग्रखण्डान्यप्याकाशप्रदेशापेक्षया स्थूलतराण्येवेत्येवमुक्तम् । ननु च यदि स्पृष्टा अस्पृष्टाश्चोभयेऽपि यदि अपकृष्यन्ते नभ प्रदेशास्ततस्तर्हि वालाग्राणामसङ्ख्यखण्डीकरण किमर्थ, न हि खण्डीकृतेऽपि स्पृष्टास्पृष्टोभयग्रहणादस्ति विशेष । न च वाच्य उद्धाराद्धापल्योपमपाठसदृशपाठ एष इति । एतस्य पृथक् पाठ एव नत्वनिर्दिष्ट सूत्रे भविष्यति चैतत्पाठतो व्यक्तमिति चेदवधारणी-

यमिद तावत्तत्त्वसतत्त्वविद्वद्भिर्यन्नानर्थकं परमागमवाक्यं, न च सन्देहमात्रात् सूत्रस्यालक्षणत्व, किन्तु व्याख्यानतो विशेषप्रतिपत्तिः कार्या । यतोऽवाचि वैयाकरणशिरशेखरेण 'व्याख्यानतो विशेषप्रतिपत्तिर्न हि सन्देहादलक्षण'मिति । न च वैयाकरणानामियं परिभाषा, नत्वाप्तागमिकानामिति वाच्यम् । तत्राप्यनुयोगकरणस्यैतदर्थत्वादेव । तथाचोदाहृत परममुनिभि –

'ज जह भणिय सुत्ते तहेव जइ त वियालणा नत्थि ।

कि कालियाणुओगो दिट्ठो दिट्ठिप्पहाणेहिं'॥ति । अत्र हि कालिकेत्युपलक्षणमुत्कालिकादे । कालिकनिर्देशस्तु द्वादशाङ्ग्यास्तथाविधत्वात्तदनुयोगस्यातिगहनत्वादेवेति । पूर्वापरालोचनप्रवृत्तौ च स्पष्ट स्पष्टीभविष्यति यत्पल्यान्त स्पृष्टास्पृष्टाना तुल्यत्वेऽपि तद्बहिर्वर्त्तिना नभ प्रदेशाना तथाकरणे स्पर्शनायामतिमहान्विशेष । यतो हि पल्यपर्यन्तवर्त्तिना स्थूलाना वालाग्राणामल्पानामेव तेषा-स्पर्शना, खण्डीकृतेषु च बहू वीत्येतत्परमाणुक्षेत्रतत्स्पर्शनाविचारस्पृशा स्पष्ट च अतो वालाग्रखण्डीकरणे प्रयोजनमसङ्कुचश इति । यद्वा–मीयन्ते तेन दृष्टिवादे द्रव्याणीति भवेन्निर्देशः स्पृष्टास्पृष्टाऽन्यतरेणेति सफलताऽस्य, ततो न क्वापि कार्योऽनाश्वास आप्तागमे । व्याख्यात च व्याख्याकारैरपि तथैव । अत्र हि व्यावहारिकास्त्रयोऽपि सूक्ष्मपल्याना सुखावबोधायैव प्ररूप्यन्ते, नान्य कश्चिदर्थोऽस्ति तस्य मानादाविति । सूक्ष्मैरपि कि कार्यमेतद्भविष्यति सागरोपमव्याख्याया स्पष्टमिति नात्र तत् प्रतन्यते । अत्रापि सवत्सरादीना त्रयाणां द्वन्द्व । क्रमप्रामाण्याच्च न पूर्वनिपातादिर्बहुषु परमभ्यर्हित स्यादितिसामयिकी परिभाषात्वन्यैव । पल्योपमात् पर. क काल ? इत्याह–'सागर ओसप्पि

परियट्ट'त्ति । तत्र सागर—समुद्रस्तेनोपमा यस्य स सागरोपम, सञ्ज्ञामात्राख्यानमेतत् । यद्वा—अतिप्रभूतताज्ञापनायैतत्कालस्य । तत्त्वतस्तु दशकोटाकोटचा पल्योपमैः सागरोपम इति । पल्योपमवदयमपि षोढैव, उद्धाराद्धाक्षेत्रभेदाना सूक्ष्मव्यावहारिकभेदेन प्रत्येक द्वैविध्यात् । तत्र सूक्ष्मोद्धारसागरोपमसमयैर्द्वीपसागरप्रमाण गृह्यते, अर्धतृतीयोद्धारसागरोपमसमयमानत्वात्तेषा । तथा चोक्त—

'उद्धारसागराण अड्ढाइज्जाण जत्तिया समया ।

दुगुणपवित्थरदीवो-दहीय रज्जु य एवइय'॥त्ति । अद्धापल्योपमसागरोपमैस्तु सूक्ष्मै नैरयिक—तैर्यग्योन—मनुष्य—देवानामायुष्क मीयते । सूक्ष्मक्षेत्रपल्योपमसागरोपमैस्तु दृष्टिवादे द्वादशेऽङ्गे द्रव्याणि धर्माधर्म-लोकाकाश-जीवप्रदेश-कालचक्रोत्सर्पिण्यवसर्पिणी-समयादिकानि मीयन्ते । व्यावहारिकास्तु त्रिधापि पल्योपमसागरोपमा प्ररूपणामात्रोपयोगिन इति । स्पष्ट चेदमनुयोगद्वारेषु शास्त्रीयोपक्रमतृतीयप्रमाणभेदाऽवान्तरकालप्रमाणभेदनिरूपणे । तथा च तत्पाठ – 'से किं त समए ( पञ्चत्रिंशत्तमद्वितीयपृष्ठिप्रथमपङ्क्तेरष्टात्रिंशत्तमद्वितीयपृष्ठोपान्त्यपङ्क्ति यावत् ) सङ्ग्रहश्चैवमत्र—

'उद्धार अद्धखित्त पलिय तिहा समयवाससयसमए ।

केसवहारो दीवोदहि-आउ-तसाइपरिमाण॥त्ति । अवसर्पिणी च दशसागरोपमकोटाकोटिमाना षडरकविभक्ता । षडरकस्वरूप च जम्बूद्वीपप्रज्ञप्तेर्विस्तरतोऽभ्युपेयम् । सङ्क्षेपतस्त्विद—

तत्रैकान्तसुषमार–श्चतस्र: कोटिकोटय: । सागराणां सुषमा तु, तिस्रस्तूत्कोटिकोटय: ॥१॥ सुषमदु:षमा ते द्वे, दु:षमसुसमा पुन: । सैका सहस्रैर्वर्षाणां, द्विचत्वारिंशतोनिता ॥२॥ अथ दु:ष- मैकविंशतिरब्दसहस्राणि तावती तु स्यात् । एकान्तदु:षमापि । तत्कालीननरादिजीवितमानं चेद । कालवशादेव वृद्धिहानिभावात्– प्रथमेऽरत्रये मर्त्या–स्त्रिद्वयेकपल्यजीविता: । त्रिद्वयेक गव्यूत्युच्छ्राया– स्त्रिद्वयेकदिनभोजना ॥१॥ कल्पद्रुफलसन्तुष्टा-श्चतुर्थे त्वरके नरा: । पूर्वकोटयायुष: पञ्च–धनु:शतसमुच्छ्रया: ॥२॥ पञ्चमे तु वर्षशता– युष: सप्तकरोच्छ्रया: । षष्ठे पुन: षोडशाब्दा–युषो हस्तसमुछ्रया: । एकान्तदु:खप्रचिता इति । यद्यप्यत्रावसर्पिण्येवोदिता सूत्रकारै:, परं नैकाकिन्योऽवसर्पिण्य: सम्भवन्ति, उत्सर्पिण्यन्तरितत्वात्तासामिति सापि सूचितैवेति ज्ञेयम् । उभयोर्मीलनेनैव कालचक्रभावात् यदाहु:-

'अवसर्पिण्यां षडरा, उत्सर्पिण्यां त एव विपरीता: । एवं द्वादशभिररै–र्विवर्त्तते कालचक्रमिदं ॥ [अभिधान०] ननु क: सागरोपमोऽत्रारादिस्थितौ ग्राह्य ? इति चेद्, आयुष्कादिसमा- नधर्मत्वात् क्षेत्रभेद एवैषां सूक्ष्मो ग्राह्य इति । न केवलमेतावदेव कालमानमिति प्रोचु:-'परियं(परं)ट्टत्ति'। तत्र परावर्त्तनं परावर्त्त: । आर्षत्वात् र्त्तस्य ट्ट:, वस्य लुग् उद्धृतेपि लुक् संयोगे ह्रस्वश्चेति । आर्षं बहुलमिति सर्वेषामार्षे बाहुल्येन विधानात् । बहुल्यं प्रवृत्तीतरोभया- न्यैश्चतुर्धेति न किञ्चिदनुपपन्नम् । अत्रापि भामादिवत् समुदायो- पचारोऽवयवे ज्ञेय: । तथा पुद्गलपरावर्त्त इति लभ्यते । कतिविधा: पुद्गला: कथं च तेषां परावर्त्त: ? इति चेदुच्यते–अष्टविधास्ताव- त्पुद्गला:, औदारिकवैक्रियाहारकतैजसभाषानपानमनोकर्मभेदात् । तत्र आहारकशरीरपुद्गलनिष्पन्नं, चतुर्दशपूर्वविदामेवाहारकम् ।

न च तस्य भवति पुनः पुनर्ग्रहणमासंसारचक्रात् परिमितस्यैव भावात्तद्ग्रहणस्येति । शेषैः सप्तभिः परावर्त्तः । सोऽपि सप्तधैव । यदाहुः परममुनयो विवाहप्रज्ञप्तौ–

'कइविहे णं भंते ! पोग्गलपरियट्टे पण्णत्ते ? । गोयमा ! सत्तविहे पण्णत्ते, तंजहा-ओरालियपोग्गलपरियट्टे वेउव्वियपोग्गलपरियट्टे एवं तेयाकम्मामणवइआणापाणुपोग्गलपरियट्टे । से केणट्ठेणं भंते ! एवं वुच्चइ ओरालियपुग्गलपरियट्टे ? । गोयमा ! जण्णं जीवेणं ओरालियसरीरे वट्टमाणेणं ओरालियसरीरपाओग्गाइं दव्वाइं ओरालसरीरत्ताए गहियाइं जाव णिसट्ठाइं भवंति से तेणट्ठेणं गोयमा ! एवं वुच्चइ ओरालियपुग्गलपरियट्टे २ । परावर्तेन च कालपरिमाणमानीयते इत्युदाजह्रुः-'ओरालियपोग्गलपरियट्टेणं भंते! केवइयकालस्स निव्वट्टिज्जइ? । गोयमा ! अणंताहिं ओसप्पिणीहिं उस्सप्पिणीहिं'ति । एवं शेषैरपि षड्भिरवसेया पुद्गलपरावर्त्ताः । अथवा परावर्त्तश्चतुर्धा–द्रव्यक्षेत्रकालभावभेदात्तेपि द्विधैव सूक्ष्मबादरभेदात् । तत्र द्रव्ये सूक्ष्मबादरभेदावेव–

'ओराल-विउव्वा तेय-कम्म-भासा-णुपाणमणगेहिं । फासेवि सव्वपोग्गल अह मुक्का बायरपरट्टो ॥१॥ दव्वे सुहुमपरट्टो जाहे एगेण अह सरीरेण । लोगंमि सव्वपोग्गल परिणामेऊण तो मुक्का ॥२॥ एवं क्षेत्रकालभावेष्वपि सूक्ष्मबादरभेदौ प्रत्येकं लोकप्रदेशाऽवसर्पिणीसमयाऽनुभागबन्धस्थानैः क्रमेण क्रमोत्क्रमाभ्यां ज्ञेयौ । सर्वेऽप्येतेऽनन्तोत्सर्पिण्यवसर्पिणीमानाः । विशेषार्थिना तु चरमावर्त्तविंशिकादीपिका विलोक्या । सङ्ग्रहश्चात्रैव–

दव्वे खित्ते काले भावे चउह दुह बायरो सुहुमो । होइ अणंतुस्सप्पिणीपरिमाणो पुग्गलपरट्टो ॥१॥ उरलाइसत्तगेण

एगजिओ मुयइ फुसिअ सव्वअणू । जित्तिअकालि स थूलो दव्वे सुहुमो सगन्नयरा ॥२॥ लोगपएसोसप्पिणीसमया अणुभागबंधठाणा य । जह तह कममरणेण पुट्ठा खित्ताइथूलियरा ॥३॥ इति । समयादिकश्च काललोकः, कलासमुदायत्वात् सङ्ख्यानसाधनत्वाच्च । तदेवं व्याख्याय काललोकं क्रमप्राप्तं भवलोकमभिधातुकामा आहुः—

**नेरइयदेवमणुआ तिरिक्खजोणीगया य जे सत्ता ।**
**तम्मि भवे वट्टंता भवलोगं तं विआणाहि ॥६॥**

तत्र निर्गतमयमिष्टं सुखं यस्मादसौ निरयो-घर्मावंशाशैलाञ्जनारिष्टामघामाघवत्यभिधाना रत्नशर्करावालुकापङ्कधूमतमो महातमःप्रभाख्यगोत्रा नरकाः । तत्र भवास्त एव नैरयिकाः । न च वाच्यं न सन्त्येव नरकगतिर्नैरयिका वाऽनुपलम्भादिति । अनुपलम्भमात्रेणाभावासिद्धेर्भवेच्च परमाण्वादीनामप्यभाव एव सति । अनुमानेन गम्यन्ते ते चेत् । किमत्र न तत् ? । जगद्वैचित्र्यं जीवानामेकविधत्वेन नान्यकारणमन्तरेणोपलभ्यमानं युक्तियुक्तं, स्वभावभेदोऽपि न कारणमन्तरेण । सिद्धे च वैचित्र्यकारणे कर्मणि मनुष्यतिरश्चोस्तन्मध्यममेव फलदं, सुखदुःखतीव्रतानुपलम्भात् तीव्रदुःखसहनसहिष्णुतथाविधकायाभावाच्चावश्यं तीव्रतमकर्मफलभोगा अभ्युपेया नैरयिकाः । अथ मतिः—अत्यन्तदुःखिता दृश्यमाना नरास्तिर्यञ्च एव च नैरयिकाः । तदपि न सुन्दरम् । यतो हि ते उपमयैव गोचरीक्रियन्ते, यदमी नैरयिकवदतिदुःसहं सहन्ते दुःखमिति न ते नैरयिकाः, उपमानोपमेययोः सति भिन्नत्वे एव तथावर्णनात् । तथा यथा राजादिः कश्चित् सुखातिशयेन व्यपदिश्यतेऽमर्त्यवन्मर्त्योऽपि सन्नेषोऽनुभवति सुखं, तथैषोऽपीति भाव्यमुपमादानादेव सिंहादिवत् तेनेति प्रतिपादितं च परममुनिभिः ।

'पापफलस्स पगिट्ठस्स भोइणो कम्मओ व सेसव्व। सति धुव ते भिमया नेरइया अह मई होज्जा ॥१॥ अच्चत्थदुक्खिया जे तिरियनरा नारगत्ति ते नियमा। त न जओ सुरसोक्खपगरिस-सरिस न त दुक्खं॥ति। श्रुतावपि-असूर्या नाम ते लोका अन्धेन तमसावृता। तास्ते प्रेत्याभिगच्छन्ति ये के चात्महनो जना ॥१॥ स ह वै प्रेत्य नारको जायते य शूद्रान्नमश्नाति' इत्यादि। एवं देवा। तत्र 'दिवू क्रीडाजयेच्छापणिद्युतिस्तुतिगतिषु' इति धातु। ततो दीव्यन्ते-स्तूयन्तेऽर्थकामकामिभिर्नरैरिति देवा। ननु किं ते प्रयच्छन्ति किञ्चिन्नवेति ? चेत्प्रयच्छन्ति यदि पर भाग्योदयः स्याद्येषा। किं नागच्छन्ति दृष्टिपथ साम्प्रत ?, अनागमस्तु कालानुभावाद् यदाहु –'कालणुभाव'त्ति। न चैतावता न तेषां सामर्थ्यं स्तुत्यादिना कर्मक्षयोपशमाद्यापादनात्। अत एव च–'सुयदेवया भगवई'त्ति स्तुति, चतुर्थी च स्तुतिर्देववन्दनाया तदधिकारप्रवरा 'सम्मद्दिट्ठी देवा दिंतु समाहिं च बोहिं चे'ति। स्थानाङ्गे च 'पचहिं ठाणेहिं सुलहबो हित्ताए' इत्यत्र देवस्तुति सुलभबोधिहेतुतया न्यस्ता गणभृत्पादैः,क्रियते च सा'देवाण अहो सील विसयविसमोहियावि जिणभवणे। अच्छराहिंपि समं हासाइ तेण न करेती'त्यादिका मुनिवर्यैरल विस्तरेण। विस्तरार्थिना समयरत्नाकरोऽवलोकनीय। अनागमादिकारणं चैताभ्यो गाथाभ्योऽवसेय प्रसिद्धाभ्य·-'सकत दिव्व पेमा विसयपसत्तासमत्तकत्तव्वा। अणहीणमणुयकज्जा नरभवमसुह न इंति सुरा ॥१॥ चत्तारि पच जोयणसयाइ गधो य मणुअलोगस्स। उड्ढ वच्चइ जेण नहु देवा तेण आइति ॥२॥ पचसु जिणकल्लाणेसु चेव महरिसितवाणुभावाओ। जम्मतरनेहेण य आगच्छति सुरा इहय' ॥३॥ तीर्थोन्नतिं च कुर्वन्त्येवअन्यत्र। यदाहु –'तित्थुन्नइपि अन्नत्थ कुव्वति'त्ति। ननु तादृशा तेषा सद्भाव एव किं मान-

मिति ? चेद् । आगमे दृष्टेष्टाविरुद्धे व्याकृतमेवैतत् । अनुमानं च शुद्धपदसुखातिशयादिना,प्रत्यक्षाश्च ज्योतिष्कास्तन्न तेषामसद्भाव । आहुश्च परममुनय –देवत्ति सत्थयमिण सुद्धत्तणओ घडाभिहाण व । अहव मई मणुओच्चिय देवो गुणरिद्धिसपन्नो ॥१॥ तण्ण जओ तच्चत्थे सिद्धे उवयारओ मया सिद्धी । तच्चत्थसीहिसिद्धे माणव-सीहोवयारो व्व ॥२॥ देवेसु न सदेहो जुत्तो ज जोइसा स पच्चक्ख । दीसति तक्कयावि य उवघायाणुग्गहा जगइ ॥३॥ आलयमेत्त च मई पुर व तव्वासिणो तहवि सिद्धा । जे ते देवत्ति मया न य निलया निच्चपडिसुण्णा ॥४॥ को जाणइ किमेयति होज्ज निस्ससय विमाणाइ । रयणमयनभोगमणादिह जह विज्जा-हराईण ॥५॥ दृश्यते च निमित्तशास्त्रीयमुपरागादि यथायथ सवा-दतामाप्नुवत् तथा च तदुदितावनुग्रहोपघातावपि चेति कथ न देव-सत्ता ? । यथाकर्म चानुग्रहादि कुर्वन्ति जीवाना, दातृहर्तृनरवदिति न नोद्यं नूतनमत्र किञ्चित् । तथा मनुजा –नराः प्रत्यक्षा एव । त्रयाणा द्वन्द्वे नैरयिकदेवमनुजा इत्यत्रापि क्रमादिनैव प्रयोजने-नार्षत्वाद्वा न पूर्वनिपातविधिरादृत । नैत एव केवला भवलोका , इत्याह–तिर्यग्योनिगताश्च ये सत्त्वा । तत्र तिरोऽञ्चती ततिर्यङ विशालगतित्वात्, यतोऽनन्ता जीवास्तत्र सिद्धाऽनन्तगुणा , यद्वा–मध्यानुभावास्ते न देवनैरयिकवद् विरतिशून्या , न चापि मनुज-वत् सर्वविरतिवन्त इति तेषा यथार्थमेव तिर्यक्त्वम् । एनानाश्रि-त्यैव तिर्यग्लोकेति सञ्ज्ञा मध्यलोकस्य । यद्वा– चतुर्दशाना जीवाना सर्वेऽपि प्राप्यन्ते तत्र भेदा. । 'औपपातिक–मनुष्येभ्य. शेषास्तिर्यग्योनय' [तत्त्वार्थ०] इतिवचनात् । पञ्चेन्द्रियान्ताना शेषाणां सर्वेषा तिर्यक्त्वात् देवनारकमनुजेभ्य. । तेषां योनय.–उत्प-त्तिस्थानानि । 'यु मिश्रणे' इति वचनात् युवन्ति–कार्मणवन्तोऽपि

स्वप्रायोग्येणौदारिकादिना मिश्रीभवन्ति प्राणिन आस्विति योनय ।
वीयुसुवह्यगिभ्यो नि[६७७]रितिसूत्रेणौणादिके नौ शब्दनिष्पत्ति ।
चतुरशीतौ योनीना लक्षेषु वह्व्य एतेषा योनय इति योनिशब्द-
योजन कृत पूज्यपादैरिति सम्भाव्यते, पर नैतद् व्यवच्छेदकतया ।
योनयश्चैतेषा चतस्रो लक्षा प्रत्येक देवानां नारकाणा च, चतु-
र्दशलक्षाश्च नराणा या योनय, ता वर्जयित्वा शेषा द्वाषष्टिः
लक्षा· तिरश्चामेव । चतुरशीति· लक्षाश्च योनीनामेताभ्यामति-
प्रसिद्धाभ्या गाथाभ्यामवसेया –

'पुढवाइसु-पत्तेय सग वणपत्तेयणत दस चउद । विगले दु दु सुरनार-
यतिरि चउ चउ चउ दस नरेसु॥१॥जोणीण हुति लक्खा सव्वे चुलसी
इहेव घिप्पति । समवण्णाइ भेया एगत्तेणेव सामन्न॥२॥त्ति । अवधार-
णीय चैतेन देवनारकमनुजानामपि सन्त्येव योनय, उत्पत्तिस्थानमा-
त्रार्थत्वात्तासा । ता गता -प्राप्ताः, के ? इत्याह-सत्त्वा -जीवा ।
नात्र 'शेषा सत्त्वा इतीरिता' इति रूढसत्त्वग्रहण, किन्तु 'जीवः स्याद-
सुमान् सत्त्व' इति सामान्य । चकारश्चात्र सर्वेषामवान्तरभेदपरि
ग्रहाय । ते चैव घर्मादिभेदेन सप्तविधा नारकाः पर्याप्तेतरभेदाच्चतु-
र्दशधा, पृथ्व्यप्तेजोवाय्वनन्ता सूक्ष्मबादरपर्याप्तेतरभेदभिन्ना, प्रत्ये-
काश्च पर्याप्तेतरा विकलेन्द्रिया अपि द्विधैव, पञ्चेन्द्रियास्तु जलस्थ-
लखेचरोर परिसर्पभुजपरिसर्पभेदभिन्नास्तिर्यञ्च· सम्मूर्छिमगर्भव्यु-
त्क्रान्तिकपर्याप्तेतरभेदाद् विंशतिधेति तिर्यञ्चोऽष्टाचत्वारिंशद्विधाः।
मनुष्यास्तु जम्बूद्वीपगतासु त्रिषु भरतैरवतविदेहलक्षणासु कर्मभूमिषु,
षट्सु चाकर्मभूमिषु देवकुरूत्तरकुरुहरिवर्षरम्यकहैरण्यवद्धिमवल्ल
क्षणासु, षट्पञ्चाशत्सु च हिमवच्छिखरिवर्षधरकोणनिर्गतदिगन्तरा-
लप्राप्तासु चतसृषु चतसृषु दंष्ट्रासु सप्त सप्ताऽन्तरद्वीपभावाल्लवणो
दधौ वर्त्तमानेष्वन्तरद्वीपेषु, द्विर्धातकीखण्डगतभरतादिकर्मभूमिषट्-

काकर्मभूमिद्वादशके, द्विः पुष्करार्द्धे च धातकीवत् कर्माकर्मभूमिष्व-ष्टादशसु मनुष्यभावात् पर्याप्तेतरभेदभिन्नतया गर्भजाना द्व्यधिके शते तद्वान्तादिषु सम्मूर्छनरोत्पादात्तेषा चापर्याप्तत्वादेव चैकाधिक शतमिति त्र्यधिकानि शतानि त्रीणि मनुजाना भेदाः, एव दक्षिणो-त्तरभेदभिन्ना भवनवासि—व्यन्तराणा दशाष्टभेदाः, पञ्चदश-परमाधार्मिका अम्बाद्या, चरस्थिरभेदाद् द्विधा सूर्यचन्द्रमसौ ग्रहा नक्षत्राणि प्रकीर्णतारकाश्चेति दशधा ज्योतिष्का, द्वादश कल्पा, सौधर्माद्या, ग्रैवेयका नव, अनुत्तरा पञ्च, किल्विषिकत्रय, लोका-न्तिकनवकं चेति नवनवति भेदा अमर्त्त्या, पर्याप्तेतरभेदादष्टानव-त शतमिति सर्वेऽप्येत एकत्रीकृता त्रिषष्ट पञ्चशतक जीवभेदा-नामिति। ननु च किमेते शाश्वतभावेनावस्थिता?, न चेत कथमेते ज्ञेया एवमितिचेद्, जीवापेक्षयाऽशाश्वतेपि गत्यपेक्षया शाश्वतत्व प्रायेणैतेषा, तन्नैते शाश्वता सर्वथा, यथोच्यते—'न हवै प्रेत्य नरके नारका सन्ती'ति, किन्तु स्वायुष्क यावत्, तत्र विविधानि दु खा-दीन्यनुभूय पश्चादुद्वर्त्तना कृत्वा यथाकर्म गच्छन्ति। यद्वा—नारका-भिलापिकैतच्छ्रुतिरेतदाख्याति—यद्यथा मनुष्यादयोऽल्पारम्भत्वा-दिभिस्तद्भवसम्भवविभि कारणैः पुनर्मनुष्यादिभवेष्वागच्छन्ति, नैवं नारकास्तेषामेव काये गतौ वा पुन प्रेत्य समुत्पद्यन्ते, 'नारगदेवा य नो चेव'त्ति प्रसिद्धेति। तथा नैवाशाश्वता अपि। यथोच्यते-'पडुप्पन्नसमयनेरइआ वोच्छिज्जिस्सति?। हता, वोच्छि-ज्जिस्सती'त्यादि सूत्रेण विप्रतिपन्नैः साध्यते क्षणिकव्युच्छेदवादः सर्वथा, किन्तु येऽधुना नारकगतौ नारकास्ते स्वस्वायुषोऽन्ते व्युच्छे-त्स्यन्तीति। प्रकृत सूत्र तु पर्यायनयापेक्षया विशिष्टनाशद्योतकम्। एव देवादिष्वपि शाश्वतत्वमशाश्वतत्व चावसेयमित्यभिप्रेत्य तेषा शाश्वताशाश्वतत्व प्रोचु—'तमि भवे वट्टत'त्ति। तत्र तस्मि-

ऽनन्तरोद्दिष्टे नैरयिकादौ भवे पूर्वोक्तरूपे । यद्यपि मनुष्यादिगतेः प्रत्यक्षत्वाद् उच्येतास्मिन्निति, पर नैरयिकदेवभवानामप्रत्यक्षत्वात् तस्मिन्निति । एतेन भवपर्यन्तावस्थानमाह– भवजीवितस्य भवाव-धित्वाद् । अत एवोच्यते–'न देवनारकाणा तद्भवजीवित'मिति । तथा च 'जीव क्षित्याद्यनामक' इति परममुनिवाक्येन जीवस्य क्षित्याद्यनामकत्वेऽपि तत्तद्भवगताभिधानधारित्वमस्तीति द्योत्यते, भवशब्देन च गत्यपेक्षया शाश्वतत्व तेषा दर्शयति, नहि कदाचिद-नारकमदेव वा भविष्यति जगत्, चतुर्गतिमयत्वात्तस्येति 'वट्टन्त'त्ति वर्त्तमाना, यो यो जीवो यस्मिन्यस्मिन्भवे यदा यदा वर्त्तते तदा तदा स स तेन तेन गत्यादिनामकेन व्यपदिश्यते–यथा नारकोऽय देवोऽयमित्यादि । न च शाश्वत तस्याभिधान किञ्चिदपि । औपा-धिकोऽय व्यपदेशो घटाकाशादिवदिति ज्ञापयन्त्यनेन । अत्र वर्त्त-मानेत्यस्य प्राकृते आत्मनेपदिनोऽपि न्तप्रत्ययागमात् 'र्त्तधूर्त्तादौ ट्ट[८।२३०]'इत्यनेन ट्टभावाच्च वट्टन्तत्ति । अनेनान्याऽन्यजीवो-त्पादेन गते शाश्वतत्व, प्रकृताना च जीवाना तत्र स्थायित्वाभावेन चाशाश्वतत्वमाहु । तथा च ये प्रलेपुर्यत्–त्रसजीववध प्रत्याच-क्षाणस्यापि श्रावकस्य येऽस्य प्रत्याख्यानानेहसि त्रसत्वेन वर्त्तमाना जीवास्ते सर्वे वधपरित्यागनियमेनाऽभय स्थापिता, पुनश्चैते यदा स्वस्वायुष्कावसाने विधाय काल गच्छन्ति यथाकर्म प्रेत्य गत्यन्तर, यदि च स्थावरत्वमापन्नास्तदा ते हन्येरँ स्तैरितिस्पष्ट त्रसवधविरतावतिचारप्रभञ्जनमभय स्थापिताना वधकरणात् । तस्माद् वार्त्तमानिकत्रसवध प्रत्याख्यामीति प्रतिज्ञा विधातव्या विधिकुशलैरिति ते निरस्ता एव । यतो नैव देशविरतेन जीवाना-श्रित्य कृता विरतिर्विशिष्टान्, किन्तु त्रसत्वमेवाश्रित्य, सङ्क्लि-ष्टपरिणामजन्यत्वमपि तद्धिसाया. । ततश्च त्रसत्वे वर्त्तमाना एव

त्रसास्ते च प्रत्याख्याता वध्यतया। यदा च न ते तथा, न तदा ते प्रत्याख्यानगोचरीभूता इति कथ स्थावरीभावमापन्नाना तेषा प्राप्तपूर्वत्रसत्वाना वधे आपाद्येत व्रतविराधनामिति। चिन्त्य चान्यदत्र—येऽधुना न त्रसभावे वर्त्तन्ते, पश्चादागमिष्यन्ति त्रसभाव, ते व्रतविषया स्युर्न वा?। आद्ये, वर्तमानविशेषणेन तेषामग्रहणाद्। अन्त्ये, तेषा वधे न स्याद्विराधना व्रतस्य। दुर्ज्ञेयास्तेऽत परिहार्या इति चेत्, परिहरणेऽपि वधस्याविरतिस्तु भवन्मते तदवस्थैव तद्विषया। अन्यच्च ये वर्त्तमानत्रसत्वेन प्रत्याख्यानगोचरीकृतास्ते स्थावरभावमापन्नाश्चेत् स्युर्वधश्च तेषा सम्पद्येत तदा कथ न विराधना व्रतस्य?, तेषा वर्त्तमानत्रसत्वेनाभय स्थापनात्, त्रसत्व-परिहाराच्चेदितरत्रापि समानमेवैतत्। अथ च वर्त्तमानत्रसत्वा इति क्रियेत भावप्रधानो निर्देशो भवद्भि सम्यगध्वा क्वार्थो वर्तमानेन तर्हि, त्रसत्वेनैव तथावश्यग्रहात्। न हि विहाय वर्त्तमा-नावस्थामन्यत् विरतौ गोचरीक्रियते। न च त्रसा इति ते व्यपदि-श्यन्तेऽपीति नार्थोऽनेनेति। यावद्भववर्त्तन तत् तद्गत्यादिना व्यपदेश इत्येवमुक्त-तस्मिन् भवे वर्तमाना इति। ते किमित्याहु -'भवलोगं त विजाणीहि' त्ति। भव -पूर्वोक्तस्वरूप, स एव लोक्यमानत्वाल्लोको भवलोक तमिति। जातावेकवचनम्। तथा च तान् नैरयिकादिभवे तथारूपेण वर्त्तमानान् जीवानित्यर्थ। यद्वा—भवत्येकैव गतिरेकस्य जीवस्यैकदा, आयुषोऽप्येकस्यैव वेदन भवत्येत्येव निर्देश। एकवच-नेनानेन य आहु—भवद्वयीयमायुर्वेद्यते इति कुतीर्थिका, कायव्यूह-द्वारा वाऽनेकभवायुर्नामगोत्रादिवेदन वा, ते निरस्ता। नह्यसमा-पिते वर्त्तमानभवायुषि अन्यभवायुष्क वेद्यते, अन्यथा निष्फलमेव तत्, तद्गत्याद्यसहचारित्वाच्च न तत्त्वतस्तत्तत्। कायव्यूहश्चा-प्रमाण एव, एकस्मिन्भवे वर्त्तमाने मानुषादिके शूकरादिभवाग्रह-

णात्। विरुद्ध च योनिजशरीरस्यैवमेव ग्रहणमपि, कर्मक्षयश्च प्रदेशोदयवेदनेनापि सम्पद्यते। यत उक्त—'पएसवेज्ज सम कम्म'ति पारमार्षमपि—'पएसकम्म पुण नियमा वेएइ'त्ति। न चैव व्यवस्थानात् केवलिसमुद्घातविरोध, तेनाऽऽयुष्क वर्जयित्वाऽनपवर्तनीयत्वाच्छेषवेदनीयादिकर्मणा प्रदेशानुभवायैव तत्करणात्। अप्राप्तस्थितिकानामुपचितानां शीघ्र क्षयकरणायैव चायमेवम्भूत आयासोऽन्यथा अन्यथाऽपि भवत्येव प्रदेशतोऽनुवेदनेन क्षयो बद्धाना, अत एव च

'य. षण्मासाधिकायुष्को लभते केवलोद्गम। करोत्यसौ समुद्घातमन्ये कुर्वन्ति वा नवे'ति नियमानियमव्याख्यान सङ्गच्छते। भवति च प्राग्भवबद्ध वेदनीयमवशेषाधिकायुष्कानामधिकमन्येषा न तथेति। यद्यपि च—

'अप्प बायरमउय बहु च रुक्खं च सुक्किल चेव। मद महच्चयति य सायाबहुळ च त कम्म॥'मितिवचनात् केवलिना सयोगिनामस्त्येव प्रभूताऽनन्ताणुकसातवेदनीयकर्मणो बन्ध, पर तदैर्यापथिकमिति तृतीयसमये एवावशेषागम नश्यतीति न तदर्थमय, न च नामगोत्राणि तेन तदा बद्ध्यन्त, एकविधबन्धकत्वात्, समुद्घाते च वेदनीयस्य केवलस्य न क्षय.। यच्च क्वचित्तथाव्यपदेश, स बाहुल्यमाश्रित्येत्यलम्प्रसङ्गेन। तथा च एतान् पूर्वोक्तान् नैरयिकादीन् प्रत्येकभवगतान् भवलोक इति विजानीहीति व्युपसर्गेण पूर्वोक्तभेदविशिष्टतया ज्ञान करणीयमिति ज्ञापयन्ति। यद्वा-निरभिधानस्याप्यात्मनस्तत्तत्पर्यायतयोत्पादाद् व्यवहारेण पर्यायप्राधान्याच्चैव व्यपदिश्यमानांस्तान् भवलोक इत्यवबुद्ध्येथा इति ज्ञापयन्ति। न च द्रव्यपर्याययोः सर्वथा भिदाभिदावेति नाय द्रव्यभूतानामात्मनामात्मनाप्येतेन्न पर्यायभूतेनाभिधानेनाभिधानमयुक्तमिति ध्येयम्। निरूप्यैव भवलोकमिति षष्ठ लोकभेदमथ सप्तम भावलोकमभिधातुकामा आहुः-

**ओदइए उवसमिए खइए अ तहा खओवसमिए अ।**
**परिणामसन्निवाए छव्विहो भावलोगो अ ॥७॥**

तत्र भवन—तथा तथा वर्त्तनमिति भावोऽवस्थावैचित्र्यमिति-यावत्। स च षोढैव औदयिकादिभेदात्। यद्यप्यन्यत्रोच्यते पञ्चधेत्यपि, पर तत्र सायोगिकरूपत्वात् सान्निपानिकस्य स्वतन्त्र-भावत्वाभावादित्याद्यपेक्ष्य तदविवक्षा। अत्र तु सयोग प्रधानीकृत्य षड्ढेत्येवमुपन्यास। सूचितश्च तत्राऽप्यसौ 'मिश्रश्चे'त्यत्र चशब्द-करणेनेति न कापि विरुद्धता आप्तोदिताऽऽगमाना चिन्तनीयेति। तत्र उदय—प्राग्बद्धाना कर्मणा यथायोगमबाधाकालेन विपाकाभि-मुख्य, तेन निर्वृत्त इत्यौदयिक। उदये भवो वौदयिक। स चाने-करूपोऽपि परिस्थूरतयैकविंशतिविध। पठ्यते च-'गतिकषायलिङ्ग-मिथ्यादर्शनाज्ञानासयतासिद्धत्वलेश्याश्चतुश्चतुस्त्र्येकैकैकैकषड्भेदा' (तत्त्वार्थ) इति। तत्र गतिः पूर्वोक्ता नैरयिकादिका चतुःप्रकारैव। कषाया. कष्यन्ते-हिंस्यन्ते स्वस्वरूपविपर्यासिन दो.स्थ्यापादनादभि-भूयन्ते कर्मभिर्येष्विति कषा—भवास्तेषामाया—वृद्धिकारका ये ते कषायाः क्रोधमानमायालोभाख्या अनन्तानुबन्ध्यप्रत्याख्यानप्रत्या-ख्यानावरणसञ्ज्वलनविकल्पाः। एते एव कर्ममूलभूता रसस्थिति-वृद्धिकारणं, यदाहुः—'ठिइ अणुभाग कसायओ कुणइ'त्ति। अत एव वक्तव्यता विशिष्टामाहुः— अनूनापूर्वदशपूर्वधरणस्तम्भा.—

'रागद्वेषपरिगतो मिथ्यात्वोपहतकलुषया दृष्ट्या। पञ्चाश्रवमलबहुला-र्त्तरौद्रतीव्राभिसन्धान ॥१॥ कार्याकार्यविनिश्चय-सङ्क्लेशविशुद्धिलक्षणैर्मूढ.। आहारभयपरिग्रहमैथुनसञ्ज्ञाकलि-ग्रस्त ॥२॥ क्लिष्टाष्टकर्मबन्धनबद्धनिकाचितगुरुर्गतिशतेषु। जन्ममरणैरजस्रं बहुविधपरिवर्त्तना भ्रान्तः ॥३॥ दुःखसहस्रनिर-

न्तरगुरुभाराक्रान्तकर्षित. करुण । विषयसुखानुगततृप कषाय-वक्तव्यतामेति ॥४॥ (प्रशमरति ) अत एव च सङ्क्षेपभूता एते रागद्वेषशब्देन तत्र प्रतिकूलकर्त्तृतया निर्दिष्टा यथा—'अष्टविधकर्म-बन्धस्य हेतू ता'विति । 'रागद्वेषोपहतस्य केवल कर्मबन्ध एवास्ये'ति 'रागद्वेषक्लिन्नस्य कर्मबन्धो भवत्येव'मिति । तस्माद् रागद्वेषादयस्तु भवसन्ततेर्मूलमिति ।

'को दुक्ख पाविज्जा कस्स व सुक्खेहि विम्हओ हुज्जा । को व न लभिज्ज मोक्ख रागद्दोसा जइ न हुत'॥त्ति । स्थाने स्थाने यावच्चारित्रस्य लक्षण कुर्वद्भिर्यथाथस्यैवमेवोदित-'यच्चरणमकसा-य'ति । अत एव च 'वीतरागयतिश्राद्धसम्यग्दृष्टित्वघातका' इति च पठ्यते । तथा लिङ्ग्यते—गम्यते मोहनीयोदयोऽनेनेति लिङ्ग, स्त्रीपुनपुसकवेदभेदात् त्रिधा । यद्यपि चान्यत्र नेपथ्यचिह्नवेदभेदै-स्त्रिधोच्यते इद, परमाद्यस्य यथारुचि देशरूढ्या वा विधाना-न्मध्यस्य च नामकर्मावान्तरनिर्माणभेदप्रयोज्यत्वान्नाऽत्राधिकार । अत्र तु पुस्त्र्युभयविषयकासेवनेच्छारूपस्यैव तस्य ग्रहणात् । तथा च स्त्रीपुंलिङ्गसिद्धत्वेपि न क्षतिस्तेषामेव प्रकारस्यास्याभावात् । उपात्ते स्त्रीपुसान्यतरशरीरे च क्रमेण वेदत्रयवत्त्वेपि क्षुल्लकादिवन्न क्षतिरिच्छारूपत्वादेतस्येति । मिथ्या-विपरीत, दर्शन-श्रद्धानमस्मा-दिति मिथ्यादर्शनमिति विग्रहान् मिथ्यात्वमोहमिश्रमोहसम्पाद्य आत्मपरिणामो, येन जीवादीनां यथार्थतया यदश्रद्धान, तथा चाज्ञाभोगिकमिथ्यात्वादौ नाव्याप्ति । यद्वा—सम्यग्मिथ्यात्व-तदुभयरूपस्य त्रिविधस्यापि ग्रह, आद्यस्यापि शङ्कादिकारकत्वेन कथञ्चित्तथात्वात् । अथवा-पूर्वोक्तविग्रहेणैव मिथ्यात्वमोहनीयमेव ग्राह्यं, परौ तु तद्विशुद्ध्यर्धविशुद्धिरूपौ भेदाविति न ताभ्यामर्थ. । विपरीतता च धर्मधर्म्युभयरूपेणापीति नैकादिधर्मस्यान्यथा

श्रद्दधानस्य निह्नवादेर्मिथ्यात्ववत्त्वेऽव्याप्तिरनेकत्वेऽपि चैतस्य 'असीयसय किरियाणमकिरियवाईण होई चुलसीई। अन्नाणिय सत्त-ट्ठी वेणइयाण च वत्तीसे'।। त्यादिना वहुविधत्वाद्वैपरीत्यरूपत्वेनैक-विध्यान्मिथ्यात्वमोहोदयस्य वैकरूपत्वादेकधैव व्यपदेश। न शक्यन्ते वा मिथ्यामतान्याख्यातु विभागश, 'जावइया वयणपहा तावइया चेव हुति नयवाया। जावइया नयवाया तावइया चेव परसमय'त्ति वचनादिति सामान्यरूपेणैतन्निर्दिष्टम्। भवति वैकदा जीवस्यैक-स्यैकस्यैवोदयो मिथ्यात्वस्येत्येव व्यपदेशो। नह्येकाद्यक्षरसङ्ख्यया मिथ्यात्व किन्त्वश्रद्दधानेनैव तत्त्वस्य देशत सर्वतो वा। तथा चैकाक्षरारुचिमतोऽपि मिथ्यात्वोक्ति सूत्रानुयोगप्रधानैरभिमता सङ्गच्छते। तथा चाऽवाच्यनूचानै –'सूत्रोक्तस्यैकस्याप्यरोचना-दक्षरस्य भवति नर। मिथ्यादृष्टि सूत्र न: प्रमाण जिनाभिहित'।।मित्यादि। अत एव च व्याख्याप्रज्ञप्तौ श्रमणानामपि स्पष्टं शङ्काकाङक्षादिमोहोदय प्रतिपादित प्रवच-नप्रधानै सम्भवितया। आभिग्रहिकानाभिग्रहिकानाभोगिकाभिनि-वेशिकसाशयिकत्वेन पञ्चधा भेदाऽऽख्यान त्वस्य प्रायिककारण-विभागदर्शनाय, न तु कार्यपरिगणनायेति तत्त्व यथार्थमजानता जैनागमानुसार्यभासाना अयथायोग्यदेशनाविधायिना वालादीना तथात्वेऽपि न क्षति काऽपि। वन्धादिहेतावपि चैतदभिप्रायेणैवोप-न्यामोऽस्य पञ्चभेदतया वालबोधाय वा स तथा तत्र निर्भिण्ण-मुनिवर्यैरिति सुधियोह्यम्। अत एव चाभियुक्तै पापहेतून् व्याख्या-यमानै 'हिंसानृतादय पञ्च तत्त्वाश्रद्धानमेव चे'ति तत्त्वाश्रद्धान-मात्रस्य तथात्वमुक्तम्। तत्त्वत्व चाऽत्र वस्तुवस्तुस्वरूपान्यतरत्वम्। तथा चात्रापि देशनिह्नवपरा निह्नवा उपात्ता एव,अन्यथा स्यात्त-त्राव्याप्तिरित्यल विस्तरेण। तथा ज्ञप्तिर्ज्ञान; तदभावो ज्ञानाभा-

वोऽज्ञानमेकमेव। मत्यज्ञानादित्रय तु कुत्सितत्वान्मिथ्यात्वोपहितत्वे-नाज्ञानान्युच्यन्ते। अत्र तु ज्ञानाभाव एवैतच्छब्देनोच्यते। पञ्चवि-ध-य ज्ञानावरणस्योदयेन न भवत्येव च ज्ञानमिति नाऽनौदयिकमे-तत्, ज्ञानस्वभावत्वादात्मनो यन्न तदाविर्भवति, तदेतज्ज्ञानाऽऽवृत्या-दिमाहात्म्यमेव। तथा चावाचि-'सरउग्गयससिनिम्मल:स जीवस्स छायण जमिह। णाणावरण कम्म पडोवम होइ एव तु ॥१॥ इत्यादि। तथा चाजीवाना जडिमावष्टब्धत्वेऽपि न क्षतिस्तेषा ज्ञान-स्वभावत्वाभावात्तदज्ञान यानौदयिकत्वात्। न हि व्यपदिश्यतेऽन्धो वृक्षोऽन्धा पिपीलिकेत्यादि। सत्यामेव योग्यतायां तदभावे तेन व्यप-देशात्। जडोऽजीव इतिव्यपदेशस्तु जीवलक्षणवैधर्म्यताज्ञापनायैव, अन्यथा श्रद्धानाभावाद्विरत्यभावाच्च मिथ्यात्वी अविरत इत्यादेरपि व्यपदेश्यत्वापत्ते। अ-तु जडत्वमशेषशेषजीवगुणनिषेधोपलक्षण, पर नैतज्ज्ञानावृत्याद्युदयज किन्तु स्वाभाविकमेव। नहि पुरुषस्य गर्भानाधान, स्त्रिया प्रसूतौ तिरश्चामजनन दूषण, तत्स्वभावाभा-वादेव। वन्ध्यायाश्च स्पष्टमेव तद्दूषण जनियोग्यत्वेऽप्यजननादिति। अय च भावभेदोऽवतिष्ठतेऽर्वाक्केवलोत्पत्ते., यतोऽन्यज्ञानसद्भा-वेऽपि। तेषां क्षायोपशमिकत्वात् सर्वथा ज्ञानाऽऽवृत्यपगमाभावात्। आवृतकेवलस्य प्रभाविशेषो हि मत्यादिविपुलजलधरपटलावृतसूर्यस्य या काश्चित्प्रभा इवेति न तानि निरावरणानि। तथा न तेषा समुत्पत्तावपि नाश सर्वथाऽस्य। न च वाच्य प्रतिहतमिद ज्ञाना-ज्ञानयो सहावस्थानमिति। प्रतिहतमेतत् वस्त्वाद्यपेक्षया न तु सर्वथा। नहि ज्ञानमात्रेणाज्ञानमात्रस्य सहानवस्थानलक्षणो विरोध अनुभवोऽपीत्थमेव। तथा च यदपेक्षया यस्य यावद्यथा च जात ज्ञान तदपेक्षया तस्य तावत्तथाभूतस्याज्ञानस्यानवकाश इति सिद्धेर्नाज्ञानस्यावस्थान चतुर्ज्ञानिष्वप्यसङ्गत, पूर्वोक्तयुक्ते-

रिति। ज्ञानावरणोदयविहितज्ञानतिरोभावरूपत्वमज्ञानत्वमिति फलितोऽर्थः। ननु च कर्म तावन्मूर्तिमत्, पूर्वं पौद्गलिकत्वप्रतिज्ञानात्। आत्मगुणश्च ज्ञानं, आत्मा च रूपरसादिरहितोऽमूर्त्त इति कथं मूर्त्तिमता कर्मणाऽऽत्मन आवृतिर्ज्ञानादितिरोभावो वा सम्भवतीति चेद्, अमूर्त्तेनाऽप्याकाशेन यथा हि मूर्त्तिमतोऽपि घटस्य संयोगस्तथा कर्मणाऽऽत्मनः संयोगे किमघटमानकं?, येनैव नोद्यते। न वा प्रत्यक्षेऽनुपपन्नं नाम। प्रत्यक्षो हि देहेनात्मनः स्थूलेनापि योगो, अन्यथा स्पार्शनादेरयोगात्। नह्यात्मसंयोगमन्तरेण शरीरेण स्पर्शादिज्ञानमुपपद्यते कथमपि, विभुत्वमङ्गीकर्तुर्वैशेषिकादेरपि शरीरावच्छेदेनैवात्मनो ज्ञानोत्पादाङ्गीकारात्। न च तत्सम्बन्धमन्तरेण भवति तथेति। न च घटते विभुत्वे मरणादिः, भूतमात्रवादप्रसङ्गोऽन्यत्र स्मृत्याद्यभावः प्रत्येकं पृथगदृष्टाभावः प्रतिनियतकर्त्तृताभावः प्रेत्यादृष्टावेदनं चेति त्वन्यदेव। यथा च ज्ञानसाधनत्वं शरीरेन्द्रियमनसां साक्षादनुभूयते, तथा तस्य प्रतिबन्धकमपि मूर्त्तिमत् स्यात् तदा का विप्रतिपत्तिः?। ज्ञानावरणीयस्यैव तथास्वभावो यद्येनात्मना सम्बद्धं तत् तस्य स्वप्रकृत्यैव हरितक्या विरेचनविधानवत् ज्ञानमाच्छादयति। वक्ष्यते च तत् विहायाऽष्टप्रदेशान् नाभिगान् रुचकाख्यानशेषैरात्मप्रदेशैस्तेषां चलत्वादेकोपयोगपरिणतेश्च सर्वेषां सम्बन्धश्चास्यात्मप्रदेशैर्लोलीभावेन नोपरि न वाऽधस्तान्न वा पार्श्वयोरिति कथं न तज्ज्ञानमाच्छादयेत्?। अनेन ये आहुः-किं कर्म ज्ञानमाच्छादयत् दर्शनादिकं नाच्छादयति, कथं प्रदेशाष्टकं नाच्छादयेत् येन ते केवलिवन्निर्मलतां दधीरन्, अन्यथा जीवत्वोपहतेः, कथं वा सर्वत्र बन्धः, कथं च तेषां तथाभावत्वे ज्ञानावरणीयकर्मवर्गणानिचिते लोकेऽप्रतिहतं ज्ञानं केवलिनां प्रसरेत् ... -वेन प्रतिबन्धकतायां च ज्ञानावरणा-

वृतात्मप्रदेशा. कथङ्कार ज्ञायेरन्नित्यज्ञानवद्भिः केवलिभिरित्यादि निरस्ता । स्वभावोपयोगानेकत्वाधिकरणभूतत्वादिनावृतेः । न च वाच्यममूर्त्तं गुणरूप वा तदस्तु, अमूर्त्तत्वे तावत् केषाञ्चिन्मतेन विभ्वोः सयोगानङ्गीकाराद्, अङ्गीकारेऽपि नभस्वदनुग्रहोपघात-कर्त्तृत्वाभाव । यतो नह्यमूर्त्तस्य घटते बन्धादिक किञ्चिदपि, न च विपाक शरीरादिद्वारा दद्यात् कमपि । तथाङ्गीकारेऽप्यमूर्त्तत्वेन तस्यात्मन एव तथास्वभावाङ्गीकार क्रियया विविधया विविधं युक्तो, न पृथक्कर्मकल्पन । गुणत्वमप्येतस्य विरुद्धाधिकरणकत्वेन नैव युक्त, यतो नहि श्वेताश्वेतयोरेकस्मिन् स्यात् पार्थक्येनानुभ-वोऽधिकरणे, सम्मिश्रतयैवानुभवात् 'समाधिकौ पारिणामिका' वि-तिवचनाच्च । कर्म तु प्रत्यक्षमेवानुभूयते उभयथाऽपि । यतोऽन्धो राजकुमार, श्रेष्ठी वधिरश्च रूपवान् व्याध, रोग्यनपत्यश्च धनवान्न स्युश्चेन्न द्विधा कर्मेति । न च विरुद्धाधिकरणत्व विरुद्धानुभवश्च युगपद् द्रव्यत्वेपि तस्य स्यादिति वाच्यम् । कवोष्णजले उभयाधि करणत्व विरुद्धयोरपि सतो. समावेशात् । विरुद्धानुभवश्च किं न दृष्टो रसवत्यादौ विचित्ररसवद्द्रव्या नुभवेन ज्ञानाज्ञानयो कथ समावेश इति तु नैव नोद्यम् । द्रव्यौपाधिकत्वादेव तस्य, निर्णीत चैतत्पूर्वमेव । यद्वा-आवृतिरेव तत्र, नान्यदज्ञान, तस्या एव तथात्वेनानुभवात् । नैवमत्र पुण्याभाव पापाभावो वा पाप पुण्य वा, येन स्याद्युक्तिसङ्गत कर्मणो गुणत्वेऽपि विरुद्धसमानाधिकरणत्वम् । न चामूर्त्तस्य गुण-रूपस्य वा नाशोऽपि तस्य युक्तो, अमूर्तस्य वियोगरूपविनाशाभा-वात् । गुणस्यापि च वियोगाभावात् । न च नश्यति गुणो गुणान्तराऽ प्रादुर्भावे । न चेष्यते कोपि मुक्तौ गुणलेशोऽपि तैर्वैशेषिकादि-भिस्तन्न कर्माऽमूर्त्त गुणरूप वेति । अनेन गेहेनर्दिनो वाचस्पत्यादयो निरस्ता ज्ञेया । ज्ञानस्यैव ज्ञानावरणतया जैनमताश्रिते पक्षे तैर्व्याख्यानात् । ननु ज्ञानस्यात्मस्वभावात्वात् कथ कर्मणा तदभाव

आपादयितुं शक्यः, सम्भवे च तस्य कथं नात्मनोऽप्यभावः स्यात् स्वभावापगमादिति चेत्, तस्य न विधीयते तेन व्युच्छेद आवृत्तिश्च पटादिभिः प्रदीपादेर्दृश्यत एव । न चैतावता दीपप्रभादर्शनाभावमात्रेण दीपो नष्ट इति ब्रूयाद्वस्तुब्रुवः कश्चित् । तथा च नास्य स्वभावापगमः । न च सर्वथाऽभावोऽप्येतस्येति । ननु कथं शुद्धस्वरूपस्यात्मनः कर्मणा योग इति चेत् । कः किमाह ? नेदं मतमार्हतं, अनादित्वात् कर्मयोगस्य । व्युच्छेदश्चानादेरपीति त्वन्यदेव । तदिदमाह— 'शुद्धस्य पूर्वं यदि कर्मसङ्गमः, तदास्य सिद्धेष्वपि दुर्निवारते'त्यादि । विफलं च स्यात् परमार्थतो यमाद्यनुष्ठानम् । एवं सति मुक्तावप्यनाश्वासात् । कथं चानादिः कर्मयोगो, नाकस्मिकतोत्पत्तिश्च कथं, कथं च निर्हेतुकत्वे सदा सत्त्वासत्त्वभावेन कादाचित्कत्वं वेति चेत् । मिथ्यात्वादेरप्यनादित्वादेव बीजाङ्कुरन्यायेन च कर्मणः मिथ्यात्वादेश्चान्योऽन्यं कार्यकारणभावः, प्रवाहापेक्षयानादित्वं; व्यक्त्यपेक्षया च सादित्वमिति नाकस्मिकत्वं; न च निर्हेतुकत्वमदृष्टस्येत्यलं विस्तरेण । असंयतत्वमिति । तत्र संयमनं—प्राणवधानृतादिभ्यो विरमणं संयतं । 'क्लीबे क्तः' [सि० ५।३।१२३] इतिभावे क्तविधानात् । यद्वा—संयमनं संयतिः 'स्त्रियां क्तिः' [५।३।९१] । रिति क्तिविधानात् पश्चादभ्रादेराकृतिगणत्वात् संयतिरस्यास्तीति संयत इतिमत्वर्थीये अप्रत्यये स्यादेव । यद्वा 'अविवक्षितकर्माणोऽकर्मका सकर्मका अपि' प्रा'गितिनियमात् उपरतेरपि वा गत्यर्थत्वाद् 'गत्यर्थाऽकर्मक—पिब—भुजे' [५।१।११] रिति कर्त्तरि क्ते संयच्छति प्राणवधानृताद्याश्रवेभ्यस्त्रिविधत्रिविधेन क्रोधादिभ्यः कषायेभ्यः श्रोत्रादिभ्योऽक्षेभ्यस्तदिष्टानिष्टविषयकरागपरिहारेणेति संयत इति सर्वत्राऽप्यर्थतो न भिदा । न संयतोऽसंयतः तस्य भावोऽसंयतत्वं—अप्रत्याख्याताश्रवद्वारत्वमित्यर्थः । एतदपि कर्मोदयसम्पाद्यत्वादौदयिकमेव । ननु कतमस्य

कर्मण उदयेनैतत्? कषायमोहनीयस्येति गृहाण। अथ च किं पृथगुपन्यासः कषायेभ्योऽस्य, ते न्यस्ता एवौदयिकतया पूर्वमेव द्वितीयभेदतयेति चेत्। सत्यं यथाहि— कषायेषु न्यस्तमप्यनन्तानुबन्धिचतुष्कं पूर्वं पुनर्मिथ्यादर्शनं तत्कार्यभूतं पृथगुपान्यासि, तथेदमपि स्यात्। ननु न केवलं तदनन्तानुबन्ध्युदयप्रभवं तस्य तद्विधायित्वेऽपि, कथमन्यथा क्षीणानुबन्धिनोऽपि मिथ्यात्वमोहस्याक्षयात् पुनस्तत्प्रचयप्रसङ्गोऽवतिष्ठते वा मिथ्यात्वं तत्क्षये, इति दर्शनमोहनीयोद्भवत्वमेव तस्य युक्तियुक्तम्। पठ्यते च चारित्रमोहनीयभेदेष्वेवैतच्चतुष्कं कथं चैतच्चारित्रमोहस्तर्हीति तु प्रेर्यं न, प्रकृतोपयोगि भवतु वा सम्यक्त्वसदाचारमोहत्वाद्विना तस्य तथात्वं, परं मिथ्यादर्शनस्य पृथगुपन्यासो न द्विरुक्तोऽनन्तानुबन्धिकषायोपन्यासेऽपीत्येतावन्मात्रस्य प्रकृतत्वात्, परं चारित्रमोहनीयभेदेषु कषायेषूपन्यस्तेषु न युक्तोऽस्य पृथगुपन्यासः। नोकषाया अपि च लिङ्गभेदकथनेन सूचिता एव। न चान्यदसयतत्वकारणमप्यस्तीति नार्थोऽनेन भेदेनेति चेत्, सत्यं प्रतिपादितं परं चिन्तनीयमेतदानर्थक्यमस्य गुणघातकताज्ञापनाय कषायाणां पृथगुपन्यासस्य साफल्यात्। भवति चौदयिक एवान्यनवीनकर्मबन्धकारणं, परं न स औदयिकत्वेन किन्त्वसयतत्वद्वारैवेति ज्ञापनाय। तथा चानादित्वमपि स्यात् कर्मण इति नानर्थक्यं, ज्ञात्वाभ्युपेत्याकरणं वा पापस्य विरतिरिति कथ्यते, तदभावरूपं चासयतत्वमिति न तत्कषायोपन्यासमात्रेण गतार्थं, कारणकार्ययोः पार्थक्याद् वा एवमुपन्यासः। यद्वा-यथा मोक्षसाधनीभूतेषु सम्यग्दर्शनज्ञानचारित्रेषु आद्यद्वितीययोः प्रतिपक्षभूते निरूपिते साक्षान्मिथ्यादर्शनमज्ञानं चेत्यवशिष्टस्य प्रतिपक्षभूतमसयतत्वमपि स्पष्टतया निरदेश्यपवर्गमार्गविहितलक्ष्यैः सूरिभिः, अन्यथा 'केवलियनाणलंभो

नन्नत्थ खए कसायाणं'ति 'सम्मणु'त्ति च प्रवचनान्न तद् द्वयमपि पृथग् निर्दिश्यात्। यद्वा-अन्य एव भाव आत्मनोऽसयतत्व मोहनीय-सम्पाद्यम्। यतः तद्रोधायाऽप्रतनुर्विधेय प्रयत्नोऽपवर्गाभिलाषुकैः। नहि लवसप्तमानामपि निलिम्पानामुपशान्तप्रायमोहानामपि प्रादुर्भवति विरतिलेशः। अत एव च 'ज्ञानस्य फल विरतिः' 'नाणं विरइफल'मिति चागमा अप्यनुगम्यन्ते। सिद्धाश्च क्षीणाशेष-कर्मावस्करा अपि 'नो चरित्ती नो अचरित्ती'ति च यतः पठ्यन्ते, इति भावनीयं विद्वद्भिर्वीतरागागमानुसारेण वाऽविरोधमिति। न च ज्ञानवैराग्यादिसम्पाद्य सयतत्वमिति तदभाव एवासयतत्व इति तदभावमात्र तदस्तु, कथमौदयिकमिति प्रेर्यं ?। विना कर्मो-दय तस्याभावात्, कर्मोदयादेवासंयतत्वमभ्युपेयम्। अत एव विज्ञा-तवस्तुतत्त्वानामपि श्रेणिककृष्णादीना क्षायिकसम्यक्त्ववतामपि परिणामो न विरतेरनुपयोगिनोऽपि स्वयम्भूरमणमत्स्यादे, तथा लेखवराणा पर सहस्रेभ्योऽपि वर्षेभ्य आहारार्थवतामपि पवित्र-ज्ञानत्रितयशालिनां न विरतिपरिणामोऽविरता एव ते तथापरि-णामाभावादिति न ज्ञानादिना केवलेन विरतिः। न च गुणस्था-नाभावान्न कुर्वन्ति ते विरतिमिति विरतिक्रिययैव गुणस्थानप्राप्ति-व्यक्ते.। अत एव च पञ्चाशकादौ गुरुपादमूले व्रतग्रहणफल दर्शय-द्भिरसन् परिणामो जायतेऽपीति दर्शितं सूरिमुख्यैरिति नैतन्मा-र्गानुसारिवचनमिति। न च विना कर्मोदय भवत्यसयतत्वमिति युक्तमस्यौदयिकत्वम्। अनेन येऽकरणमेव पापपरिहारकतयोचु., ते निरस्ताः। सूक्ष्मैकेन्द्रियादीना किञ्चिदप्यकुर्वता विरतिबाहुल्य-प्रसङ्गात्। अत एव च कलिकालसर्वज्ञायमान-श्रीशब्दानुशासना-पूर्वसौधसूत्रधारा निशाभोजनविरतिमाश्रित्याऽऽचख्युः श्रीहेम-सूरिपादा:—

'अकृत्वा नियमं दोषा—भोजनाद्दिनभोज्यपि । फलं भजेन्न निर्व्याजं न वृद्धिर्भाषितं विने ॥१॥ त्यादि । ननु च किमित्यविरत्या क्रियते औदयिक्यापि, बन्धश्चेत्, न क्रियते चेत्पापं कथं भविता बन्धः ? कृतायामपि च तस्यां यदि स्यात्पापाचरणं,दुरुद्धरपापप्रचयो 'वयभंगे गुरुदोसु'त्तिवचनात्, मुक्ताश्चान्यलिङ्गिनोऽप्यनन्ताः' न च ते विरतिं प्रपन्नवन्तः प्रागिति नार्थोऽनेनेति चेत् । न, विचारयन्तां तावद्विचारविचक्षणा यत्—कथं न क्रियते विरतिः पापेभ्यो भवावपातावर्त्तेभ्यो? ज्ञानादज्ञानान्मिथ्यासंस्कारादालस्यान्मोहादाशंसाभावाद्भविष्यज्ज्ञानाभावात् सामग्र्यभावात् कर्मोदयाद्वेति विकल्पनवकमुपतिष्ठते । आद्यो न, तस्य विरत्यप्रतिबन्धकत्वात् ज्ञातपापफलानां च विशेषतो विरतिभावाद् । अत एवोत्तराध्ययनेषु 'नाणेण विणा न हुंति चरणगुणं'त्ति बभणुः स्थविरपादाः, 'ज्ञानस्य फलं विरति'रित्यादि च वाचकमिश्राद्याः, स्वीचक्रुश्च श्रीमत्तीर्थंकरपादा ज्ञानत्रयान्विता अपि विरतिं भरतादयश्च लब्धकेवला अपि । ननु च कथं श्रीतीर्थंकरपादा गार्हस्थ्यव्रतानि न स्वीकुर्वन्ति ज्ञानत्रयान्विताः सन्त आजन्मतोऽपीति चेत्, तथापरिणामाभावादेव । यद्यपि श्रीमदपश्चिमजिनवरा गार्हस्थ्ये प्रान्ते वर्षद्वयं नैव पपुरप्रासुकोदकं, नैव विदधुश्च स्नानादिकामपि शरीरशोभां, साधुवदेव तस्थुरेष एव च परिणाममहिमाऽपूर्वः, कथमन्यथा दिदिशुरानन्दादिभ्यस्तानीति । यद्वा-तेषां कल्पातीतत्वान्नान्यगुरुपार्श्वे व्रतानां ग्रहणं योग्यं, न च भवति विरतिरगुरुका, धर्माचार्यमूलत्वात्तस्याः । न केवलं स्वीचक्रुरेव केवलां विरतिं, किन्तु प्रत्याख्यातवन्त एव 'करेमी'त्यादिना । स्पष्टं चैतदावश्यकादिषु स्पष्टितं पूज्यपादैः । तन्न ज्ञानादविरतेः सम्भावनापि । सिद्धानां तु सकरणवीर्याभावादेव न विरतिरूपं चारित्रमिति नैव तत्र चोद्यं किञ्चिदपि । अथाज्ञानादिति

कक्षीक्रियते चेद् द्वितीयो विकल्पः, परं न स सुन्दरस्तस्यैव तावन्निखिलानिष्टादृष्टवृक्षनिरूढमूलत्वात्। नह्यज्ञानात्क्रियमाणाऽविरतिं भवत्यृते पापप्रचयबन्धमन्यस्मै। अत एवाख्यायते 'अज्ञानं खलु भोः कष्टं क्रोधादिभ्योऽपि सर्वपापेभ्य' इत्यादि। यच्चोच्यते–जानत आकुट्टीभावो, नाजानतामिति तन्न, यन्न ज्ञानाज्ञानमाहात्म्यं, तत् जानता क्षान्त्यादिना प्रायश्चित्तादिना च शुद्धीभावात् अज्ञानिना च द्विर्बन्धीभावात्, केवलं भद्रकतैव तथोपयोगिनीति तु तत्त्वमिति। अन्यथा कथं न गच्छेयुरपवर्गमेवाज्ञानभृता वरिष्ठा निगोदा एवादितः। अन्यच्चाज्ञानात् क्रियमाणाऽविरतिः शोभना स्यादिति ज्ञानमपि कथं न ते बन्धाय, अज्ञानस्य च बन्धाभावे स्पष्टमेवाभ्युपेयमज्ञानात्मकं, बन्धाभावमयत्वात्तस्य। किञ्च-अज्ञानस्य तातेऽपि पापे शुद्धताभिमानिनो विशेषेण पापबन्धप्रसङ्गात्। अत एवाहुः–

'पावं काऊण सयं अप्पाणं सुद्धमेव वाहरइ। दुगुणं करेइ पावं बीयं बालस्स मंदत्त'मिति। अत एव च 'अन्नाणी किं काही' तथा 'पढमं नाणं तओ दये'ति च पठ्यते, तन्नाज्ञानमात्रेण विरतेरकरणे पापबन्धाभावः। स्पष्टमेव च तथा सति तस्यौदयिकत्वमिति पापबन्धहेतुत्वं, तथात्वाभावादन्यस्य। अत एव च-'क्षायोपशमिकाद्भावादौदयिकवशङ्गतः। प्रतीपं क्रमणं तत्र प्रतिक्रमणमुच्यते' इति प्रतिक्रमणं व्युत्पाद्यते अथ मिथ्यासंस्कारादिति तृतीय आश्रीयते विकल्पस्तृतीयप्रकृतिकमिव नाऽलमिष्टसिद्धये कामिन्या इव भवताम्। यतो नहि ततः क्रियमाणं किमपि विना कर्मबन्धं पुष्णात्यपरम्। नहि विषमविषभोजिना विकारभावेऽवाप्यते जीवितवृद्धिः। किञ्च-यदि न नष्टो मिथ्यासंस्कारोऽद्यापि तर्हि स राजा बन्धहेतूनां प्रशास्ति तं जीवं दुर्भाग्यशेखरं महाबन्धरूपयाऽप्रतिहतयाऽऽज्ञया 'पल्ले महइमहल्ले नालिं सोहेइ पक्खिवे बहुअ'मित्यादि-

वचनात्। न चैतावता तस्याविरतिप्रत्ययो न कर्मबन्धो, मिथ्यात्विनामवश्यम्भावात्तद्बन्धस्य। यतो 'बंधस्स मिच्छअविरइकसायजोग'त्ति 'चउहेऊ' इत्युपक्रम्य 'इगचउपणतिगुणेसु अ चउतिदुइगपच्चओ बन्धु'त्तिवचनात्। न च विद्यमानो बन्धस्य हेतुर्विहाय तं कुर्यादन्यत्किञ्चित्। तदवश्यम्भावी मिथ्यात्ववतोऽविरतिप्रत्यय कर्मबन्ध। ननु श्रद्दधानस्य जीवादितत्त्व कथ मिथ्यात्वाविरतिप्रत्ययो बन्ध इति चेन्, ननु परस्परव्याहतमिद जीवादीनां श्रद्धान मिथ्यासस्कारश्च। यावत्सस्कारास्तथाप्रकारा जाग्रति, न तावत्तेन श्रद्धितं जीवादि तत्त्वम्। अथ चाभ्यासाभाव एवोच्यते मिथ्यासस्कारशब्देन, श्रद्धान त्वप्रतिहतमेवेति चेत्, तस्य न भवति मिथ्यात्वप्रत्ययो बन्ध, परमविरतिप्रत्ययिकस्तु वज्रलेप इव स्थाणुरेव। नह्यविरतसम्यग्दृष्टयोऽपि यथाशक्ति निह्नुवते उद्यम,किन्तु शक्त्यभावादेव तेऽविरतास्तिष्ठन्ति। देशविरता अपि शक्तिशून्यत्वादेव नाद्रियन्ते महाव्रतानीच्छा तूभयेषामपि तद्विषयेऽप्रतिहतैव। अन्यथोभयेषा संवेगनिर्वेदास्तिक्यादीना सम्यग्दर्शनलक्षणानामेव देशविरतेस्तप्ताय कटाहपदन्यासतुल्यत्वाद् तेषां सर्वविरत्यनुरागेणैव भावात्। अत एवोचुरनूचाना –'यतिधर्मानुरक्ताना देशत स्यादगारिणा'–मिति प्रकृत। यथाशक्त्युद्यमने च भविष्यति लघुःशेषाऽविरतेर्बन्ध, 'निरीहशक्यपालना' 'अशक्ये भावप्रतिबन्ध' इति परममुनिवचनात्। ननु च यदि न गत मिथ्यात्व तत्सस्कारो वा, व्रतेच्छा च जाता तर्हि देया तस्मै विरतिर्न वा?। आद्ये, अनुचिता क्रिया, सम्यक्त्वमन्तरेण विरतिलक्षणाया उत्तरगुणस्थानीयक्रियाया करणात्। अदाने कथ कस्याविरतिप्रत्ययो बन्धो, भावतस्तेन विरते प्रतिपन्नत्वादिति चेत्। नैतन्मार्गतत्त्वविदुषा वचन। यदि मिथ्यात्व न गत, तर्हि नास्त्येव परमार्थतस्तस्य विरिरसा, परमार्थाभिलाषजाताया

एव तस्यास्तथात्वात् । अस्तु वाऽसौ, तथापि यदि गीतार्था जानन्ति यदेष योग्य तर्हि तस्याऽपि ददत्येव व्रतानीति । एवमेव च परविवाहकरणस्य कन्याफललिप्सयाऽभिहितातिचारता सङ्गच्छते । उपदेशप्रक्रमेऽपि चालब्धसम्यक्त्वानामपि मद्यमांसपरदारादिविरतीनामुपदेश्यत्वाभिधानं चोचुश्च परमपुण्यवाराणसीविबुधविजयावाप्तन्यायविशारदपद–ग्रन्थशतविधानावाप्तन्यायाचार्यपदा श्रीयशोविजयपादा.–

'अतो मार्गप्रवेशाय व्रत मिथ्यादृशामपि । द्रव्यसम्यक्त्वमारोप्य ददते धीरबुद्धय.॥ इत्यादि । आर्यसुहस्तिमिश्राश्च ददुरेव तथाविधाय सर्वविरतिमपि । एवमेव च क्रियारुचिसम्यक्त्वमपि सङ्गच्छते । परमवधेयमेतदिह यत्-नाविरतिप्रत्ययो बन्धोऽपगच्छति तावद्, यावत्परमार्थतो न स्वीकृता विरति । अत एव च गोविन्दाचार्यादीना सम्यक्त्वलाभे पुनर्व्रतोच्चारादि सङ्गच्छते । अन्त्ये तु वाच्यमेव न । यतो नहि तस्य पारमार्थिकी विरिरंसैव, विना सम्यक्त्व तदभावादेवेति । न मिथ्यात्वसंस्काराद् विरतेरप्रतिपत्तौ नाविरतिप्रत्ययो बन्ध. । आलस्यादित्यपि विकल्पो नाल बन्धाभावसमर्थनाय । यत. पठन्ति लौकिका अपि-'आलस्य हि मनुष्याणां शरीरस्थ. परो रिपु'रित्यादि । चिन्त्य च क्व भवेदालस्यं? येन न स्याद्विरतिप्रतिपत्ति., धर्मश्रवणे तद्बोधे व्रतप्रतिपत्तौ वा ?। नैतेष्वेकमप्यात्मनस्त्राणाय बन्धात् । 'आलस्स–मोहवन्ने'त्यादिनाऽनुयोगप्रधानैस्तस्यैवादेव न [illegible]कतयैवाम्नातत्वाच्च नेदं क्षेमङ्करं धर्माभिलाषु[illegible] अत एव चाऽऽलोचनायामपि–'आलोयणापरिणओ सम्मं संपट्ठिओ गुरुसगासे' इत्यत्राऽऽराधनकारणतया सम्प्रस्थितत्वमाचख्यु पूज्या । अपि चाऽऽलस्यं चेद्बुभुक्षितस्याप्तायामपि भोजनसामग्र्यां कथमर्थं पुष्णाति ? न चेत्कमपि, कथम-

त्रापि कुर्यादत्र न तत् कर्मबन्धात् । 'मोहादित्यपि नैव सुन्दर विकल्पन, निखिलानिष्टादृष्टमूलभूतत्वादस्य न तेन क्रियमाणाऽविरतिर्भवति बन्धात्त्राणाय, किन्तु 'वीय वालस्स मदत्त'मितिवत् प्रत्युत गाढबन्धनवद्धत्वम् । अत एव च वाचकमिश्रैर्विरतिदुर्लभत्वाख्याने न्यस्ता एतत्प्रमुखा हेतव । तथा च तद्वच –'ता दुर्लभा भवगतैर्लब्ध्वाऽप्यतिदुर्लभा पुनर्विरति' । 'मोहाद् रागात् कापथविलोकनाद् गौरववगाच्चे'त्यत्र तामिति बोधि, पूर्वश्लोके सुदुर्लभा बोधिरितिपर्यवसानात् । न च विमुच्य मोहमन्यदस्ति कर्मणा निदान बन्धेऽवस्थाने वा, 'जोगा पयडिपएसं ठिइअणुभाग कसायओ कुणई'ति 'मस्तकसूचिविनाशात्तालस्य यथा ध्रुवो भवति नाश । तद्वत्कर्मविनाशो मोहनीयक्षये नित्य'॥मितिवचनाच्च । अत एव च 'केवलियनाणलभो नन्नत्थ खए कसायाण'मित्यत्र ज्ञानावरणीयक्षयलभ्यस्यापि केवलस्य कषायक्षयाविनाभावित्वदर्शनम् । वीतरागाणा चाशेषगुणरत्नैरत्नाकरायमाणत्वेऽपि वीतरागत्वगुणे न विशेषत आख्यानम् । तद्वेय एव मोहो यस्य कस्यचिदपि पुत्रमित्रकलत्रादे सम्बन्धी । आस्तामन्य , श्रीमद्गौतमस्वामिना चतुर्ज्ञानवता श्रीसिद्धार्थसिद्धार्थनन्दनगतोऽपि राग. स्नेहास्य केवलज्ञानप्रतिबन्धाय जात । उदाहृतश्च श्रीमज्जिनै 'चिरपरिचिओसि गोयमे'त्यादिना । तन्नासावालम्बनमविरतिबन्धत्राणाय । नैवाऽभविष्यदन्यथेयत्काल भवे पर्यटनं, जीवाना सर्वेषा मोहादेव संसारावासवसनात् । न च श्रीमज्ज्ञातपुत्रा अपि यथार्थवेदितया भा[illegible], सम्य[illegible]पि ससारे द्रव्यबन्धापेक्षया यावद् गार्हस्थ्य तद्बन्धशू[illegible] । [illegible]लीनमातापितृवियोगविधुरबान्धववृता अपि प्रागभिग्रहविशेषेण यच्च तस्थु', तदप्यभिप्रायमात्रमेव । अभिग्रहण न तु प्रत्याख्यानरूप, तादृशस्य प्रत्याख्यानस्याभावात्,असर्वविरते. शेषप्रत्याख्यानस्य तेषामभावात्,

रागादेव तद्ग्रहाच्च । रागस्तु 'गर्भस्थे मयि मातुरीदृक्स्नेह'इत्यादिना स्पष्ट एव । यद्यपि उचित एवासौ तेषा तथाविधमातापितॄणा शोकपरिहाराय, पर नैते कामरागादिलिप्ता , कथमन्यथा कलत्रदुहितृभगिनीभ्रात्रादिषु विद्यमानेषु व्रतमग्रहीषु । कथ वा अन्येषामतिमुक्तकादिमहर्षिभ्यो वितीर्ण महाव्रत तैर्जीवत्सु तेषा मात्रादिषु । इति नैतदप्यालम्बनीय नि श्रेयसकारणावलम्बिनाम् । आशसाभावस्तु स्पष्ट वेविद्यत एव दूषणतया, विरतानामपि चेदसौ स्यात्, किं पुनरविरतानाम् । अत एव च गोष्ठामाहिलेन 'जावज्जीव'मित्यत्र शङ्कित तद्दूषणम् , परिहृत च तत् यत्राशसया न क्रियते परत प्रत्याख्यानम् , किन्तु तत्तत्र न सम्भवति, व्रतभङ्गे च गुरुदोष इतिकृत्वा । जानता च देवेषु स्वभावतोऽविरतत्व कथ न दोषपोषस्तथा प्रत्याख्याने ऽप्येव । आशसा तु तत्राऽपि दुष्टतयैवाऽऽख्याता । सर्वविरताना पौरुष्यादिप्रत्याख्यानेऽप्ययमेव पन्था । पर तत्राग्रतो निरवद्यवर्तनेनाहारादिग्रहणान्न सामायिकबाधः, कर्मनिर्जरा तु नैव तदुद्भवा इति समाहित, तत्राऽऽशसाभावो विदध्यादृते कर्मबन्धमन्यदिति । अपेक्ष्यैवाऽऽशसा द्वितीयेऽङ्गे नगरहस्तिदृष्टान्तेनाविरताना कर्मबन्धध्रौव्यमाम्नातम्, कर्मबन्धश्चैकेन्द्रियादीना स्पष्टक्रोधादिरहितानामपि, सत्या चाऽऽशसायां वध्याना जीवानामायुरेव प्रबलं, यत्रापतित भवता प्रयोजनं, तथा च नाविरतिकर्मबन्धरहितत्वमित्यलम् । यदि स्वीक्रियते—भविष्यज्ज्ञानाभावादेव न स्वीक्रियते विरतिः, मा भूत् क्लिष्टकर्मोदये उदग्रवीर्यविरहात्तद्भावाद् दुरन्तससारारण्यपर्यटनमिति, तदापि न निस्तारो भवता दोषादविरतिसत्कात् । यद्यपि च तथाविधमेव ग्राह्य प्रत्याख्यान प्रत्याख्यानविधिकुशले , यन्न स्याद्विराधनायै यया दुर्लभबोधित्वमवाप्नुयाद् ग्राहक । यत उच्यते—"पच्चक्खा-

णविहिन्नू पच्चक्खाया गुरू होइ ॥१॥ किइकम्माइविहिन्नू उवओगपरो अ असढभावो अ। सविग्गथिरपइन्नो पच्चक्खावितओ भणिओ ॥२॥ इत्थ पुण चउभगो जाणगइयरम्मि गोणिनाएण। सुद्धासुद्धा पढमतिमाउ सेसेसु वि विभासा" ॥३॥ अत्रेदमवधेयम्–यदशठ उपयोगपरश्च गुरुर्यथार्हं विज्ञायैव दद्यात्प्रत्याख्यानं, यन्न प्रायेण भङ्गमाप्नोति। अत एव च साधुपेथडादीना नियमदान श्रूयते–मुनिवर्यैर्विश्रान्त ज्ञात्वा च दार्ढ्यं वितीर्ण तेभ्य परिग्रह-परिमाणव्रतमिति। पर यदि च्छद्मस्थोपयोगस्य विसंवादसम्भवा-त्तथाज्ञानाभावाच्च गुरूणा, विधिना दीयेत व्रतादि तथापि ज्ञाय-काद्युपयोगत शुद्धिरेवोभयो; पर भविष्यज्ज्ञानाभावे नैव देय न वाऽऽदेयमिति (न)। अथ च भावशुद्धया यथाशक्ति पर्यालोच्य शुद्धभावेन गृहीत पश्चात्कर्मोदयात्तीव्रपरिणामाभावाच्च भग्न यदि तत्तथापि न तस्य तत्तथादुःखावह, पुनस्तत्प्राप्तेरवश्य-भावात्। यत आहु–"क्षायोपशमिके भावे या क्रिया क्रियते तया। पतितस्यापि तद्भावप्रवृद्धिर्जायते पुन ॥१॥" [ज्ञानसार०] एवमेव च केवलाऽऽलोकावलोकितानातीतैष्यद्द्र-व्यपर्यायपरिकलिताखिलपदार्थप्रकरैर्भगवद्भि, श्रीयुगादिदेवाऽप-श्चिमजिनवरेन्द्रमुख्यैर्दत्ता भाविबाधा व्रताऽपि सर्वविरतिर्मरीचि-जमालिप्रमुखेभ्य परिहृतव्रतादरेभ्योऽपि या, सा गुणावहतया सङ्गच्छते, फलानुमेयप्रारम्भत्वान्मतिमताम्। अपि च यथायोग क्रियमाणाऽर्जानस्यापि भावस्य जनने समर्था, तर्हि जातभावपतनस्य तु वार्तैव का? यदाश्रित्योच्यते–'गुणवद्बहुमानादेर्नित्यस्मृत्या च या क्रिया। जात न पातयेद्भाव-मजात जनयेदपि ॥१॥" [ज्ञानसार०] तथा–'गुणवत्पारतन्त्र्य हि तदनुत्कर्षसाधन'मिति। तन्न भवत्येव पातो यथाविधिप्रवृत्तिमत, किन्तु तस्य यथार्था भावशुद्धिरेव।

यत उच्यते—"तस्मादासन्नभद्रस्य प्रकृत्या शुद्धचेतस.। स्थानमानान्तरज्ञस्य गुणवद्बहुमानिन ॥१॥ औचित्येन प्रवृत्तस्य कुग्रहत्यागतो भृशम्। सर्वत्राऽऽगमनिष्ठस्य भावशुद्धिर्यथोदिता ॥२॥" [अष्टक०]इत्यादि। एतादृशस्य च लघुनापि प्रत्याख्यानेन यावन्मोक्षसौख्याप्ति सूत्रकृदभिहिता सङ्गच्छते। यदाहु -"पच्चक्खाणम्मि कए आसवदाराइ हुंति पिहियाइं। आसववुच्छेएण तण्हा वुच्छेअण होइ ॥१॥ तण्हावुच्छेएण अउलोवसमो भवे मणुस्साण। अउलोवसमेण पुणो पच्चक्खाण हवइ सुद्ध ॥२॥ तत्तो चरित्तधम्मो कम्मविवेगो अपुव्वकरण च। तत्तो केवलनाण तओ अ मुक्खो सयासुक्खो ॥३॥" इति। नन्वेतादृशी यदि स्यात्सदा प्रवृत्तिर्न स्यादेव प्रतिपातः, परं नन्दमणिकारादिवत् सुसाधुसमागमाभावादिनाऽन्यतमेन कारणेन यदा न स्यात्तादृशी प्रवृत्तिर्भवति च पातस्तदा तु अनन्तदग्रसंसारकान्तारक्रमण भाव्यवश्यमेवेति न ग्राह्य तदिति। तदपि न, भावविशुद्धे गृह्णता पातेऽपि पुनस्तत्प्राप्तेरवश्यभावादिति पूर्वं प्रतिपादितमेव। अन्यच्च—तस्यैव भावप्रत्याख्यानकारणत्वमभिमत पूज्यैर्भवान्तरे एतेनैव भग्नेनापि प्रत्याख्यानेन पुनः सत्प्रत्याख्यानलाभात्। यत आहु भवविरहसूरयः- "जिनोक्तमिति सद्भक्त्या ग्रहणे द्रव्यतोऽप्यदः। बाध्यमान भवेद्भावप्रत्याख्यानस्य कारणम् ॥१॥" [अष्टक०] इति। तन्न तथाविधकल्पितभयेन यथाशक्त्यपि व्रतानामग्रहण श्रेयस्कर, अकृतदेशप्रत्याख्यानस्यान्यबहुप्रार्थनाया "लद्धिल्लिय च बोहि अकरेतो अणागयं च पत्थितो। अन्न दाइ बोहि लब्भिसि कयरेण मुल्लेण ॥१॥" [उप०] इत्यतुलहास्यास्पदत्वमिथ्यावादित्वप्रतिपादनात्। अवक्ष्यंश्च सूत्रकारा अपि तमेव प्रत्याख्यातारमनागताद्विज्ञातार, न तूपयोगपरत्वाशठत्वादिमन्त, अगृहीतव्रताना च

कुत संस्कारलेशोऽपि, येन प्रेत्यापि तत्प्राप्ति. स्यात् । अत एव चानन्तद्रव्यलिङ्गव्यत्ययो भावलिङ्गप्राप्तिकारणमिति सिद्धान्तित सिद्धान्तनदीष्णै पञ्चवस्तुप्रकरणे, तन्न यथाशक्तिव्रतग्रहणे साशङ्कैनाविरततया स्थेयमित्यल प्रसङ्गेन । सामग्र्यभावसङ्कल्पोऽपि नानुसन्धेय. सदभिसन्धिवरै यत । का तावत् सामग्री नाप्ता भवद्भि ? येन स्थीयतेऽविरतेन । किं गुरुसयोगलक्षणा १, विधिलक्षणा २, प्रत्याख्येयद्रव्यप्राप्तिलक्षणा ३, परिणामलक्षणा ४, शक्तिलक्षणा ५, पालनलक्षणा ६, तथासहचारिलक्षणा ७, तथाविधज्ञानलक्षणा ८, शुद्धिलक्षणा ९, साम्यभावलक्षणा १०, गुणस्थानप्राप्तिलक्षणा ११, आत्मस्थैर्यलक्षणा १२ वेति द्वादशविकल्पैरनुशीलयन्तु चित्त चेतनावन्त । तत्र न तावन्नास्ति गुरुसयोगो, विहाय मिथ्यात्ववासना यदि सम्यङ्निभालयेयुर्भवन्तस्तानन्तरेण तीर्थस्यैवाननुवृत्ते । न च वाच्य दर्शनज्ञानाभ्यामेवाधुना वर्तते तीर्थमिति, "न विणा तित्थ नियठेहि" ति प्रवचनसाम्राज्यात् । अधुनातनाना साधूनामतिचारबाहुल्यमिति चेन्नावगत तावद्भवद्भिर्निर्ग्रन्थादि-निर्ग्रन्थस्वरूप, न च तीर्थस्वरूपमपि, कथमन्यथैवं सम्प्राधारयिष्यन्त यूयम् । तीर्थस्वरूपविचारणे तावदेव ध्येय, यदुत "वकुसकुसीला य जा तित्थ"-ति । निर्ग्रन्थादि-निर्ग्रन्थस्वरूप विचार्यते चेद् भवद्भिर्भविष्यत्येवाधुनातनमुनीनामपि साधुत्वमस्तीत्यवगति । यत आहु भाष्यकारा एव वकुशकुशीलस्वरूप तयो प्रतिसेवनादि च वकुशस्य तावत्—'नैर्ग्रन्थ्य प्रति प्रस्थिता शरीरोपकरणविभूषानुवर्तिन ऋद्धियशस्कामा सातगौरवाश्रिता अविविक्तपरिवारा छेदशवलयुक्ता निर्ग्रन्था वकुशा' इति । तथा प्रतिसेवनायामपि—'वकुशो द्विविध —उपकरणवकुश शरीरवकुशश्च । तत्रोपकरणाभिष्वक्तचित्तो विविधविचित्रमहाधनोपकरणपरिग्रहयुक्तो

बहुविशेषोपकरणकाङ्क्षायुक्तो नित्य तत्प्रतिसस्कारसेवी भिक्षुरुपकरणवकुशो भवति। शरीराभिष्वक्तचित्तो विभूषार्थ तत्प्रतिसस्कारसेवी शरीरवकुश' इति। कुशीलस्याप्यवोचन्नेवैव, तद्यथा—'कुशीला द्विविधा—प्रतिसेवनाकुशीला कषायकुशीलाश्च। तत्र प्रतिसेवनाकुशीला नैर्ग्रन्थ्य प्रति प्रस्थिता अनियतेन्द्रिया कथञ्चित्किञ्चिदुत्तरगुणेषु विराधयन्तश्चरन्ति ते प्रतिसेवनाकुशीला। येषा तु सयताना सता कथञ्चित्सज्वलनकषाया उदीर्यन्ते, ते कषायकुशीला'। प्रतिसेवनाया तु 'प्रतिसेवनाकुशीलो मूलगुणानविराधयन्नुत्तरगुणेषु काञ्चिद्विराधना प्रतिसेवते। कषायकुशीलनिर्ग्रन्थ—स्नातकाना प्रतिसेवना नास्ती'ति। न च वाच्य नाममात्रा एते साधव, तेषा सयमस्थानोपपातश्रेष्ठतादिनिरूपणात्तदिदमुक्तमेव तत्रैव—'असङ्ख्येयानि सयमस्थानानि कषायनिमित्तानि भवन्ति। तत्र सर्वजघन्यानि लब्धिस्थानानि पुलाककषायकुशीलयोस्तौ युगपदसङ्ख्येयानि स्थानानि गच्छत। तत पुलाको व्युच्छिद्यते, कपायकुशीलस्त्वसङ्ख्येयानि स्थानान्येकाकी गच्छति, ततः कपायकुशीलप्रतिसेवनाकुशीलवकुशा युगपदसङ्ख्येयानि सयमस्थानानि गच्छन्ति, ततो वकुशो व्युच्छिद्यते। ततोऽसङ्ख्येयानि स्थानानि गत्वा प्रतिसेवनाकुशीलो व्युच्छिद्यते। ततोऽसङ्ख्येयानि स्थानानि गत्वा कषायकुशीलो व्युच्छिद्यते। तत ऊर्ध्वमकषायस्थानानि निर्ग्रन्थः प्रतिपद्यते'। विचारणीय यथास्थितविचारविधानतत्परैर्बकुशादीना स्वरूप, तेपा प्रतिसेवनादि, सयमस्थानसद्भावश्च। न केवलमेतावदेव, भवान्तरगतिरपि तस्योपपातद्वारख्यावर्णिताऽवधारणीयैव। 'वकुश—प्रतिसेवनाकुशीलयोर्द्वाविंशतिसागरोपमस्थितिष्वारणाच्युतकल्पयो.। कषायकुशील—निर्ग्रन्थयोस्त्रयस्त्रिंशत्सागरोपमस्थितिषु

देवेषु सर्वार्थसिद्धे सर्वेषामपि जघन्या पल्योपमपृथक्त्वस्थितिषु सौधर्मे' इत्यादि। आस्तां शेष, लेश्याद्वारे दर्शितमेव विचारयन्तु यदुत–'बकुशप्रतिसेवनाकुशीलयो सर्वा षडपि, कषायकुशीलस्य परिहारविशुद्धेस्त्रय उत्तरा' इति, तन्नास्थानकल्पिताकल्प्यदूषणेन दूषणीया सुसाधवो विरतिस्वीकारादिभिया, यावत्तीर्थं साधुभावस्य सुदृढत्वात्, तीर्थं च पञ्चमारकपर्यन्तं यावदेवेत्यनुसन्धाय परावर्त्य मिथ्यात्वादागन्तव्य सिद्धान्तसिद्धे शुद्धमार्गे। ननु कैव भिदा तर्हि कुगुरुभ्य· कषायकुशीलादीनामिति चेन् न कापि विहाय स्थूलां मूलगुणविराधनाम्। अत एव च 'छेदशबलयुक्ता' इत्युदितं वाचकमिश्रै·। भैषीर्मा, गुरवो हि यथाकथञ्चित्प्राप्तप्रायश्चित्तानामपि शोधये उद्यता यतोऽवगच्छन्त्येव ते यत् "अविसुद्धस्स न वड्ढइ गुणसेढी तत्तिया ठाइ" त्ति। तथा न धर्ममाराधयत्यशुद्धात्मेति "अइयार जो निसेवित्ता पायच्छित्तं न गिण्हए। अणुज्जुउ अ तब्भावो निद्धम्मो सो गणिज्जए ॥१॥" इत्यादिवचनोदिताऽनालोचितविषमविपाकम्। अत एव च न ते मूलस्थानापन्ना इति गीयन्ते। आकुट्टीकृतं तु विवेचयन्त्येव तत्कालं तद्व्याघातभिया। तथा च पारमर्षमपि–"आउट्टिकयं कम्मं तं परिण्णाय विवेगमेइ" इत्यादिना विशेषतस्तेषां शुद्धिभावात्। अन्ये तु निस्त्रिंशशिरशेखरका यथा तथा दूषणगर्तविगुण्ठिताः प्रायश्चित्तादिरहिताश्चेति स्पष्ट एव भेदोऽनयोर्द्वयो सुगुरुकुगुर्वो। विस्तारेणार्थश्चेत्, श्रीव्याख्याप्रज्ञप्तौ पञ्चविंशतितमशतकीय-षष्ठोद्देश पञ्चनिर्ग्रन्थीप्रकरणं च निभालनीयम्। परं विचारणीयमेतावत्त्ववश्यं यदुत–न वाच्यमीदृश्यन् नाधुना साधव इति, तथावचनस्य हि व्यवहारभाष्ये महादोषावहत्वेन प्रतिपादनाद्यावत्तस्य सङ्गतिकरणमपि महतेऽनर्थायेति प्रतिपादयन्तस्तस्य सङ्घबाह्यकर-

णमेव विविनतया प्रोचुः प्रवचनानुयोगप्रधानाः। यत आहु:— 'जो भणइ नत्थि धम्मो न य सामइय न चेव य वयाइ। सो समणसघवज्झो कायव्वो समणसघेण ॥१॥" इति। प्राचीनार्वाचीनमुनीना तुलना कर्तृ णामपि 'पासाए' इत्यादिना समाहितमेव मन इति निभाल्नीय समाधित्सुभिर्मन। तन्न गुरुलक्षणा सामग्री नेति वाच्यम्। अथ न विधिलक्षणा सामग्रीति चेद्द्वितीयो विकल्पो विकल्प्यते; यतो विधिरहित न निःश्रेयसाय सम्पद्यते किञ्चिदपि "जह भोयणमविहिकय मारेइ विहिकय जियावेइ। तह अविहिकओ धम्मो न य भवदुक्ख विणासेइ ॥१॥" इति। तथा रसायनमपि उपभुक्तमविधिना भवत्येवातितरामनर्थायेति। सोऽपि नैव सुन्दर। यत कि विधिप्रतिपादका ग्रन्था नाधुना तन्निरूपका न भवद्भिर्वा न शाशक्यते स कर्तु वेति त्रयी विकल्पाना तत्राप्युपतिष्ठते। ग्रन्था मुनयश्च निरूपका सन्त्येव, यदि पर न स्याद्भवतां कदाग्रहग्रहग्रहिलता। नैवैकान्तेनोत्सर्गप्ररूपका अपवादप्ररूपका वा आख्यायन्ते ग्रन्था मुनयो वा, किन्तु यथास्थितमार्गप्ररूपका एव। अत एव च यथार्थव्याख्याकरणशक्तिविकलाना केवलयथाश्रुतार्थधारिणां सम्मत्यादावाख्यातं सिद्धान्तप्रत्यनीकत्व वहुश्रुतानामपि— "जह जह वहुस्सुओ वहुसमओ सीसगणपरिवुडो अ। अविणिच्छिओ अ समए तह तह सिद्धतपडिणीओ ॥१॥" [सन्मति०] इति। शास्त्राणि च सर्वाण्यप्येकनयनिष्ठान्येव, स्याद्वादश्रुत सम्पूर्णार्थविनिश्चाय्येव स्यात्। तदिदमाहुर्दिवाकरपादा —"नयानामेकनिष्ठाना प्रवृत्तेः श्रुतवर्त्मनि। सम्पूर्णार्थविनिश्चायि स्याद्वादश्रुतमुच्यते ॥१॥' इतिपद्येन। न च यथाश्रुतार्थग्राहिणां स्यादस्याद्वादश्रुतता ग्रन्थाध्ययनेऽपि, न च यथाश्रुतार्थमभिमतमनुयोगप्रधानाना सूरीणाम्।

यत उच्यते तै –"ज जह भणिय सुत्ते तहेव जइ त वियालणा नत्थि। किं कालियाणुओगो दिट्ठो दिट्ठिप्पहाणेहिं ॥१॥" इति। न चाविनिश्चितसमयाना स्यात्समयदेशकत्वम्, तेषां वालादिस्वरूपानभिज्ञतयाऽयथास्थान देशनावितरणेन भवावटापातस्यावश्यभावात्। तदिदमाहुः–"यद्भाषित मुनीन्द्रै पाप खलु देशना परस्थाने। उन्मार्गनयनमेतद्भवगहने दारुणविपाकम् ॥१॥" [षोडशक०] इत्यादिना। न च जानात्यविनिश्चितसमयः प्रकृतिदेवताभिमुक्त्यादि श्रोतॄणा, कथकारमसौ देशना विदध्यान्मार्गानुगामिनीमित्यल विस्तरेण। इदमेवात्र रहस्य यत्–सन्त्येव विधिप्ररूपका ग्रन्था मुनयश्चाव्यक्षम्। अथोच्येत न स शक्यते कर्तुं, तदपि न। यतो न ह्यभ्यासमन्तरेण सम्पद्यते किञ्चित्तदभ्यासमभ्यस्यन्तु भवन्त। स्थूले चाविहिते कथकार विधातारो महान्त, असम्भव्येतन्। यदाहुः–"न साधयति यः सम्यगज्ञ स्वल्पं चिकीर्षितम्। अयोग्यत्वात्कथकार स महत्साधयिष्यति ॥१॥" इति। यच्चोदाजह्ले–'जह भोयण'मित्यादि। तत्सत्यमेव, परं नैतावता प्रवृत्तिः परिहार्या, तथा सति मूलोच्छेदापत्ते। कथ च विधिज्ञान? गुरोश्चेत्तत्रापि कथ गमनमज्ञात्वा विधिं गमनस्येति स्पष्टैवं सर्वोच्छेदापत्तिरेकान्ताग्रहवतः। यच्च–'रसायन'मित्याद्युक्तम्, तदपि सम्यक्, पर नेतरौषधवदितरा नमस्कारप्रत्याख्यानादिरूपा न शक्या विधातुं यथाकथञ्चिद्विधिना, सम्यगुपयुक्ततायां च नाविधिरनुवन्धक। अत एव चाविधिधर्मस्य भावधर्मताख्यान सङ्गच्छते धर्मसंग्रहणीकृतां, अकरणे चाविधिकरणाद् गुरु प्रायश्चित्तमित्यप्युपदेश। न च शक्त्यभावेऽत्रित्रिपाप नाशिलष्यति, भावेनावन चेत्तदपि स्यात्तदा, यदा यावच्छक्यमनुपाल्यते। यत उक्त–'श्रुतशक्यपालन अशक्ये भावप्रतिवन्ध.'।

एतदपि च तदैव यथार्हतामापद्यते, यदैव तत्कर्तृषु बहुमानोपचारादिक विधीयेत, निपुणश्च विचारस्तदवाप्तये क्रियेत। तदिदमाहु –"तत्कर्तृषु प्रशसोपचारौ निपुणभावचिन्तन चेति"। न च सर्वथा नास्त्येव शक्तिर्यदि सम्यङ् निभाल्यते, तन्नैतदप्यालम्बनीयमाप्तागमानुसारिभि। अथ चोच्यते तृतीयस्मिन् विकल्पेऽवधाय चित्तं स्वसुकृतवधाय यदुत– या सामग्री स्वाधीना स्यात्तस्य प्रत्याख्यान फलेग्रहि, यच्च न स्यात्सम्पद्यमान, तस्य क्रियमाण प्रत्याख्यान नभ कुसुमोपभोग-वन्ध्यातनयागमन-शशशृङ्गधनुर्ग्रहण-प्रत्याख्यानवत्काल्पनिकमेव। न च तत्फलवदेव, न च श्रूयते शास्त्रे पूर्वोदिताना प्रत्याख्यानविधान, तन्नाऽस्वाधीनवस्तुपरित्यागे विरति. शोभना। न चासौ त्यागीत्युच्येतापि विवेकिभि। पारमार्षमपि तथैव। तथा च श्रीशय्यम्भवसूरिपादा –"वत्थगधमलकार इत्थीओ सयणाणि अ। अच्छदा जे न भुजति न से चाइ त्ति वुच्चइ॥१॥" इति। यदि च स्यात्तथाविधा सामग्री, त्यज्यते, तर्ह्येव विरतित्व त्यागित्व च स्यात्, यदाहुस्त एव तत्रैव–"जे य कते पिए भोए लद्धे वि पिट्ठि कुव्वइ। साहीणे चयइ भोए से हु चाइ त्ति वुच्चइ॥१॥" [दशवै०] इति परमपुरुषवचनात्। अत एव च चरमश्रुतकेवलिभि प्रत्याख्यानव्याख्यानावसरे प्रत्याख्येय द्रव्यमपि निरूपितम्। तथा च तत्पाठ –"पच्चक्खाण पच्चक्खाओ पच्चक्खेअ च आणुपुव्वीए"त्ति। तन्नाऽप्राप्तसाधनाना विरति श्रेयस्करीति। तदसमञ्जसमेव, सम्यक्श्रद्धावता चाऽश्रोतव्यम्, यतस्तावत्यप्राप्तमस्ति तस्य यदि भवन्त. प्रत्याख्यान कुर्यु, को निषेद्धा भवन्मतेऽपि च। तथा सति भाव्यमेव त्यागित्वलक्षणेन। अत एव चोदाहृतं वृत्तिकारै –उदकाग्निललनादिरत्नत्रितयपरिहर्तॄणा सुसाधुत्वम्, न चैतन्नास्ति, भवता तृतीयस्याभावेऽपि द्वय त्वाद्य

जगत्साधारणमिति कृत्वाऽस्त्येव, तत्किमिति तन्न परिह्रियते भवद्भि ?। न चाशनवस्त्रादि न भवता विद्यते क्रोधादिर्वा, विद्यते चेत्प्रत्याख्यान्तु आयुष्मन्तस्तावत्तावन्मात्रमन्यस्य शङ्कोद्धारस्य विधास्यमानत्वेन भाविनिर्णयत्वेऽप्येतस्य सुष्ठुनिर्णयादेतावत । यच्चोदाहृतम्–'या स्वाधीना सामग्री'त्यादि । तदविचारितमेव सुन्दरम्, यतो न केवलं विद्यमानेनैव कर्मवन्ध , इच्छया तदधिकस्यापि वन्धात् । यत उच्यते दिग्व्रतमपेक्ष्य–"तप्ताऽयोगोलकल्पस्य सद्व्रतं गृहिणोऽप्यद" इत्यादि । न च यावत्प्रमाण गतस्त'यैव विरतिर्भवति, तन्न प्राप्तस्यैव त्यागे व्रतमिति नियम । अन्यच्च–प्राप्तस्य य उपयोगस्तत कर्मवन्धश्च यस्ततोऽप्यधिकतमोऽप्राप्तापेक्षया भवति । अत एवोच्यते–"यदसत्स्वपि जायेत मूर्छया चित्तविप्लव" तथा अनर्थदण्डश्च निर्निमित्त इति न धत्ते मर्यादाम् । स्पष्टश्चायमभिप्राय स्पष्टितो वाचकमिश्रैः श्रावकप्रज्ञप्त्याम् । ततो ज्ञेयमिद यदुत–सम्पन्नस्य केवलस्य न प्रत्याख्यान । अत एवेच्छाप्रमाणमादिव्रत सङ्गच्छते । यच्चोच्छृङ्खलतया कल्पित–'न स्यात्सम्पद्यमान'मित्यादि । तदप्यविचारितमेव । यत सम्भव्येव प्रत्याख्यायते । न च गगनकुसुमादि सम्भवि, पर नैतावतैतादृशो नियम सम्पद्यते–यत्सदेव प्रत्याख्यायते, अन्यथा न कस्यापि समस्त सपन्नपूर्व जगत्या वर्त्तमान वस्त्विति कि न कस्यापि सर्वविरति ? भवन्मतेन सम्पन्नस्यैव प्रत्याख्येयत्वात् । तथात्वे च न श्रीमत्तीर्थकरा अपि सर्वविरता, आमतामन्ये, गणधरादयस्तेषामपि सर्वाविपत्याभावात्, विद्यमानस्य प्रत्याख्यान चेत्कृन तें , तर्हि देशविरता एव स्यु पापस्थानभूतेभ्योऽव्रतेभ्य । ननु च कि तर्हि श्रावकपुत्रदुहित्रादिभिर्न कदापि सङ्क्लेशकारिणी विहिता त्रसहिंसेति किं न सा प्रत्याख्येया तैं ?।

तन्नेदमल विकल्पनम् । यच्चोदितम् उदिताविरतिप्राबल्येन-'पारम-र्षमपी'त्यादि । तत्केवल भवतामविरतिप्रियतामेव व्यनक्ति, नान्य-त्किञ्चित् । यत. सूत्रकृद्भिरेव मैथुनव्रताभ्युपगमावसरे-'से दिव्वं वे'त्यादिना दैविकतैर्यग्योनिकमैथुनस्यापि प्रत्याख्येयतोक्ता । न च सर्वेषा तत्सम्पद्यमानम् । न च व्रताभ्युपगमेऽस्ति भिन्नता । तन्नि-र्धार्यतामेतत यदुत-सम्भविनोऽसतोऽपि स्यादेव प्रत्याख्यानम् । स्पष्टश्चैषोऽभिप्राय आवश्यकवृत्तौ शकटप्रत्याख्यानकथायाम् । न च नियतताऽस्ति भाग्यस्येत्यपि प्रत्याख्येयमसम्पन्नमप्यधुना चेत्स्या-त्सम्भवि । श्रीमच्छय्यम्भवपादोक्तीना का गतिश्चेन्न भवादृशाना-मिवाव्यवस्थिता, किन्तु तत्राधिकारो मृग्य । राजीमती निर्ग्रन्थी चलितसयम रथनेमिन शिक्षयति, तेन च प्रागुदित यत्-'सम्पन्न. सुन्दरो वय आदिदुर्लभवस्तुयोग' इत्यादि, तत्तस्मै प्रोचे सुधीरया महानुभावया यत्-'वत्थगंध'मित्यादि । यदा च तेन दरिद्रप्राया-णामेतद्दर्शित कार्यतया, तर्हि प्रोक्त शीलसन्नाहशालिन्या दाढ्र्याय तस्य, यदुत-न ते त्यागिन एवेति । तथा च नैतेन चरितानुवादेन दृढताधिकारोक्तेन भवद्विकल्पसिद्धि । ननु कि तेन मृषोक्तम् ? येन नैतदालम्बनीयमिति चेन्न; किन्त्वापेक्षिक विरतिदाढर्यायो-दीरितम्, न तु विरतिप्रतिषेधाय । भवन्मतेन तु सा पूर्व तेन न प्राप्तेति तस्य नाभूत्तत्प्रत्याख्यानम् । तथा च कथमुक्त-'वत इच्छसि आवेउं' ति 'धिरत्थु ते जसोकामी'त्यादि च । तन्नैष विकल्प सुन्दर । यद्वा- पूर्वगाथाप्रकान्त सङ्कल्पमधिकृत्यैष उपदेशो यदुत-यदि सङ्कल्प क्रियते भवद्भिरशुभस्तथा च महा-व्रताना स्पष्टैव विराधना । कथ नु चेत् स्वाधीना न कामा इत्येव सङ्कल्प एव क्रियते केवलः । तथा च न विरक्तता भवतामिति सङ्क-ल्पनिरासायैवैतदुक्तम् । भवति चैवविध उपदेश. काव्यप्रवीणानां

प्रकृष्टताख्यापको निषेधविधिमुखादिना विध्यादिप्रतिपादको "भम धम्मिअ विस्सभ" इत्यादौ च स्पष्ट एवासौ, व्यङ्ग्यादिविधिनोत्तमना हि काव्यस्य "मव्यङ्गचमुत्तम" इत्यादिवचनात्, तद्वदत्रापीति। ननु कथमग्रेतना गाथा तर्ह्यीति। तथैवेति गृहाण। यत. सति सङ्कल्पे यदि प्राप्त त्यज्यते च तर्ह्येव त्यागि त्वमिति, दर्शनेनाशुभपरिणामसद्भावे वस्तुसयोगेऽपि च त्यागितयैव स्थेयमिति दर्शनाय, न तु वैपरीत्याय। अत एव चाग्रेतनाया गाथाया "समाइ पेहाइ परिव्वयतो सिया मणो निस्सरइ बहिद्धा' इत्युक्तम्। तथा च सङ्कल्पनिवारणपर एवैष उपदेश.। तथा च "न सा महं नो वि अहपि तीसे" इत्याद्युक्तमपि सङ्गच्छते। अन्यथा चिन्तयन्तु भवन्त· कि साधूनाश्रित्य तैर्वक्तव्यमभिप्रेत स्यात्तादृशानामत्यागि चोदीरणेनैतच्च रतिवाक्यचूलाद्युपयुक्तेन परिभावनीय सम्यक्। इदमत्रावधेय यथा हि—"सत्या हि मनस शुद्धौ, सन्त्यसन्तोऽपि यद्गुणा। सन्तोऽप्यसत्यां नो सन्ति, सैव कार्या बुधैस्तत. ॥१॥" [योग०] तथा—"तदिन्द्रियजयं कुर्यान्मिन शुद्ध्या महामति। य विना यमनियमै कि वृथा कायदण्डनैः ॥१॥" इत्यादौ यथा मन शुद्धिप्राधान्यादापेक्षिकमन्यगुणाना सत्त्वमप्यसत्त्वेनोदीर्यते, तथाऽत्रापि सङ्कल्पविह्वलचित्तानां त्यागोऽयत्याग इत्युदीर्यते। यथा न तत्र प्राप्ताना शेषगुणाना त्यागोऽभिधेयतयाऽभिप्रेत, किन्तु मन शुद्धिरेव, तथाऽत्रापि सङ्कल्पत्याग एव सूत्रकारैरभिप्रेत, न तु शेषाणामत्यागित्वमिति नैतदालम्ब्यमन्यथाभावेनेति। पूज्यपादैस्तु पञ्चवस्तुन्याख्यातमेवमेतत् द्वितीयगाथासमाधान यद्- हुशब्दोऽप्यर्थे, निपातानामनेकार्थत्वात्। तथा च सोऽपि त्याग्येवेति फलितार्थ। ननु च कथमेतत्सङ्गच्छते? यतो न तस्य स्वाधीनभोगपरिहारकस्य त्यागित्वे शङ्कालेशो, येनैव व्याख्यायमान

घटाकोटिमाटीकते । शङ्का त्वत्रान्यस्यैवातथाविधस्येति चेत्सत्य, भवन्ति वक्तार एतादृशोऽपि, यदुत—भुक्तभोगा प्रव्रजन्ति तृतीय-स्यामवस्थाया, तन्नैतेषा त्यागित्व क्षीणयौवनादितयेति तत्समा-धानायैतस्यावश्यवाच्यत्वात् । तथा च येऽभुक्तभोगा प्रव्रजितास्ते-ऽत्यन्त त्यागिनोऽपि भुक्तभोगा अपि ये प्रव्रजेयुस्तेऽपि "पच्छा वि ते पयाया खिप्प गच्छति अमरभवणाइ" इतिवचनात्त्यागिन एवेति सूचनाय 'हुरप्यर्थे' इति व्याख्यान सङ्गच्छते एव । आदिगाथा च सुबोधैव, यतो'ऽच्छन्दे'त्यस्य व्रतपरिणामशून्या अपि सुबुद्धि-सचिवादिवज्जीवितादीच्छया ये प्रव्रजन्ति, न ते त्यागिन इति ज्ञापनेन सङ्कल्पपरिहारभावविशुद्ध्यादिकरणायैवैतदिति न भवता कुविकल्पपोषणकरम् । यच्चोदाहृत—'परमश्रुतकेवलिभि'रित्यादि । तदप्यबोधविलसितमेव भवता व्यनक्ति, तदभिप्रायापरिज्ञानात् । यत प्रोक्तमेवैतत्तैर्द्रव्यव्याख्याने—"दव्वे भावे अ दुहा पच्चक्खायव्व हवइ दुविह । दव्वम्मि असणाइ अन्नाणाई य भावम्मि ॥१॥" इति । अशनाद्यपेक्षया अज्ञानाद्यपेक्षया च प्रत्याख्येयतामाश्रित्यैष विधि ; न तु सम्पन्नस्यैव प्रत्याख्यानमिति सूरीणा तेषामभिप्राय । कथमन्यथा "वेउव्विय-परदारगमण" इत्यनेन वैक्रियमैथुनप्रत्या-ख्यानमखिलान् श्राद्धानाश्रित्य अवक्ष्यन्त । प्रत्याख्येयवर्णन च तज्ज्ञा-नायैव, न तु तत्सद्भावज्ञापनाय । तन्नैतत्सुन्दर सङ्कल्पन—यत्सत्येव प्रत्याख्यान वस्तुनि, नासतीति । विशेषार्थिना च प्रथमवस्तु-दश-वैकालिकीयकाष्ठहारिकाधिकारश्च सम्यक्तयाऽनुशीलनीय । तन्न प्रत्याख्येयद्रव्याद्यभावेनाविरततयाऽवस्थान युक्तियुक्तम् । अथोच्येत चतुर्थ विकल्पमाश्रित्याश्रयविहीनैर्न तादृग परिणामस्त्यागायेति । तदा किं परिणामाभावेनाविरतिप्रत्ययिक न लगिष्यति कर्म ? । तथात्वे ये येऽविरतास्ते सर्व एव परिणामाभावादेवेति (न) कस्यापि

स्यादविरतिप्रत्ययिकः कर्मसम्बन्धः। चिन्त्य चैतदपि– यत्कथं न भवति परिणाम आश्रवत्यागाय? किं न दृष्ट आश्रवविपाकः? न श्रुत? न श्रद्धाविषयीकृत? न वा निपुणमालोचित?। ओमिति चेद्, भवन्तु सादरास्तत्र, येन न स्यात्तत्करणेनाविरतिप्रत्ययिको बन्धः। यदि च चिन्त्यते सर्वं ज्ञायते च, परं न भवति परिणामश्चेदेषैवाशुभा भवितव्यता दृढकर्मबन्धनबद्धत्वाद्भवताम्। यदाहुर्धर्मदासगणिपादा–"जाणिज्जइ चिंतिज्जइ जम्मजरामरणसंभवं दुक्खं। न य विसएसु विरज्जइ अहो सुबद्धो कवडगंठि ॥१॥" इति। तदेतावता न कर्मबन्धव्यवच्छेदः, किन्तु दीर्घतरससारपरिभ्रम एव भावीति लक्ष्यते। ननु च कथं भवति परिणामः?, कर्मणः प्रतिबन्धकस्य विगमाच्चेत्, सोऽपि शुभाध्यवसायात् स्पष्टोऽन्योऽन्याश्रय इति चेत्, तन्न, तथाविधशुभपरिणामं विनापि पूर्वमशठपरिणामेन प्रवृत्तिः स्यादेव वृद्धानुगानाम्। अत एव च श्रावकपुत्रनप्तृकादीनां निसर्गसम्यक्त्वमिति गीयते। यद्वा– अन्यथाविधपरिणामाज्जातं विरमणं विरचयिष्यत्यन्यथाविधं शुद्धपरिणामम्। अत एव प्रत्याख्यानं दर्शयद्भिर्ग्रन्थकारैरपि फलतया प्रत्याख्यानमेव दर्शितम्, परं तद्विशेषितं शुद्धमिति। ननु च तत्प्रथमतयैवासौ कथं भवतीति चेद, वृद्धानुगतया तथाभव्यत्वपरिपाकादिना वेति। तदपि कथमिति चेत्, चतुःशरणगमनादिना। यत उच्यते प्रवचनानुयोगप्रधानैः–"अणाई जीवे अणाई जीवस्स भवे अणाइकम्मसंजोगनिव्वत्तिए दुक्खरूवे दुक्खफले दुक्खाणुबंधे, एयस्स णं वोच्छित्ती सुद्धधम्माओ, सुद्धधम्मसंपत्ती पावकम्मविगमाओ, पावकम्मविगमो तहाभव्वत्ताइभावाओ, तस्स पुण विवागसाहणाणि चउसरणगमणं दुक्कडगरिहा सुकडाणुमोयणं" [पञ्चसूत्रम्] इत्यादि। फलमप्येतेषां दर्शितं तैः ग्रन्थपाठमुखेन, यत्–"एयं सम्मं

पढमाणस्स सुणमाणस्स अणुपेहमाणस्स सिढिलीभवति परिहायति खिज्जति असुहकम्माणुबधा निरणुबधे वा असुहकम्मे भग्गसामत्थे सुहपरिणामेण कडगबद्धे विवविसे अप्पफले सिआ सुहावणिज्जे सिया अपुणभावे सिआ" [पञ्च०] इत्यादि। ननु तदपि कथमिति चेत्, साधुसमागमादिना। तदपि कथ चेद्, भवितव्यतयेति गृहाण। परं प्राप्त एवासौ भवद्भिरिति न भाव्य तुन्दपरिमृजैरिति नाल परिणामाभावविकल्पोऽपि भवता कुविकल्पपुष्टये कर्मबन्धाद्वा विरति-प्रत्ययिकाद्रक्षणायेति। कुर्वन्तु परिणामाभावेऽपि विरत्यादि, तस्या एव परमभावोत्पादप्रत्यलत्वात्। व्यञ्जित चैतत्—'तम्हा निच्च-सईए बहुमाणेणं च अहिगयगुणम्मि। पडिवक्खदुगुछाए परिणइ-आलोयणेण च ॥१॥ तित्थकरभत्तीए सुसाहुजणपज्जुवासणाए य। उत्तरगुणसद्धाए य एत्थ सया होइ जइयव्व ॥२॥ एवमसतो वि इमो जायइ जाओ वि ण पडइ कयाइ।" इत्यादौ भवविरहसूरिभिः पञ्चाशके। तच्चेत्परिणामोद्भववाञ्छा, तदा प्रवर्त्तन्ता यथाकथ-ञ्चिदपि, भविष्यति चोपरितनोदाहृतवचनानुसारेण प्रवर्तमानानां भवता तत्परिणाम इति कृत विस्तरेण। अथ चोच्येत-'नास्ति शक्तिर्विरतिकरणाये'ति चेत्। न तदपि यथास्थित जल्पितम्। यतः सर्वथैव नास्ति शक्तिर्विरमणे देशतो वा ?। आद्ये, मा भवतु साऽभ्यासप्राप्त्यैव सा यत, ततो गृह्णन्त्वणुव्रतानि, प्रतिमा अपि तेषामुद्वहन्तु, पश्चाद्भविष्यति शक्ति। अत एव सूरिमिश्रैः प्रत्यपादि—"भावेऊणऽत्ताण उवेइ पव्वज्जमेव सो पच्छेति"। न च संयोज्य करावासीनाना भवति शक्त्यस्तिनास्तित्वादिज्ञानम्। करणे चास्य विधेर्न ज्ञायते यदि शक्ति सर्वथा विरमणे; स्थीयते चेद् गार्हस्थ्ये, न तत्सूत्राननुमत, यत आहु -"अहवा गिहत्थभावं उचियत्त अप्पणो णाउ"ति। भविष्यति च प्रेत्यैतदर्हा शक्तिः, अभ्यासस्य

प्रभूतजन्मभिरेव शोधिभावात् । यत उच्यते भावना मैत्र्यादिका आश्रित्य–"एता खल्वभ्यासात् क्रमेण वचनानुसारिणा पुसाम् । सद्वृत्ताना सतत श्राद्धाना परिणमन्त्युच्चै ॥१॥" अत्रोच्चैरित्येतत् तद्भवे एवाभ्यासात् क्रमेण भवत्युच्चतरः परिणामो भावनायाः । यदि च न स्यात्तदाऽनेकजन्मभिरपीत्याहु –"अभ्यासोऽपि प्राय प्रभूतजन्मानुगो भवति शुद्ध" इतिवचनात्कार्य एवाभिलपिता चेद् विरतिसम्पत्तीव्रांशतोऽप्यस्या अभ्यास क्रमश परिवर्धिष्णु । तन्न शक्तिर्न सर्वथेति परिपाल्यं सर्वथाऽविरतत्वम् । यदि चोच्येत–देशतोऽपि । तदप्यसदेव, यत प्रवृत्तपूर्वाणामेव भवति ज्ञान तग्या सत्त्वासत्त्वयो , प्रवृत्तिश्च चेच्चिकीर्पिता, कुर्वन्तु पूर्वोक्तन्यायेन, भविष्यत्येव शक्तेरुत्पाद । ननु च कथ तर्हि वासुदेवादीना दृढसम्यक्त्वधराणामपि न, पूर्वोक्तरीत्या परिणामस्य शक्तेश्चोत्पादयितु शक्यत्वादिति चेद्,भवन्त इव न ते प्रवृत्ता पूर्वोक्त उपाये इत्यवगच्छन्तु मनस समाधानाय। ननु कथ न प्रवृत्ता अपि चेद्, विचारित स्याच्चेत्तद्वृत्तान्त, नोदभविष्यदेतादृशी शङ्का, किं तच्चेत् । शृणु, वासुदेवास्तावत् पूर्वत्र भवे कृत्वा निदानमेवावतेरु सर्वे, कृतनिदानाना च न स्यादेव विरतिपरिणाम । ततश्च नियमतोऽधोगामिनस्ते । यदुदाहृत–"केसव सव्वे अहोगामि"त्ति । द्रौपद्या कृतेऽपि निदाने कथं लब्धा विरति सम्यक्त्व चेति चेत्, कार्यानुमानेनैव जानन्तु। यन्न तया तथाभावेन विहित तत्, कथमन्यथा श्रुतोदिता-भविष्यद्विरति । श्रेणिकादिभिरन्यैरपि पूवमेव न्यवन्ध नारकायुरिति न तेपामपि परिणामो विरते । न च तैर्विहित पूर्वोक्तमनुशीलनादि । न च वयमपीदृश इति वाच्य, तेपा त्वप्रतिहतज्ञानालोकैर्भगवद्भिरेव तद्वत्त्वस्य निर्णयनात् । तत्कुर्वन्तु प्रयत्नमदृष्टभीरव शक्त्युत्पादनायोत्पन्नाया वा

विरतये। श्रीहरिभद्रसूरिभिरक्षयोपशमात्त्यागपरिणामे तथाऽसति जिनाज्ञाभक्तिसंवेगवैकल्यात्,' एतदप्यसदिति। अनेनापरिणामेनापि जिनाज्ञाभक्त्यादिनैतस्याभिहिता विधेयता स्पष्टा इति न शक्तिलक्षणा न सामग्रीति वाच्यं विद्वद्भिः। अथ चोच्यते—विद्यते परिणामः शक्तिश्च, परं न शक्तिस्तादृशी यया पालयितुं शक्यते, इति न गृह्यते व्रतादि। तदपि नालं पक्षपरित्राणाय, यतस्तथाविधधैर्याभावे मुहूर्तादिनाप्यनुशीलनीयं विरतत्वम्। ततश्च क्रमेण भविष्यति धैर्यं तादृशं शक्यते पालयितुम्। न ह्यनभ्यस्तं शक्यते केनाप्युद्वोढुमिति शनैः शनैरपि गृहीत्वोद्वहन्तु। आपादिते च मनसो दार्ढ्ये न किमपि भावि दुष्करम्, तन्न पालनलक्षणा न सामग्रीति। अथ 'न सहचारिण' इत्यपि नैव सम्यग्, यतो न सर्वे भवादृशोऽविरता, कुर्वन्त्येव यथार्हं व्रतानुष्ठानादि, सहचारिता च यदि तैर्विधास्यन्ति भवन्तः को निषेद्धोत्तमसङ्गत्या च भविष्यति यत्किञ्चनापि, लौकिकैरपि गीयत एव—"सत्सङ्गतिः कथय किं न करोति पुंसां" इति। न रुचितास्ते चेद्भवद्भ्योऽवभासिताश्चानर्हतया, तदा न योग्यता भवतां सम्यक्त्वसारहीनत्वात् 'गुणहीणो गुणरयणायरेसु जो कुणइ तुल्लमप्पाणं। सुतवस्सिणो अ हीलइ सम्मत्तं कोमलं तस्स ॥१॥" [उप० माला] इति वाक्ये तावत्स्वसमानताऽभिमतावपि दर्शितमनर्थबाहुल्यं, किं पुनस्तर्हि हीनतरताभिमतौ तेषां, तन्नैतत्सुन्दरं-यन्नास्ति कोऽपि सहचारी। न सन्तु वा सहचारिणस्तथापि स्वयमुद्यच्छन्तु तथा, यथा भवतां साहचर्येण ते यथार्हां गुणश्रेणिमापादयेयुः। न चेज्जानानैरपि भवद्भिरुद्यम्यते, हि ते किं तर्ह्युपदेष्टव्यं विशेषेण। यदाहुर्धर्मदासगणिपादाः—"को दाही उवएसं चरणालसयाण दुव्वियड्ढाणं। इंदस्स देवलोगो न कहिज्जइ जाणमाणस्स ॥१॥" [उप० ४९०] इति। नैतत् कूटमालम्बनीयं,

किन्तु विधेया यथाशक्त्यपि प्रवृत्तिर्विरतौ। अथ यदि समाश्रीयते तथाविधज्ञानरूपा सामग्री न प्राप्तेति न क्रियते, न च विना ज्ञानं क्रियमाण शोभते किञ्चिदपि व्रतादि, प्रतिपाद्यते चात एव-"पढम नाण तओ दया" इति। "अन्नाणी कि काही किं वा नाहीइ छेय पावग"मिति। तथा व्याख्याप्रज्ञप्तावपि-"जे य तत्थ नाणसपन्ने से ण देसविराहए, किरियासपन्ने य देसआराहए" इत्यादि। श्रीद्वितीयेऽङ्गेऽपि-"वुज्झिज्जत्ति तिउट्टिज्जे"त्यादि। श्रीउपदेश-मालायामपि-"अप्पागमो किलिस्सइ जइ वि अ करेइ अइदुक्कर च तव। सुदरबुद्धिइ कय बहुअ पि न सुदर होइ। १॥ अपरिच्छि-असुयनिहसस्स केवलमभिन्नसुत्तचारिस्स। सव्वुज्जमेण वि कयं अन्नाणतवे बहु पडइ॥२।" इति। उच्यते चात एव-'सा ज्ञानिनो नियोगाद्यथोदितस्यैव साध्वी'ति प्रतिपादित पूज्यपादै। व्याख्यात च व्याख्याप्रज्ञप्त्या-"ये जानन्ति इमे जीवा इमेऽजीवा इमे त्रसा इमे स्थावरास्तेषामेव सुप्रत्याख्यान, शेषाणा च दुष्प्रत्याख्यानं, तन्न तथाविधज्ञानविकल क्रियमाण व्रतादीष्टसिद्धयें स्यात्। तन्नैव युक्त, वस्त्वादिस्वरूपमज्ञात्वा क्रियते मुमुक्षुभि किञ्चिदपीति। तदप्यविचारितमेव जात्यकाञ्चनवच्छोभते, यतो ब्रुवन्तु सावधानी-भूय कि प्रत्याख्येयपरिज्ञान कार्यमखिल वा ज्ञातव्यमादाविति। चेद् आद्य, को निषेधयति, न च तन्न प्राप्त न वा न प्राप्यते, यदि च न प्राप्त, तदा प्रत्याख्यापयितैवादौ तद्विधास्यति। यत उक्तमेव चतुर्भङ्ग्या तद्विधान, तद्यथा-"इत्थ पुण चउभगो जाणगइयरमि गोणिनाएण। सुद्धासुद्धा पढमतिमा उ सेसे-सुवि विभासा॥१॥" इत्यादिना प्रत्याख्येयपरिज्ञानापादन प्रत्या-ख्यातु। तत्र हि ज्ञाता प्रत्याख्याता ज्ञातैव च प्रत्याख्यापयितेति प्रथमो भङ्ग, न ज्ञाता प्रत्याख्यापयिता पर प्रत्याख्याता ज्ञातेति च

चरमः। एतौ द्वौ शुद्धतयाख्यायेते। यदि परं प्रत्याख्याता न ज्ञाता प्रत्याख्यापयिता च यदि ज्ञाता, तर्हि विभाषा। कोऽर्थ ? यदि प्रज्ञाप्य प्रत्याख्येय प्रत्यायापयति प्रत्याख्यापयिता, शुद्धस्तर्हि प्रत्याख्यानविधि. पूर्वोक्तविकल्पद्वयवत्, यदि चाप्रज्ञाप्यैव प्रत्याख्येय कारयति करोति वा प्रत्याख्यान, न तर्हि शुद्ध इति युक्तैव विभाषा। नन्वस्त्वेतस्मिन् विभाषा भङ्गके, पर यदि द्वावप्यज्ञौ प्रत्याख्येयवस्तुस्वरूपस्य तदितरस्यापि विधानस्य, तर्हि कथ स्याद्विभाषा ? यत उच्यते तत्रापि विभाषा, न हि तत्र शुद्धयशुद्धिविकल्प सम्भवति, येनोच्यते विभाषा, केवलाया अशुद्धेरेव तत्र भावादिति चेत्, सत्य, यस्य प्रत्याख्यातुर्ज्ञानं न प्रत्याख्येयादे पर तत्पितृभ्रात्रादीनां तदस्ति, ते च यथायोगमनुशीलन कारयिष्यत्यस्य, ते च दद्युरनुमतिं तदा तत्रापि शुद्धिसम्भवापेक्षया स्यादेव विभाषेति। दृश्यते च शिशूनामेकाशनोपवासादि पित्रादिभिरज्ञातमपि तैस्तेषामनुवृत्त्यादि भावोत्पादे पर्वतिथ्यादौ कार्यते रक्षण, शिक्षणमपि च तस्य क्रियते श्रीयकादेरिव यथा यक्षादिकाभिरार्यादिभि, तन्नैषोऽपि विकल्प सर्वथाऽयुक्त इति युक्ता तत्रापि विभाषा। न च कोऽपि प्रत्याख्याता यथा तथा पूर्वोक्तनीत्यतिक्रमेण ददाति प्रत्याख्यान, भवतु कोऽपि यदि तत्स्वरूपानभिज्ञतयैव, पर भवन्तस्तु न तादृशा, विधाय प्रत्याख्येयपरिज्ञान क्रियता विरति। न च कथमप्यस्माभि. कथ्यत एतद्यदुत—अज्ञात्वैव प्रत्याख्येय कुर्वन्तु प्रत्याख्यान, किं तु ज्ञात्वैव, सम्पाद्यत एव च वार्त्तमानिकसाधुभि सर्वै प्रत्याख्येयाना पापस्थानानामशनादीनामज्ञानादीना च सम्यक्तया परिज्ञान, तत्सम्पाद्य तत्प्रत्याख्येयम्। अन्यच्च-न स्याज्ज्ञान तथाविध, तथापि विशिष्टता चेद्भवता, शुद्धिरेव, न किमपि प्रतिकूल किन्तु ज्ञातेवाखिलेष्टसिद्धिर्भाविनी बोधस्याभावेऽपि, तथा-

विधस्य विशिष्टता चेदृशी। यदुदीरिता पूज्यै -"यो निरनुवन्धदोषाच्छाद्धोऽनाभोगवान् वृजिनभीरु। गुरुभक्तो ग्रहरहित सोऽपि ज्ञान्यैव तत्फलत ॥१॥" [षोडशके] इत्यादि। अत एव च माषतुषादीना तथाविधज्ञानाभावेऽपि श्रामण्य अष्टप्रवचनमातृमात्रवेदनामपि च श्रामण्य व्याख्याप्रज्ञप्त्युक्त सङ्गच्छते। दत्ता च श्रीमद्भिश्चरमतीर्थकरपादैस्त्रसादिज्ञानविकलायाप्यतिमुक्ताय प्रव्रज्या, येन प्रावृट्पय पूरपानीयभृता विधाय पालिका वाहित प्रतिग्रहस्तरीबुद्धया। न चैतदयुक्तं, तथात्वे केवल्याशातनातज्जन्यानन्तससारसंसरणप्रसक्ते.। उक्त चात एव भगवद्भि स्थविराणामनिन्द्यतया, विशेषश्चायमेव तत्र, यदुत-वृजिनभीरुता कल्पनागोचरातीता, ययाऽवाप्त निखिलार्थविभासि केवल, तन्नैकान्तेनाऽऽग्रह कार्य। अत एव साधूनाश्रित्य विहृत्यधिकारे व्याह्रियते व्याहर्तृभि: यत्-"गीयत्थो य विहारो वीओ गीयत्थनिस्सिओ भणिओ" इत्यादि। तेषा ज्ञानेनैव तदनुसारिभि कार्याणा विधानान्न काप्यनास्था। न च कीदृशी ज्ञानविकलानामन्धानामिव कार्यसिद्धि:?। यतो दर्शितैव पूर्वकारिकाया 'यो निरनुबन्धे'त्येतस्या सिद्धिकारणीभूता विशिष्टता, ययेष्टसिद्धिर्जाता जायते भविष्यति च अन्धानामपि, भवतामिव स्वतन्त्राणामेव प्रत्यूहप्रचयपूरितत्व, न तु ज्ञान्यनुसरणनिष्णातताना, तेषा तु ज्ञानिभि सहैव स्वकार्यसिद्धि, अत उच्यते-"चक्षुष्मानेक स्यादन्धोऽन्यस्तन्मतानुवृत्तिपर। गन्तारौ गन्तव्य प्राप्नुत एतौ युगपदेव ॥१॥" [षो०] इति। तन्न केवला ज्ञानशून्यतापि प्रतिवन्धिका विरतेः, यदि स्यात्पूर्वोक्ता विशिष्टता। यद्यपि श्रुत्वा सम्पद्यत एव ज्ञान-"सुच्चा जाणइ कल्लाणं सुच्चा जाणइ पावग। उभय पि जाणइ सुच्चा" इति पारमर्षप्रतिपादनात्, "विनयफल शुश्रूषा गुरुशुश्रूषाफल श्रुतज्ञान"

इत्याद्याप्तोक्तेश्च, पर यदि कदापि ज्ञानावरणीयदृढबन्धनबद्धाना मापतुषादीनामिव न स्याज्ज्ञान, तदापि न योग्यमाचरण प्रत्याख्यानविधानं वा हेयमित्येतावन्मात्रज्ञापनायैतत्। ननु तर्हि ज्ञान्यज्ञानिनो क प्रतिविशेष? इति चेत्, नैव किञ्चित्पूर्वोक्तविधिविशिष्टता चेदन्तर, यच्चान्यत् तन्न विवक्ष्यतेऽप्रकृतत्वादन्यथा गुर्वनुवृत्तिपरायणानामपि न तरणीवत्स्वपरतारकता, सा तु ज्ञानिन एवेति। यदि चोच्येत–सपूर्ण न जायते ज्ञान यावन्न तावत्तत्क्रियेति चेत्, न तदा अर्वाक्केवलात्कार्य किञ्चित्, न च भवति तदकस्मात्तत्पर्यटन समाचरणीय भवाटव्यामप्रतिहततया। न च भवदुदितेषु सिद्धसिद्धान्तसिद्धान्तपाठेषु दरीदृश्यते ह्येतत्–"पढम नाण तओ दया" इत्यत्र दयोपयोगिन एव ज्ञानस्योल्लेखात्। अत एवोपसहृत- "इच्चेय छजीवणिय सम्मद्दिट्ठी सया जए" इति "अन्नाणी कि काही" इत्यत्रापि। "किं वा नाहीइ छेय पावगं" इति वचनाच्छ्रेय पापकयोर्ज्ञानमेव सवराश्रवरूपयोराख्यातम्। न च तच्छब्दज्ञानाभावेऽपि भावार्थबोधमन्तरेण विधीयेत केन किमपि। श्रीद्वितीयेऽङ्गेऽप्येतदेवाधिकृत वेदितव्यम्। अत आह- "पुरतो वंधण परिजाणिया। किमाह बधण वीरो किं वा जाण तिउट्टइ" इत्यादिना आरम्भपरिग्रहयोरेव बन्धनताप्रतिपादनादिनाऽऽश्रवाभिधानात्। श्रीमद्धर्मदासगणिप्रवरैर्यत्प्रोक्त तत्साधूनाश्रित्यैव, न तु गृहस्थान्। तदपि न गीतार्थाश्रितान् विरतानगीतार्थानाश्रित्य, किन्तु ज्ञानलवदुर्विदग्धस्वच्छन्दचारिगीतार्थाभासानविनिश्चितश्रुतरहस्यानाश्रित्यैव। भवति च तथाविधाना तथात्व, परं न तत्प्रत्याख्यानोपयोगि, गच्छप्रतिपालनाधिकारप्रतिबद्ध हि तदिति चिदाङ्कुर्वन्तु विद्वासस्तदभिप्राय तत सम्यक्। यच्च 'सा ज्ञानिन' इत्यादि। तदपि

सर्वविरत्यधिकारपठितं गीतार्थतन्निश्रितभिन्नानां चारित्रशून्यताख्यापनपरमेवेति, न तदपि प्रत्याख्यानसामान्योपयोगि, न वा ज्ञानवतामेवेति नियमनपरं, भवतु वा तत्तथा, परं पूर्वोदाहृत-'यो निरनुबन्धे'त्यादिकाया भगवता तेषामेवोदितेर्न गीतार्थनिश्रितानां अगीतार्थानामपि व्रतादि निषेधयति। वातभृतदृतिकल्पानां तु निषेधने कं किमाह? स्वीकारादेवैतस्य किं भवतामेतद्विधत्वं स्यादिति कल्पयितुं शक्यते केनापि। यच्च "इमे जीवाइमे अजीवा" इत्यादि, तदपि स्थावरत्रसादिविराधनां प्रत्याख्यातारमाश्रित्योक्तं युक्तियुक्तमेव, यत उदाह्रियत एव-"जया जीवमजीवे अ दोवि एए वियाणइ। तया गइं बहुविहं सव्वजीवाण जाणइ ॥१॥
जया गइं बहुविहं सव्वजीवाणं जाणइ।
तया पुण्णं च पावं च बंधं मोक्खं च जाणइ ॥२॥
जया पुण्णं च पावं च बंधं मोक्खं च जाणइ।
तया निव्विदए भोए जे दिव्वे जे य माणुसे ॥३॥
जया चयइ संजोगं सब्भिंतरबाहिरं।
तया मुंडे भवित्ताणं पव्वइए अणगारियं ॥४॥
[दशवैकालिक०] इत्यादिना यथास्थितसाधुत्वाप्तेस्तदैव भावात् पूर्वोदितं जीवादिपरिज्ञानं तद्वतां न्याय्यमेव पूर्वोक्तानाम्। यच्च-'जे य से नाणसपन्ने" इत्यादि, तदपि गीतार्थागीतार्थयोः स्वतन्त्रतामाश्रित्यैव, अन्यथा कथमष्टप्रवचनमात्रज्ञानवतां पण्डितत्वमाख्यस्यन् भगवत्पादास्तत्रैव, तन्न कथमपि सेत्स्यति भवदभिप्राय:- सूत्रानुसारेण यत्सम्पूर्णे ज्ञाने एव कार्या क्रिया, किन्तु भवदुदितागमाक्षरपर्यालोचनयैव सेत्स्यति यद्-यथासम्भवं ज्ञानं सम्पाद्य कार्या विरतिर्यथायोगं गीतार्थादिनिश्रया। अत एवावश्यकादौ ज्ञानक्रियासंवादे "अप्पो वि जह-प्पईवो" इत्यादिना क्रियोपयोगिज्ञानमात्रापेक्षयाऽल्पताऽभिप्रेता सङ्गच्छते। न चास्माभिरेतेन प्रतिपाद्यते ह्येतत्- यदज्ञानिना

भाव्य निरपेक्षेण वा ज्ञाने, किन्त्वेतावन्मात्रमेव यद्यथा यथा भवति जीवाजीवादिज्ञातृत्व तथा तथा कार्यैव विरतिरपि यथायोगम्। न हि केवलज्ञानमात्रेण क्रियामात्रेण वाऽभीष्टार्थसिद्धि, किन्तु ज्ञानक्रियायुगलेनैव। शास्त्रकारा अपि तथैव निरूपयाञ्चक्रिरे, यत आहु –'हय नाण कियाहीण हया अन्नाणओ किया।" तथा "क्रिया च सज्ञानवियोगनिष्फला क्रियाविहीना च विबोधसम्पद"। न च सम्पूर्णज्ञाने साभिलाषेणाविरत स्थेय, तथा सति तदुत्पादस्यैवाभावात्तत्कार्या यथार्हावाप्तज्ञानेन यथार्हा विरतिरिति पुन पुनरुच्यते, तदात्वे एवात्मोन्नतिभावात्, तदिदमाहु –"अप्प पि सुअमहीअ पयासग होइ चरणजुत्तस्स। एक्को वि जहप्पईवो सचक्खुयस्स पयासेइ ॥१॥" इत्यादि। तन्नैतदपि क्षम, यत्तथाविधज्ञानाभावान्न क्रियते विरतिरिति। अथ च प्रतिपादयेयुर्भवन्तो यन्न तथाविधा शुद्धिलक्षणा सामग्री, तदभावाच्च क्रियमाण समस्तमप्यनुष्ठानमकिञ्चित्कर "व्रतानि सातिचाराणि" इत्यादिवचनाद्, विराधितव्रताना च सुकुमालिकादीना स्पष्टैवावगम्यतेऽवनति:, तन्न विधातव्यमीदृश, अवासितो हि यथाऽश्नुते शुभवासनायोग्यताम्, न तथाऽप्रशस्तवासितोऽन्यस्य तु कथैव का, भवति चिराभ्यस्ताशुद्धे तथात्वमिति नाशुद्धिर्यावत्तावत्कार्य किमपि व्रतादीति। तदपि न रमणीय, यत शुद्धि का तावदभिप्रेता भवद्भि, किं तत्परिणामावस्थानलक्षणा, निरतिचारतालक्षणा, आपन्ने वातिचारे प्रायश्चित्तप्रतिपत्तिलक्षणा वेति त्रयी गति। तत्राद्या चेत्, परिशीलयन्ता भावना ससारैकत्वान्यत्वाद्या, परिष्क्रियता च चित्तं सदागमवासनया, यत उच्यते एव–"यो य स्याद्बाधको दोषस्तस्य तस्य प्रतिक्रियाम्। चिन्तयेद्दोषमुक्तेषु प्रमोद यतिषु व्रजन् ॥१॥"

तथा "निद्राच्छेदे योपिदङ्गसतत्त्व परिभावयेत् । स्थूलभद्रादिसाधूनां तन्निवृत्ति परामृशन् ॥" इत्यादि । अत एव च नवपदप्रकरणे च चूर्णौ च प्रतिव्रत श्रावकाणामप्यभिहितैव साधूनामिव प्रतिव्रतं भावना, यया भावितमनस्काना न स्यात् स्खलना, किन्तु वृद्धिरेव परिणामस्योत्तरोत्तर श्रेयोऽनुबन्धिनी, अत एव च "गुणवद्बहुमानादेर्नित्यस्मृत्या च सत्क्रिया । जात न पातयेद्भावमजात जनयेदपि ॥१॥" इत्युच्यते । तत्परिणामावस्थान यद्यपि दुर्लभमेव, व्रतप्रतिपत्त्यवसरे विशिष्टतरशुद्धपरिणामभावात् । अत एवोच्यते साधूनुद्दिश्यापि यत्—"जाए सद्धाए निक्खतो तमेव अणुपालिय" इत्यादि । पर नैतावता तत्र कार्य, किन्तु तत्स्थैर्यायाऽनुसमयमुपयुज्य विधेयमेव तत्, अन्यथा सदैवाविरतेनाशुभपरिणामेनावस्थानापत्ते । न ह्यविरतत्व क्वचिदपि कथञ्चिदपि च प्रशसास्पद, यतो हि जिनाज्ञाभक्त्यादिकृत द्रव्यानुष्ठानमपि भविकाना भव्यभावाप्तयेऽभिमत सूरिभि –'जिनोक्तमिति सद्भक्त्या ग्रहणे द्रव्यतोऽप्यद' इत्याद्युदाहृते । प्रतिपादिता च साधूनाश्रित्यापि प्रमत्तसयतताया अवस्थितिर्देशोना पूर्वकोटि । न चैषा परिणामेऽवस्थिते । तन्न तत्परिणामानवस्थानभिया क्रियमाणाऽविरतौ स्थिति: श्रेयस्करी । 'शिक्षाव्रतानि हि सामायिकादीनी'ति भविष्यत्यभ्यासादेव परिणामस्यावस्थानम् । अत एव च "तिविहे दुप्पणिहाणे" इत्यादिना "मणोदुप्पणिहाणे" इत्यादिना 'योगदुष्प्रणिधानाऽनादरे'त्यादिना सावद्यचिन्तनादीनामतिचारताभिधान "मणेण वायाए" इत्यादिना कृता द्विविधत्रिविधसावद्यत्यागस्यापि सामायिकवत सङ्गच्छते, अन्यथा भङ्गमेवादिशेत्, न वा त्रिविधाद्यादिशेत्, पर सत्यामेव विरतावभ्यासेन परिणामावस्थानमिति ज्ञापनायैवेदमिति कार्य उद्यमो रक्षायै, न तु व्रतपरिहृति ।

यदि ब्रूयु –“नानतिचार भवतीद कालदोषतस्तस्मात् । न क्रियते तत्सत्य द्वितीये न चाविद कथनम् ॥१॥ नानतिचार प्रथम शिक्षा-व्रतमीक्षित मुनिवरेन्द्रैः। यत्प्रोक्त सातिचाराद्भवति त्वतिचार-रहितमपि ॥२॥ अत एवाविधिसेवा भक्तिमतो भावधर्म-तानुगता। आख्याता मुनिवर्यै. स्वर्गशिवप्राप्तिकृत्सम्यग् ॥३॥ भक्त्या ह्यतिचारभवो दोषो नश्यति तन्न दुष्टाऽसौ । अत एवावि-धिसेवाऽभक्तिमतो भवफला प्रोक्ता ॥४॥ कार्यं विरतिमता तत् भक्त्याऽऽदाय व्रत सदा रक्ष्यम् । जिनवचनानुष्ठानाद्ध्रुवा निवृत्ति सदाशयत ॥५॥ हेया अप्यतिचारा यदोद्भवन्तीष्टघातकास्तर्हि । भाव्यमुद्युक्तमनसा तत्प्रतिघाताय रुचिरधिय ॥६॥ यदि चाति-चारभीत्या व्रत भवद्भिर्विधीयते नैव । तत्कि पापापगमोऽविरते-र्भविताऽथवा च सवरणम् ॥७॥ अतिचारक्षालनाय बुधैरबोधि प्रकृष्टमाप्ततया । प्रायश्चित्त न च तद्विरतिविहीनाय गदितमहो ? ॥८॥ यच्चातिचारयुक्त श्रेयसे नैव यन् न्यगादि तदपि वरम् । अतिचाराणामवाय न तु व्रताना वियुक्तिकृते ॥९॥ न च तत्तो न भवति प्रकृष्ट नैव जायते यस्मात् । अतिचाराभावाय तत्प्रोक्तं प्रोत्साहनार्यै (यैव) ॥१०॥ कि यूकादिभीते सिचय परिधीयते न बुद्धिमता । न च मलिमसवासा स्याच्चारु. प्रकृतेऽपि तद्वदूह्यम् ॥११॥ अतिचारोऽपि च तेषामधो नयति ये न सापेक्षा । आम जीर्यति नान्न विधिपक्व नैव तद्धि तथा ॥१२॥ अतिचारक्षालनाय गुरो. प्रकटनाद्यगदमाम्नातम् । दोषो न सानुबन्धो भवति विशुद्ध व्रत च तत ॥१३॥ अत एवाहु शक्या केऽपि सरागे भवेयुरकषायाः । धर्मे यैस्ते क्लियन्ते सम्पद्यन्ते हित ते द्राक् ॥१४॥

यत्सातिचारधर्माच्छ्रेयोऽकरण न तज्जिनाभिमतम् ।
प्रायश्चित्त यल्लघु सातिचारेऽकृते च गुरु ॥१५॥
नैतन्नोऽन्वाख्यान प्रमादपुष्ट्यै प्रमादिना किन्तु ।
तैरप्येतच्छोच्य देशहीन मम न जने ॥१६॥
अतिचारवर्जनपरा वुद्धिर्धार्या व्रत च शक्त्यनुगम् ।
शास्त्राभिमतोऽध्वाऽय नि श्रेयससाधकः परम. ॥१७॥
न भयादतिक्रमादेस्त्याज्य व्रते न भाव्यमनपेक्षै ।
आरान्न पाचकोऽग्निर्न दूरगश्चोक्तमत एष्यम् ॥१८॥
यदि कथ्यते भवद्भिरापन्नेऽतिक्रमादिके दोषे ।
*कार्य प्रायश्चित्त नेदानी दुष्षमाकाल्गात् ॥१९॥*
आसेवित यथा स्यात्पाप चालोच्यते तथा सद्भिः ।
प्रायश्चित्त(च)तथा स्याच्चेच्छुद्धिर्व्रताधाना ॥२०॥
वैद्यायाख्यायाद्यद् रोगमगद ददात्यसौ यत्तत् ।
कुर्याच्चेदामयावी पटुर्न विकले विधौ किञ्चित् ॥२१॥
व्रीडाकर निवेदनमागमविरहाच्च शोधिरपि नैव ।
सहननादिप्रहाण्या न च तत्कर्तुं क्षमश्चार्थी ॥२२॥
तदल तेन वृषेण यदशुद्ध हन्त्यशुद्धमौषधवत् ।
अन्वो नाशोचित स्यात्पोपाय विकारकृत् किन्तु ॥२३॥
नैतत्सुन्दर ! सुन्दरमुक्तं शास्त्रोक्त्यतिक्रमाद्विज्ञै ।
विज्ञानां न व्रीडा सुधियां पार्श्वेऽभवाभिलाषाणाम् ॥२४॥
अविकत्थना यतस्ते गाम्भीर्यन्यत्कृताब्धिगुणा ।
ससारातीतास्ते नैव व्रीडा पुरो भवेत्तेषाम् ॥२५॥
शुद्धौ ते गुणयुक्ता जाता विनयन्ति ता च तदा ।
आगमश्रुतधारणाज्ञा नेदानी यद्यपि व्रतविशुद्ध्यै ॥२६॥

जीत तथा जाग्रत्कि न जिनोक्त व्रतविशुद्धचै ।
न च शोधिं तन्न कुर्याद्यथाविधि प्रापित जिनोक्तिसमम् ॥२७॥
न च सन्ति न तस्य विज्ञा न च श्राद्धा शोधका नैव ।
सरोहण्यगद न न कल्पवृक्षाश्च सम्प्रतीक्ष्यन्ते ॥२८॥
न च नाम योपशान्ति शीतातपादिरक्षा न नो ।
न चाविदधतामीष्टा प्रेत्य सम्पद्यतेऽनघा शुद्धि· ।
शक्त्यनुसाराद्यत्नो धार्यस्तन्नीतिमालम्ब्य ॥२९॥
न च जिनराडपि पूर्व शुद्धामाप्नोति विरतिमभवार्हाम् ।
क्रमश शुद्धा त्वाप्त्वा तीर्थ विदधाति चरमभवे ॥३०॥
चिरमभ्यस्तो मोहो न क्षयमुपयाति कस्यचिद्युगपत् ।
अतिचारास्तत्प्रभवा स्युर्न कथ तद्वता पुसाम् ॥३१॥
न विलीयतेऽव्रताना भवति न शुद्ध व्रत च तत्तस्मिन् ।
मल्लप्रतिमल्लवत्तत्क्षयाय सम्यक् प्रयतितव्यम् ॥३२॥
चरमे भवेऽपि सार्वा प्रमादशून्या न सर्वथाऽभिमता· ।
को वृत्तान्तोऽन्यस्याऽसुमतस्तदिहोद्यता सन्तु ॥३३॥
नार्वाग्दशमाच्छान्तिर्मोहस्य गुणाद्विना क्रम नैतन् ।
अस्मिन् किं नातिचारा महानुभाव· स तमपकुर्यात् ॥३४॥
नालोचनादि केवलमात्मविशुद्धचै प्रभुश्च यो भाव ।
लक्ष्मणयोन किं तप ऊढ हि कथ च सा भ्रान्ता ? ॥३५॥
अनुभवसिद्ध भावो भव्याना व्रतविशुद्धये भवति ।
शुद्ध इति तन्न शोधिर्न साप्रत न च व्रत तन्न ॥३६॥
अत आदिष्टमाप्तैः शुद्धो भावो न तपसि दत्ते चेत् ।
छेदाद्यपीह देय न शुद्धिरर्हा विनाऽऽलोचम् ॥३७॥
नाजीर्णभिया स्वाद्य न न चायत्नेन भाव्यमगदविधौ ।
सस्थाऽऽपत्तिरुभयथा तथा व्रतातिक्रमावूह्यौ ॥३८॥

न च शिक्षाऽऽदौ श्रेष्ठा लिप्यादे कस्यचिद् भुवि नु स्यात् ।
अभ्यासादेव निरघ ज्ञेय विवुधैर्व्रत तद्वत् ॥३९॥
नाभ्यवहारे शुद्धेऽस्त्यशुद्धमाप्त न चेत्तथा तत्स्यात् ।
प्राणावनाय विज्ञैर्नाऽऽह्रियते किं विशोध्याऽन्व ? ॥४०॥
अगद शुद्ध पूर्वं गवेष्यते नाप्यते यदा तत्किम् ।
कालासहे गदे ज्ञै कार्यं गदनुत्तये न परम्?॥४१॥
नष्टे गदे विकारोऽशुद्धेरगदै परैर्यथा नश्येत् ।
तद्वद्व्रतान्निवृत्ते निचिडे दुरिते ह्यनादिकालगते ॥४२॥
शोधिस्तप प्रभृतिभिरतिचाराणा विधीयते पुभि ।
धर्मारोग्यस्याप्तिस्ततोऽपवर्गाङ्गिनी भवति ॥४३॥
अतिचारत्रासान्न हेया विरतिस्त एव तद्धेया ।
कनक मृदोपलिप्त किं त्याज्य त्यज्यते मृत्स्ना (मृदपनेया यत्) ॥४४॥
अवासितोऽपि कुम्भ. श्रियै यदा शुद्धसम्भवो विश्वे ।
तदभावे तस्य नाशादृते न फलमाप्यते विज्ञै ॥४५॥
नरभवआयुर्बुद्धिरारोग्य धर्मसाधन सर्वम् ।
न प्रेत्य विना धर्मात्तदविरता कि सुखममुत्र ॥४६॥
न च नियम सातिचारो निन्द्य पूर्वत्र दर्शित तद्धि ।
आलोचनादिशुद्धिरुदाहृता ता विदन्तु वुधा ॥४७॥
प्रतिपाद्येत भवद्भिरास्थाय विकल्पमनवम दशमम् ।
न क्रियते विरतिरिय न विद्यते साम्यसामग्री ॥४८॥
समताहीनं व्रत न निर्वृतिसिद्ध्यायऽभाणि यत्सूरिभि ।
कर्मविनाशान्मोक्ष स चात्मज्ञानात्समात्तच्च ॥४९॥
स्वल्प समतानुगत शिवदमनुष्ठानमाहुरिद्धधिय. ।
विपुल सकपाय न यतेत तदाप्तये धीमान् ॥५०॥
श्वेतपटो नग्नाटो वुद्धो वा स्याच्छिखाधरो मुण्ड: ।

समभावभावितात्मा लभते मोक्षं कषायग्रुङ नैव ॥५१॥
प्राहुरदो मुनिवर्या सिध्यन्ति चरणवर्जिता भव्या ।
समताघाति न नियम कार्यं सुखमात्मना स्थेयम् ।
यद्यपि चरणान्नश्यति पाप निचित भवै सुबहुभिरपि ।
मध्येमुहूर्त्तमखिल तदुपार्जयति कषायितस्तच्च ॥५२॥
निर्दिष्ट श्रामण्य कषायशमनाच्छ्रुते महामुनिभि ।
आराधनापि शमिन सैव विधेया ह्यतो निपुणै ॥५३॥
साम्येन हि क्षणार्द्धेन कर्म नश्यति तत्पुमान् ।
यन्न हन्याद्वर्षकोटचा तपसा साम्यवर्जित ॥५४॥
वर्षायामपि साधोस्तदाख्यात मुनिभिर्ह्यदः ।
साम्यरक्षाकृते जग्ध्यै गन्तव्य स्थण्डिलाय च ॥५५॥
रक्षार्थं साम्यभावस्य गुरो पार्श्वे गणे वसेत् ।
आधाकर्मादिना लेपस्तत्र नैव मुनेर्भवेत् ॥५६॥
इति विचार्य जिनोदितमादरान्न विरति. समतारहिताऽनघा ।
विदधतु प्रयता समता तत समहतेर्व्रतमर्हति नार्हताम् ॥५७॥
साम्य सुधाम्बुधिमिम न जनाः श्रयन्ति,
पूत्कुर्वतेऽव्रतहता जडवञ्चनाय ।
जानन्ति ते शिवपथ चरण तथापि,
तन्नो धरन्ति समताधरण कथ स्यात् ॥५८॥
साम्य चित्तजयाद्भवेच्छ्रुतमत चित्त न मुक्तेन्द्रिय ,
शक्तो जेतुमिमानि नाभिभवितु नाल रसाद्यानुग ।
आसक्तो विषये पुमान् प्रतिकल बध्नात्यघ संसृते-
र्हेतुर्हा । समताभिधानमुदितैर्मूढैर्भव सज्यते ॥५९॥
कषायाणा किं स्यात्करणविषयासक्तमनसा,
लघुत्व, साम्य किं प्रतिदिनमुदीर्णाश्रववताम् ।

यदा जन्तुर्जह्यान्न जडममता शुद्धमनसा,
तदाऽऽत्मानन्द किं विलसति हृदीष्ट समभव ॥६०॥
न साम्यघाति व्रतमादिदेश, जिन शिवाध्वानमिद यदिद्धम् ।
सामायिक साम्यमय चरित्र, न्यगादि सार्वै- सुकृताय नान्नतम् ॥६१॥
व्रतै का हीनाना भवति समतोशन्तु विबुधा,
न यन्मग्ना सौख्ये विषयकरणे स्वात्मरतय ।
हृषीकै पात्यन्ते भवजलनिधौ के न शमिनो,
गतिस्तेषा काये व्रतमपि न दध्यु शममुखा ॥६२॥
शमारामालवाल ये व्रत गृह्णीयुरादरात् ।
यान्ति साम्यसुधापूर्णास्तेऽन्यया परमा गतिम् ॥६३॥
सुखे वैषयिके त्यक्ते कषाया इयति स्वयम् ।
प्राप्य काष्ठ दहत्यग्नि शाम्यति स्वयमन्यथा ॥६४॥
विषयाक्रान्तचेतस्को बम्भ्रमीति भवोदधौ ।
तेभ्यस्तद्विरतिं कुर्युरनन्तानन्दकाङ्क्षिण- ॥६५॥
कषायेषु विहीनेषु चित्तमात्मनि गच्छति ।
गावो निवृत्तगोचारा यथा स्वालयमाप्नुयुः ॥६६॥
दान्ते चित्ते गुणा- सर्वे, सरितो जलधिं यथा ।
आयान्त्यप्राप्यकारीद मन्ये तेन मत बुधैः ॥६७॥
शान्ते चित्ते ह्यनित्याद्या, भावनाः स्थैर्यमियति ।
विनिवृत्तेऽनिले वार्धा स्तभ्नाति जीवन न किम् ॥६८॥
भावना भवनाशाय साम्यद्रोर्मूलमग्रिमम् ।
पदार्थोद्योतने दीप्रा दीपिका निर्वृतिप्रदा ॥६९॥
साम्ये ध्यान ततो ज्ञानमात्मन- सर्वकर्मनुत् ।
कर्मण्यखिले हते मोक्ष (मोक्षोऽखिले हतेऽदृष्टे) तद्व्रतं
शिवसौख्यदम् ॥७०॥

कथं व्रतविहीनाना समता सम्भवेद्बुधा ।
अबीजो विटपी नैव फल वृक्ष विना क्व नु ? ॥७१॥
अपि च स्वास्थ्यमालम्ब्य स्वस्य कार्य व्रत यत ।
मनइन्द्रिययोगानामहानि गणभृज्जगौ ॥७२॥
नैतेनाऽव्रतमादिष्ट न वा लङ्घनपद्धतिः ।
यथास्वास्थ्यमद कार्यमित्यध्वा शास्त्रसम्मतः । ७३॥
अभ्यासात् पटुतामेति भावस्तत्क्रियतामसौ ।
चिराभ्यस्तेन भावेन स्थैर्यमात्मैति कामितम् ॥७४॥
भवे भ्रान्ता जीवा विरतिरहिता दु खजलधा-
वचिन्वन् स्थित्योग्र दुरितमतुल सानुभविकम् ।
कषायैराक्रान्ता. करणविषयालिङ्गितहृदो
व्रतेष्वभ्युक्तास्तत्समसुखरता सन्तु भविका ॥७५॥
[शकते.] क्रिया गुणोचिता कुर्वन् लभते तत्त्वमुत्तमम् ।
विरति. पञ्चमे युक्ता गुणे तत्तुर्यपूर्वकम् ॥७६॥
निश्चित तत्त्वाधिगत न वेति ज्ञायते यदा ।
तदोचिता न विरते. क्रिया मिथ्यात्वसयुता ॥७७॥
सम्यक्त्व निश्चल तस्य य शमादिगुणान्वित ।
क्रुध्यति नापराधिभ्यो धर्मपथ्येऽनघा रुचि ॥७८॥
न तस्य दृष्टिसंमोह औदार्यादिगुणान्वित ।
शुश्रूषादियुतो मार्गानुसारिगुणसङ्गत ॥७९॥
यो देवगुरुधर्मेभ्यः सर्वस्व विनिवेदयेत् ।
धारयेच्छासन सर्वपुरुषार्थनिबन्धनम् ॥८०॥
अनर्थ भावयेच्छेष वैयावृत्त्यादितत्पर ।
प्रशसासम्तवौ न [illegible] दर्शितिर्न च ॥८१॥

गुणा न चैतेऽधिगता सद्दृष्टिता कथं भवेत् ।
तदभावे व्रत व्योम्नि चित्रवन्नैव शोभते ॥८२॥
अलिका विरतख्याति स तथा मनुते निजम् ।
घोरपापचयस्तस्मादन्यो विश्वे न विद्यते ॥८३॥
साधूनाश्रित्य मुनिभिरगादि पापसाधुता ।
अव्रतान् सयतमन्यानुत्तराध्ययनादिषु ॥८४॥
तदेव न गुणस्थानेऽप्राप्ते तस्य क्रियोचितिम् ।
अञ्चति, तेन कार्या नायतौ सत्याभिलाषिभिः ॥८५॥
सत्य सत्यप्रियाश्चख्युर्मनसा निश्चित न तु ।
अन्याधिकारपठित यदन्येनैव योज्यते ॥८६॥
सुदृष्टे स्थिरतायै तन् न्यगादि शास्तृभि. समम् ।
न तेन विरतेर्हानि युक्तियुक्त मनस्विनाम् (मनीषिणाम्) ॥८७॥
विचार्यमेतद्विबुधैर्न व्रत श्रद्धया विना ।
यथायथ गुणा प्रोक्ताः समे क्षायिकसयुते ॥८८॥
एतन्निर्धारित पूर्व दद्युर्विरतिं मनीषिण ।
मिथ्यादृग्भ्योऽपि मार्गावताराय शुद्धबुद्धय ॥८९॥
सद्दृष्टिस्थैर्यमाधेय समस्तैर्मोक्षकामनैः ।
श्राद्धत्व नान्यथा धार्यमलिकख्यातिभीतिभिः ॥९०॥
न वाच्या स्वस्य नरता पशुवृत्त्यनतिक्रमात् ।
द्वादशापि व्रतानि स्युस्तेषा नाविरता समे ॥९१॥
गुणस्थान क्रियागम्य न क्रियाबोधको गुण ।
तद्व्रत शक्तिमाश्रित्य विधेय वीतकल्मषै ॥९२॥
न तादृङ्नियम शास्त्रे शिष्ट केवलिनो व्रतम् ।
दद्युर्नान्ये तथात्वे च जीवन्ति शासन जिने ॥९३॥

केवलिदत्तमप्याापुर्न सर्वत्र जिना व्रतम् ।
प्राग्भवेऽन्यस्य का वार्ता कुमतिमुज्जहात्विमाम् ॥९४॥
साधूनाश्रित्य गदितं प्रकटसेविन आर्हतैः ।
नैतावता प्रमत्ताना नथात्वेऽस्तित्वबाधनम् ॥९५॥
मुक्तधुरा यतस्तत्र तथाख्याता मुनीश्वरैः ।
अयताना सयतत्वमतौ सर्वक्रियाच्छिदा ॥९६॥
यतमानो यथाशक्ति नाऽसाधुरुपदिश्यते ।
मुक्त्वा यत्कूटचरितमुद्यच्छन्नीरितो यति ॥९७॥
न ख्यातिरलिका तस्य व्रतादे परिपालनात् ।
गुणा यथार्हमन्येऽपि सन्त्येव यदि चेक्ष्यते ॥९८॥
नोनपादार्धपादादिविकल्पा किं श्रुताः श्रुते ? ।
येनैकान्तिकमालम्ब्याऽऽख्यायते स्वाग्रहानुगम् ॥९९॥
न किं व्रताध्यवसायो गुणो येनाऽन्यदुच्यते ।
स एव ख्यापितः पार्श्वे गुरोर्विरतिसङ्ग्रहे ॥१००॥
ज्ञात कथ च नाऽवाप्तो गुण स्वानुभवाद्यदि ।
जानन्तु तद्व्रतोद्युक्त्या योग्यता विरतेर्ग्रहे ॥१०१॥
अक्षयोपशमे त्यागपरिणामे तथाऽसति ।
जिनोक्तमिति विरतेर्ग्रहोऽभियुक्तसम्मत ॥१०२॥
अत एवोदिता पूज्यैर्जिनपादाब्जसेवने ।
अन्यानुवृत्त्या सगित्या सपत्तिरामरी-ध्रुवा ॥१०३॥
आप्तोक्तिवहुमानेन स्थिरता सद्दृशः खलु ।
न च सा नास्ति येनैवमव्रतेनैव जीव्यते ॥१०४॥
क्षयोपशमवैचित्र्यात्सम्यक्त्व नैकधा मतम् ।
जाता तत्त्वार्थश्रद्धा सत्सम्यक्त्व ज्ञायता बुधैः ॥१०५॥

भाव विधाय नि शङ्क कार्या विरतिरादरात् ।
नाऽव्रत सिद्धिमाप्नोति हेतुस्तस्या ध्रुव व्रतम् ॥१०६॥
[शकते-] न वाच्यमात्मन स्थैर्य यथार्हं नैव सम्प्रति ।
उपसर्गेऽप्यविचला यत स्युस्तद्गुणान्नरा ॥१०७॥
तदभावाद् व्रत धूलीक्रीडाप्राय न शोभते ।
भयागमे न रक्षन्ति किमर्थास्ते च रक्षका ॥१०८॥
योगे तीव्रेऽन्यजन्मायुर्बध्यते स च सङ्कटे ।
प्रमोदे च न तत्र स्याद्विना स्थैर्यं व्रतस्थिति ॥१०९॥
तत्र चाविरते भावे स्थितिर्धियेत किं व्रतम् ।
न पालन च विरतेस्तत्र स्थैर्य न तद्यत ॥११०॥
मनस्तोषकर नैव व्रतमीदृग्घितावहम् ।
स्वप्ने यथाऽऽहृति पुष्ट्यै तदेतत्क्रियते न वै ॥१११॥
[उ०] प्रोक्त नैतदवितथ स्थैर्य यद्यपि सार्थकम् ।
तथापि तद्विनाभ्यासाद्विन्दता कथमाप्यते ॥११२॥
सयुगे वारणाश्वाद्या नादौ तिष्ठन्ति दारुणे ।
प्राप्तस्थैर्यास्त एव स्यु: समित्यग्रेगमाऽर्हका ॥११३॥
स्थितिमताऽऽपदि स्थेय विरतेन जनेन वै ।
न तथापि तदन्यस्या तदभावे भवेत्सका ॥११४॥
समरे सुभटा नैव शिक्ष्यन्ते वाजिनोऽपि च ।
न चान्यदाऽशिक्षितास्त आहवे क्षेमसाधका ॥११५॥
अत एवोक्तमाचार्यै पश्चान्न लभते सक ।
तदादावभ्यसनेन सम्पाद्या स्थिरताऽनघा ॥११६॥
आपत्काले स्थिरतायावाप्यते पृथुलं फलम् ।
तथाप्यर्वाग् न तत्फल्गु कर्मबन्धश्च सर्वदा ॥११७॥

वद्धायुष्का नरा प्रान्ते यदि न स्यु शमोपगाः।
तथापि नार्वागाचीर्णं व्रत निष्फलतामियात् ॥११८॥
वासुदेवश्रेणिकादेर्यतोऽभून्नरके गति.।
विरुद्धपरिणामोऽन्त्ये भावितीर्थकृतो न-किम् ॥११९॥
तथापि तीर्थकृत्सेवा न मोघा प्रेत्य सम्भवात्।
तीर्थेशत्वस्य, नैकान्तात्तदस्थैर्येऽफल व्रतम् ॥१२०॥
न च ज्ञान भाविनो नेह सोऽस्ति येन बुध्यते।
नात्मन स्थिरता तत्र भाविनीति यतोऽधुना ॥१२१॥
अस्थैर्येऽपि वणिक्पुत्र–युग्मज्ञातं विभाव्यताम्।
आश्वसङ्ख्या भवा पूर्णा, न सप्ताऽव्रतधारिण ॥१२२॥
नाऽलिकस्थैर्यभीत्या तत्स्थातव्य व्रतवर्जितै.।
शिक्षायुता मेधिभूता जायन्ते चञ्चला अपि ॥१२३॥
विचार्यं सूरिभिः सूत्रेऽन्यथाऽऽकारा न वर्णिता।
स्युश्चेद्वृथा व्रत प्रोक्त–रीत्या स्याद्भवदुक्तवत् ॥१२४॥
व्रतोच्चारेऽपि नो वाच्यमावेशेन ग्रहो न मे।
यावत्तावदिदं धार्यमित्यादि सूत्रसमतम् ॥१२५॥
रक्षका न समे लक्षा–योधिनस्ते न सर्वदा।
रक्ष्यन्ते किमु धान्यादे रक्षायायाऽऽत्मनोऽपि च ॥१२६॥
भवन्ति च त एवात्मवीर्योल्लासात्क्षमा युधि।
एवमेवात्मनोऽभ्यासादापत्तौ स्थिरता भवेत् ॥१२७॥
सिद्ध नैव समीहित व्रतमृते सामग्रिका नेत्यदः,
कल्पैर्द्वादशभिर्व्यधायि तुलना सम्यक् श्रुतात्कामिता।
तैल नो सिकताकणेषु दलितेष्वंशेन धीरा भवेत्,
तद्धार्य व्रतमादराज्जिनमते धृत्वा स्थिरं मानसम् ॥१२८॥

कर्मोदयोऽप्यनिर्णीतो न त्रोऽविरतिकारणम् ।
भावो न चेदनभ्यासात् सता वाऽसङ्गते खलु ॥१२९॥
निर्णीयते त्वलाभोऽपि याञ्चाया द्रव्यसङ्गतौ ।
अवस्थाने चैवमेवादृष्टसाह्वयते स्वयम् ॥१३०॥
न सदप्याप्यते तैल तिलेभ्य उद्यम विना ।
साध्यापि कर्मणा शान्तिर्न तथोद्योगमन्तरा ॥१३१॥
कर्मणा शान्तयेऽजस्र प्रयत्न कर्मधर्मिणाम् ।
कर्मारातिद्रुहोऽर्हन्तो नमस्यन्ते प्रगेऽनिशम् ॥१३२॥
चिन्तयित्वा त्यजेत्कर्म धीरो नोद्यममात्मन ।
उद्योगात्कर्मणा शान्ति तपसाऽऽपुर्यथा जिना ॥१३३॥
मतमार्हतमास्थाय बोध्य बोध्य जिनोदितम् ।
बलवीर्यपौरुषाद्या. स्वस्वकार्यकरा यत ॥१३४॥
एकान्त कर्म नियतिर्नाऽऽर्हतै क्वचिदादृता ।
युतोद्योगेन सफला घट्टभ्रान्तिर्यथारुणे ॥१३५॥
अत आख्यातमर्हद्भि पापमौदयिकोद्भवम् ।
मोक्षाध्वा कर्मणा शान्तिश्छिद्यन्ता तदमूनि भो ! ॥१३६॥
अन्यथा यमनियमौ निष्फलौ हीनकर्मण ।
यथा तथैव संसृत्या स्यास्नूना चेन्न तौ गुणौ ॥१३७॥
निर्जरासवरौ स्याता तपसेत्युदित वृथा ।
स्याच्चेत्त्वदुक्तमिष्येत न तत्कर्मोदयो ध्रुव ॥१३८॥
आप्तैर्द्वेध मतं कर्म सोपक्रम तथा परम् ।
प्रयत्नेनाऽऽदिम शाम्येद् व्रतादि च तदर्थकम् ॥१३९॥
क्रमशुद्धा यत. प्राप्तिस्तन्नान्योऽन्याश्रयो भवेत् ।
आदिमाऽशठयत्नात्स्यात्समभेतत्पुरोदितम् ॥१४०॥

अन्त्य त्वपूर्वकरणान्निघन याति यज्जगु.।
भाष्यामृताब्धयो नाशो घनाना कर्मणा तपे ॥१४१॥
तन्न कर्मोदिर्ति ध्यात्वाऽलिका जह्यासुरुद्यमम्।
द्रावि व्रते कृते कर्मेतरथा तद् दृढ भवेत् ॥१४२॥
पापेऽकृतेऽपि बध्यन्त एनास्येकेन्द्रिया यथा।
स्फुटोऽव्रतप्रभावोऽय चिन्त्यतामागमोदित.॥१४३॥
व्रतभङ्गे तथा नाऽघ यथाऽविरततास्थितौ।
विरता पतिता मुक्तिमाप्नुयुरर्द्धपुद्गले॥१४४॥
नाविरता अनन्ताना पुद्गलानामतिक्रमे।
एकेन्द्रियास्त्रसत्वादि नापु कैषा कथेतरा॥१४५॥
नैतेन निरपेक्षेण प्राप्य यथोदित फलम्।
अभव्या यन्न जग्मुस्ता कृतेऽपि निखिले व्रते॥१४६॥
निर्वाण मन्वते ते न तस्मिन् वाञ्छा कुतोऽनघा।
मुक्तिरागादृते पुण्य-केवल क्रिययाऽर्ज्यते॥१४७॥
भ्रान्तिर्दिशि विभिन्नाया सफला न सुबह्वपि।
किन्तु व्यूषे यथा घट्टकुटीप्राप्तिस्तथाफला॥१४८॥
प्रेम किं निर्वृतौ वो न, न वाऽऽत्मोन्नतिवाञ्छना।
चेद् द्वयं तद्ध्रुव भावि शिव विरतिसङ्गमात्॥१४९॥
नाऽनन्त्ये पुद्गले पुसा धर्मराग. शिवाशय.।
तदालस्य समुत्सृज्य विरतौ सन्तु सादरा.॥१५०॥
मुक्तिमापुश्चान्यलिङ्गे ते ये स्युर्भावसवृता.।
भजना भावलिङ्गे न सम्मता शास्त्रकर्तृभिः॥१५१॥
आत्मदेहविवेकार्कोदये ते कर्मकौशिका।
स्वयमन्धा निवर्त्तन्ते क्रियासृष्टिदृगध्वन॥१५२॥

त्यक्तारम्भा साम्यस्तम्भा अशेषजनोदिति–
वाञ्छाव्याप्तास्त्यक्तस्वार्था मृषोदितिवर्जका ।
त्यक्त्वा स्तैन्य दारान् सारान् दृगो न हि युञ्जते,
द्रव्य नाङ्गीचक्रुर्ये ते गता शिवधामनि ॥१५३॥ सिध्यन्ति स्म—निष्ठितार्था भवन्ति स्म लब्धानन्तचतुष्कतया समग्रारिष्टभूतासमकष्टवल्लीवितानवारिस्वारभृदनादिकालीनाष्टादृष्टसमूलकाषकषणावाप्तात्मस्वभावाविर्भावितया चेति सिद्धा, अष्टविधेषु सिद्धेषु कर्मक्षयसिद्धा इति । ईषत्प्राग्भारपृथ्वीलक्षणसिद्धिस्थायिनो वा सिद्धा, सिद्धिरेषामस्तीति कृत्वा । निरुक्तविधिना वा सित-वद्धमष्टप्रकार ससारमहीरुहवीजभूतं आत्मस्वरूपप्रतिवन्धकमदृष्टकश्मलं, ध्मात-धर्म्यशुक्लध्यानाग्निना दग्धम् आत्मस्वरूप प्रवरकाञ्चनमिव शाश्वतभावेनोद्दीप्रतामानीतमिति सिद्धा । न सिद्धा असिद्धा । पर्युदासनञाश्रयणाज्ज्ञानादिधर्मेभ्यो भिन्ना, भिन्नाश्चैतन्यवन्तोऽपि कर्मपरिकरिता ससारिणो जीवास्तेषा भाव—स्वरूपार्थ असिद्धत्वम् । अस्य ह्यौदयिकत्वं स्पष्टमेव । यतो न हि कर्मोदयमन्तरेण स्यात्ससारे आजवजवीभाव, तैजसकार्मणमूलत्वात् । क्षीणयोश्च तयोर्न ससारनिमित्तकै साम्परायिकैरदृष्टैर्योगाभावात् । ऐर्यापथमपि सत्येव कार्मणादौ सयुज्यते जीवेन सह, नान्यथा, असयुक्तस्यादृष्टेन सयोगाभावात् । [न हि] योगमन्तरेण प्रकृतिप्रदेशवन्धस्यैवाभावात् । असति तादृशे वन्धे कथकार स्याता स्थित्यनुभावौ । अपि चैतौ कषायनिमित्तौ, न चायोगस्य क्षीणकषायस्य वा ततस्तौ स्याता, तदन्तरा कुतस्तमां भवाटव्यटनं जीवस्य सम्पद्येत । योगा अपि च ये मनोवाक्कायाख्या न तैजसकार्मणयोरन्तरा । यतो न हि वाङ्मनस कायमौदारिकवैक्रियादिकमन्तरेण, औदारिक च नैव सयुज्यते नभसैव (सेव) तैजसकार्मणशून्येन आत्मन कार्मणमृते

ग्रहाभावात्तत्पुद्गलाना, तैजस विना पाकाभावात्कथङ्कार सम्पद्येत शरीरोत्पत्ति । तन्न तैजसकार्मणे विहायान्यदस्ति भवमहीरुह-निदानम् । एतदेव परैर्लैङ्गिको देह इत्युच्यते । तस्य सदा सहचारिभावेनावस्थानात् ससारिजीवानाम् । गत्यन्तरे गमागम कुर्वता कथ नोपलभ्येते ससारिणामिति चेत्, सूक्ष्मतमत्वात्तयो । आहुश्चान्येऽपि—"अन्तरा भवदेहोऽपि सूक्ष्मत्वान्नोपलभ्यते" । तथा "मातापितृज स्थूल प्रायश इतरन्न" तथा "सप्तदशैक लिङ्ग" । "अणुपरिमाण तत्कृति श्रुते." । तथैव "पूर्वकृतफलानुबन्धात्तदुत्पत्ति." । तथा पुन. "सति मूले तद्विपाको जात्यायुर्भोगा" । इत्यादि । तन्न कार्मणविहीनेन भवति भवावतारादि । अत एवोच्यते—"अज्ञानपाशुपिहित पुरातन कर्मबीजमविनाशि । तृष्णाजलाभिषिक्तं मुञ्चति जन्माङ्कुर जन्तो ॥१॥ इति । तद्युक्तमुक्तमौदयिकमेवासिद्धत्वमिति । अत्रेदमवधेय—यद्यपि चाज्ञानत्वकथनेन ज्ञानावरणीय, ज्ञानसाधनत्वाच्च दर्शन य छद्मस्थाना तदन्तरेण तदभावात्सहचारित्वाद्वा दर्शनावरण चोपात्त, कषाय-लिङ्ग-मिथ्यादर्शनवर्णनेन च क्रमेण कषायमोहनीय-नोकषायमोहनीय-दर्शनमोहप्रतिपादनेन मोहनीय गृहीतं, गतिग्रहणेन च तत्समौदयिकतया वेदनीयनामगोत्रायूंपि निगदितानि, न गतिमन्तरेण शेषाणि, न वा गतिस्तच्छून्या । ज्ञानावरणाद्यास्तु क्षीणकषाययो सयोग्ययोगिकेवलिनोर्न भवन्ति यद्यपि, तथापि न तौ नामगोत्रायूंषि न धारयत, भवोपग्राहित्वम् अत एवोच्यते एषाम्, अन्तराय तु घातित्वाज्ज्ञानावरणीयदर्शनावरणीयसमानस्थितिकमिति न पृथगुपात्त, तद्ग्रहणेनैव तस्यापि ग्रहणात् । पर यथाऽसयतत्व यथा चारित्रमोहनीयभेदौ पूर्व प्रतिपादितावपि तयो. कार्यभूतमपि पृथगुपात्तं, बन्धकारणताज्ञापनादिहेतो ; यतो योगाः कषाया अपि च प्रवर्त्तन्ते

साम्परायिकाश्रवार्थं तदा यदाऽसंयततया विषयविषमूर्छितो भवति जीव, सति चाविरतत्वे नैव बध्यते तत्तथा कषायक्षयभावाल्लघुना कालेन तथाविधस्येति पृथगुपात्त, तथैव समग्रादृष्टस्य समुच्चितफलज्ञापनायासिद्धत्व गत्यादिना पृथग्गृहीतेऽप्युपात्त वैराग्यार्थ तथोपन्यासश्च पार्थक्येन नैव दुष्टोऽन्यथा द्वे एवाख्यास्यन् ग्रन्थकारास्तत्त्वे जीवाजीलक्षणे न पुनराश्रवादीनि। परं यथा हेयोपादेयज्ञानेन मोक्षानुसृतेरानुकूल्याय प्रतिपादितानि पृथक्तया न दोषभाञ्जि, तथाऽत्रापि कारणरूपतयाऽसयतत्व फलरूपतया चासिद्धत्व निराचक्षाणा ग्रन्थकारा उपकारमेव चक्रु मोक्षानुसारिप्रवृत्तिमता, स्याद्विरुद्धाभिभापिता यदा नैते औदयिके अभविष्यता। चेदेते स्तस्तथाभूते तर्हि तदाख्यान पार्थक्येन विस्मृतप्रत्येकादृष्टफलाना मुग्धजीवाना समुदितफलदर्शनेन सम्यक् प्रवृत्तय एव भविता, विदग्धानामपि ससारभावाख्यानेन वैराग्योत्पादनमपि एव सति कृत स्यादिति। एवमेव लेश्या अपि पृथगुपात्ता ज्ञेया, सत्यप्यविरतत्वे लेश्यानुसारेणैव कर्मणो बन्धीभावात्, 'स्थितिपाकविशेपस्तस्य भवति लेश्याविशेषेणे'तिवचनात्। अथाऽऽख्यायन्ते क्रमप्राप्ता लेश्या – तत्र श्लिष्यत्यात्मा आभि कर्मणा (सह) इति लेश्या—आत्मपरिणामस्तथाविधविविर्धद्रव्यजनित। यदाहु—"कृष्णादिद्रव्यसाचिव्यात्परिणामो य आत्मन। स्फटिकस्येव तत्राय लेश्याशब्द प्रयुज्यते॥१॥" इति। ननु कतमस्य कर्मण उदयैनेमा? । न तावद् घातिनामुदयेन, सयोगिन्यपि तत्सद्भावात्। नापि चाघातिनामपि, चरमगुणेऽभावात्। न चास्त्यन्यत्कर्म यदुदयात्सम्पद्यन्त इमा। अनेनैतदपि निरस्तमेव—यदष्टाना कर्मणामुदये सम्पद्यन्ते लेश्या इति। न च वाच्यं योगपरिणामो लेश्येति। तथा सति "जोगा पयडिपएस ठिइअणु-

भाग कसायओ कुणइ" इतिवचनात् तस्या प्रकृतिप्रदेशबन्धमात्र-हेतुत्वापातात् न स्यात्तद्वता तया सम्पाद्यमानमनुभागादि। न च वाच्यमुक्तमेवात्मपरिणामो लेश्येति । अयोगिन्यपि तत्सद्भावापत्तेः, तत्र हि निरुध्यन्ते योगा, न त्वात्मपरिणाम, तथा सति कर्म-वेदननिर्जरयोरभावप्रसङ्गादिति [चेत्, सत्य, पर] न केवलमात्म-परिणामः तथात्वेनापदिश्यते, किन्तु कृष्णादिद्रव्येणोत्पादित एव। कृष्णादिद्रव्याणि तु योगरूपाणि यदि स्युस्तदा न कोऽपि विरोध, योगसम्भवपर्यन्तमेव लेश्यासम्भवस्याम्नातत्वात्, योगाश्च न सन्त्ये-वाऽन्त्ये गुणस्थाने। न च लेश्यापि तत्रेत्यन्वयव्यतिरेकावपि सम्भ-वत एव लेश्याया योगैः। यच्च—"जोगा" इत्यादि। तदपि मनोरम तावदेव, यावद्विविच्यते "जोगा पयडिपएस ठिइअणुभाग कसायओ कुणइ" इति नियमभावादेव न कषायरहितानामकेवलिनामपि चैकादशद्वादशगुणवर्तिना साम्परायिको बन्धः, कषायस्यैव स्थिति-विधातृत्वात् लेश्याया अनुभावविधातृत्व तु न क्वचिदपि पाप-ठ्यते शास्त्रे, तस्या कषायसवलिताया वा भवेत्तथात्व तदापि न विरोधः। तत्त्वतस्तु योगात्प्रकृतिबन्ध प्रदेशबन्धश्चानुभाव कषायात् स्थितिर्लेश्याविशेषात् अकषायलेश्ययाऽनुभवोऽपि। यदाहु—"तत्र प्रदेशबन्धो योगात्तदनुभवन कषायवशात्। स्थिति-पाकविशेषस्तस्य भवति लेश्याविशेषेण ॥१॥" [प्रशम०] इति। अत्र कषायशब्दोत्तर 'वशादि'ति लेश्योत्तर 'विशेषेणे'ति च युग्म चिन्तनीय चिद्वता, तथैव पाकविशेष इत्यपि। अत एव पुरतः 'श्लेष इव वर्णबन्धस्य कर्मबन्धस्थितिविधात्र्य' इत्युक्तम। एवमेव च सयोगिनामीर्यापथकर्मबन्धवर्णितस्तीव्रोऽनुभावोऽपि सम्भवेत्। अन्यथा कषायक्षयात् कथङ्कारमनुभावबन्धसम्भव इति। योगपरिणामत्वेऽपि च लेश्याया योगात्कथञ्चिद्विचित्रत्वादेव

भवेत् ततोऽनुभावविशेषबन्धोऽपि, न तदा विरोधमुत्पश्याम । योगाश्चात्मपरिणामरूपा एव, भावयोगस्य तथात्वात् । परं सयोगिनि भावमनसोऽभावेऽप्यात्मपरिणाम शुक्लतमोऽस्त्येव लेश्यासद्भावश्चेति लेश्याया आत्मपरिणामत्व न युक्त्यतिरिक्तम् । द्रव्ययोगास्तु त्रयोऽपि सन्त्येव यद्योगाल्लेश्यासम्भव, योगत्रयसम्भवस्तु निवृत्तसमुद्घातानामपि सम्भवत्येव "समुद्घातनिवृत्तोऽथ मनोवाक्काययोगवान् भगवान्" इतिवचनात् । ननु चात्मपरिणामत्वे लेश्याना कथ तासा वर्णगन्धादिमत्त्व वर्ण्यमानमुत्तराध्ययनादिषु—"नामाइ वण्णरसगधफासपरिणामलक्खण ठाण । ठिइ गतिं चाउ लेसाणं तु सुणेह मे । १।।" इत्यादिना भगवद्भिः सङ्गच्छते? । न ह्यात्मनामस्ति रूपगन्धादिमत्त्व, कथ तर्हि लेश्याना स्यात्तथात्वमिति चेत् अत एवोक्त—'कृष्णादिद्रव्यसाचिव्या'दिति । द्रव्याणि तु तानि द्रव्ययोगरूपाणि भवेयुस्तदा सर्वं घटाकोटिमाटीकत एव । एवमेव च द्रव्यभावलेश्योपपत्तिरप्यवगन्तव्या । यद्यपि गत्यन्तराले विग्रहगतौ चौदारिकादियोगाभावेऽपि कार्मणकाययोगोऽस्त्येव, तेन तदालम्बनो लेश्यासद्भावस्तदा वर्ण्यमानो नासङ्गतता दधाति तथापि तस्या. स्थूलयोगसद्भावेन परावर्त्तः प्रतिपाद्य । यत आहु—"अतोमुहुत्तम्मि गए अतोमुहुत्तम्मि सेसए चेव । लेसाहि परिणयाहिं जीवा गच्छति परलोय ।।१।।" इति । अत्र हि स्पष्ट एव परभवगमनसमये तात्कालिकलेश्यापरावर्त्तो नाभ्युपगतस्तत्र लेश्यापरावृत्तिकारणीभूतयथार्थद्रव्योपग्रहाभावात् । लेश्याना चात्मपरिणामत्वेनाऽसङ्ख्यत्वेऽपि परिस्थूरविभागव्यपेक्षया सामान्यविशेषभावेन षड्विधत्व वर्ण्यते । तथा चैकजातीयशुक्ललेश्यासद्भावोऽपि लान्तकादाऽऽ सर्वार्थसिद्धे सुराणा सयोगिना केवलिनां पर्यायवृद्धतमाना मुनीश्वराणा 'सर्वं

शुक्लमिद खलु नियमात्सवत्सरादूर्ध्व'मितिवचनान्नासङ्गतो भवति। यद्यपि च त्रिविष्टपनिवासिनामपि केषाञ्चिदभव्यत्वेन नौचितिमञ्चति शुक्ललेश्यावत्त्व तथापि तत्र तथाविधानां द्रव्याणां ग्रहणसम्भवात्तेषा द्रव्यलेश्यापेक्षयैवविधत्व वर्ण्यमान नावर्णनीयम्। अत एव च द्रव्यलेश्यापेक्षयाऽविच्छिन्नसन्ततित्व निर्जरादीना वर्ण्यते। ततश्च नारकाणा निन्द्यतमलेश्यासद्भावेऽपि न सम्यक्त्व-प्राप्तेरुक्तिरसम्भविनी। यत उच्यते-"सुरनारयाण ताओ दव्वल्लेसा अवटठिया भणिया। भावपरावत्तीए पुण एसि हुति छल्लेसा ॥१।" इति। ननु च द्रव्योपष्टम्भजनित आत्मपरिणामो लेश्येत्युच्यते, तथा च कथ द्रव्यभावलेश्याव्यपदेशो? यादृशानि द्रव्याणि सचिवी-भावमापद्यन्ते तादृशी सोच्येत। न हि जपाकुसुमोपाधिजनित स्फटिके राग उपलभ्यते, यथा चापदिश्यते स्फटिकस्य रक्तता, तथा नीलिमनीलोपाधिकेन तत्र श्यामताऽपदिश्येत, एवमात्मनो द्रव्यसाहचर्येण लेश्योत्पत्तेः कथमवस्थितानवस्थितत्व द्रव्यभावा-पेक्षयोपपाद्यमानमुपपद्येतेति चेत्, सत्य, यथा हि सुदृढवपुष्कस्य परिश्रमकारणमप्यध्वनीनत्व न भवति खेदाय, भावितविषवेगस्य वा नापकरोति विषवेग, तथा यथाऽभ्यवहृतकर्कटिकस्य न भासते जलास्वाद, तथाऽत्रापि नारकसुरयोरवस्थितद्रव्यलेश्याकत्वेऽपि नाऽयुक्ता भावलेश्यापरावृत्ति.। न चैव द्रव्याणा तथाविधाना तत्तल्लेश्योत्पादकत्व न, तस्य तत्कारणत्वेन पूर्वमेव निरूपितत्वात्, अन्यथा निर्हेतुकत्वापत्ते। लेश्याश्चैता षट् कृष्ण—नील—कापोत—तैजस—पद्म—शुक्लाभिधाना.। द्रव्यापेक्षयैवाऽस्य व्यपदेशाद्वर्णप्राधा-न्येन व्यपदेश एतासां वर्णाना च स्वनुबोध्यत्वाच्च न गन्धादिभिर्व्य-पदेशः। लक्षणानि च जम्बूफलखादक—ग्रामघातकपुरुषषट्क-दृष्टान्तेन प्रवचनप्रसिद्धेन यद्यप्यभ्यूह्यानि परमोहावता, तथापि

लोकप्रसिद्धयर्थमुच्यते किञ्चित्पुरुषोद्देशेनोद्दिष्टं निर्दिष्टयथा ज्ञातवस्तुवादिपुरुषेण, यदपेक्षया शक्नुवन्ति परमार्थपथप्रवृत्ता आत्मना भावपरिणतिं ज्ञातुं कुशीलतां चाम्नाय तथाविधाना वर्जयेयुश्च तैः सङ्गतिम् । तथाहुः स्थविरपादाः—

"पञ्चासवप्पवत्तो तिहिं अगुत्तो छसु अविरओ अ । तिव्वा-रंभपरिणओ खुद्दो साहसिओ उ नरो ॥१॥ निद्धंधसपरिणामो निस्संसो अजिइंदिओ । एयजोगसमाउत्तो किण्हलेसं तु परिणमे ॥२॥ ईसा अमरिस अतवो अविज्जमाया अहीरिया गेही । पदोसे य सढे पमत्ते रसलोलुए सायगवेसए य ॥३॥ आरंभाओ अविरओ खुद्दो साहस्सिओ नरो । एयजोगसमाउत्तो नीललेसं तु परिणमे ॥४॥ वंके वंकसमायारे नियडिल्ले अणुज्जुए । पलिउंचगओवहिए मिच्छा-दिट्ठी अणारिए ॥५॥ उप्फालगदुट्ठवाई य तेणे यावि मच्छरी । एयजोगसमाउत्तो काउलेसं तु परिणमे ॥६॥ नीयावित्ति अचवले अमाई अकुतूहले । विणीयविणए दंते जोगवं उवहाणवं ॥७॥ पियधम्मे दढधम्मेऽवज्जभीरूहिएसए । एयजोगसमाउत्तो तेउलेसं तु परिणमे ॥८॥ पयणुकोहमाणे य मायालोभे य पयणुए । पसंतचित्ते दंतप्पा जोगवं उवहाणवं ॥९॥ तहा पयणुवाई य उवसंते जिइंदिए । एयजोगसमाउत्तो पम्हलेसं तु परिणमे ॥१०॥ अट्टरुद्दाणि वज्जित्ता धम्मसुक्काणि ज्झायइ । पसंतचित्ते दंतप्पा समित्ते गुत्ते य गुत्तिसु ॥११॥ सराए वीयराए वा उवसंते जिइं-दिए । एयजोगसमाउत्तो सुक्कलेसं तु परिणमे ॥१२॥" [उत्तरा०] इति । न चैतावन्त एव भेदा लेश्यानां, किन्त्वसङ्ख्या एव । असङ्ख्यातत्वं चासङ्ख्येयोत्सर्पिण्यवसर्पिणीसमयसमानत्वं, क्षेत्रा-पेक्षया च सङ्ख्यातीतलोकाकाशप्रदेशमानत्वम् । यदाहु —"असंखे-

ज्जाणोसप्पिणीण उस्सप्पिणीण जे समया। सखातीता लोगा लेसाण हवंति ठाणाइ ॥१।" [उत्त०] इतिवचनात्। ननु च जीवानामानन्त्यात्कथ न लेश्यानामानन्त्यम्, प्रतिजीव लेश्याभेदात्, अध्यवसायस्थानाना चेतो विशेषेणाधिक्यम्। श्रूयतेऽपि च लेश्या-स्थानेभ्य· प्रतिकण्डक प्रतिपादितान्येतावन्त्येवेति चेन्ननु लेश्याया द्रव्यावष्टब्धतयाऽनन्ताश्चानन्तकायिका एकत्र सहचरिता इति न तेषां विभिन्ना लेश्याऽभ्युपगता ज्ञायते। अत एव शरीरप्रमाणा-न्येतान्युक्तानि स्थानानीति ज्ञायते। यतोऽनुयोगद्वारसूत्र–"कइविहा ण भते! ओरालियसरीरा पन्नता?। गोयमा! दुविहा पन्नत्ता, त जहा–बद्धिल्लिया य मुक्केल्लया य। तत्थ ण जे ते बद्धेल्लया, ते ण असखेज्जा असखिज्जाहि उस्सप्पिणीहि ओसप्पिणीहिं अवहीरंति कालओ, खेत्तओ असखेज्जा लोग"त्ति। ननु च वैक्रियाण्यप्यसङ्ख्यातान्येवाधीतानि शरीराणि तत्र, यत आहु– "केवइया ण भते! वेउव्वियसरीरा पन्नत्ता?। गोयमा! दुविहा पन्नत्ता बद्धेल्लया य मुक्केल्लया य। तत्थ ण जे ते बद्धेल्लया, ते ण असखेज्जा असखेज्जाहि उस्सप्पिणीहिं ओसप्पिणीहि अवहीरंति कालओ,खेत्तओ असखेज्जाउ सेढीओ पयरस्स असखेज्जभागो"त्ति।।" तत्कथ नाधिकानि स्युरुक्तपरिमाणतो लेश्यास्थानानि भवन्तीति चेत्। सत्य, तान्यत्र समावेशितान्येव ज्ञेयानीति बुध्यता। वैक्रियाणा औदारिकापेक्षयात्यन्तालपसङ्ख्याकत्वात्, तेषु च तत्र समावेशि-तेष्वपि नोक्तसङ्ख्याव्याघात इति सुस्थ सर्वम्। तथा प्रतिपादिता औदयिकभेदा गत्यादय। ननु क्रम एष,यथा कथञ्चिद्द्वैवमुपन्यास? उभयथापि, यतः प्रथमतस्तावद्भवति गतेरेवोदयस्तदविनाभावि-त्वाच्छरीरादे, तदभावे च नैवेष्टानिष्टविषयप्राप्तिप्रत्ययिका· कषाया, उच्यते च-"कर्मोदयाद्भवगतिर्भवगतिमूला शरीरनिर्वृत्ति।

देहादिन्द्रियविपया विषयनिमित्ते च सुखदु खे ॥१॥ दु खद्विट् सुख-लिप्सु " [प्रशम०] इत्यादि। रक्तो द्विष्टश्चेष्टस्पर्शशब्दरूपादौ परिणतो भवति कामवासनाया, ततो भवति चानन्तरीयकता वेदस्य। न च द्वेषेण कथ भवति कामवासनेति वाच्यम्, अभि-लाषा मकत्वात्तस्या, इति परपराभवपरिणामेन तत्र प्रवृत्त्युपपत्ते, अत एवोच्यते–भावओ ण रागेण वा दोसेण वा" इति मैथुनविर-मणव्रतालापके मैथुनस्वरूप चतुर्धा वर्ण्यमानैर्नरेन्द्रदेवेन्द्रवर्ण्यै। अन्यच्च–यत स्त्रीपुमासाभिलापरूपो हि स इति प्रद्विष्टप्रतिज्ञा-पलायनप्रवीणा कुर्यु पाखण्डिकादिवत्। अथवा साक्रोशमाक्रुष्ट सन्नपि तृतीयप्रकृतिस्त्व निर्वाहकातरो वा इत्यादिना द्विष्ट: सस्तथापरिणमत्येवेति नायुक्त किञ्चित्। कामवासनापरिणत-श्चाऽज्ञो नैव श्रद्धत्ते आत्मतत्त्व यथास्थितम, नैव चालोच-येदाश्रवतामाश्रवस्य। तथा च स्पष्टमेव तथाविधस्य मिथ्यादर्शन, सम्यग्दृष्टिस्तु तथापरिणतोऽपि कर्मणा विचित्रा गति परामृशन्न तत्र रज्यति। पठचते चात एव तमुद्दिश्य-"वेदोदयासहिष्णुरिति"। तथा "यद्यपि कर्मनियोगात्करोति तत्तदपि भावशून्यमल" इत्यादि च। अत एव च सम्यग्दृष्टेर्वैमानिकायुर्बन्धोऽपि सङ्गच्छतेऽविरत-स्यापि, कथमन्यथाऽऽरम्भपरिग्रहादौ प्रवृत्तिमतो नियमित स्वर्ग-समुत्पाद सम्भवेत्। पूर्वोक्तपरिणत्यभावे तु सम्यक्त्वपातेन भवेदुत्पादो यत्र तत्र तस्य तदा न कोऽपि विरोध., "जइ न सम्मत्तजढो"त्ति वचनात्। श्रेणिककृष्णवासुदेवादयस्तु पूर्वमेव बद्धगत्यन्तरायुष्का इति न तेषा तथायुषोऽबन्धे हानि कापि। "अहव न बद्धाउओ पुव्व" इत्यादिना स्पष्ट स्पष्टित सूत्रकारै-रेषोऽभिप्राय.। यद्वा–तीव्रकामवासनापरिणतो लिङ्गिनीधर्षणा-दिनाऽवाप्नुयादेव मिथ्यादर्शन बोधिबीजदाहशासनमालिन्या-

पादनादिना । तदुक्त–"सजइचउत्थभगे मूलग्गी बोहिलाभस्स" त्ति । अत्र चतुर्थभङ्ग इति व्रतक्रमप्रामाण्यान्मैथुनविरति-व्रतभङ्गे आपादिते इति शेप पूरयित्वा व्याख्येयम् । यद्वा–प्रथमैवेय, कृतश्चेति अध्याहार्य व्याख्येयम् । अन्यदपि–"लिंगेण लिंगिणीए सपत्ति जो नियच्छए पावो । सव्वजिणाण अज्जासघो आसाइओ तेण ॥१॥ पावाण पावयरो दिट्ठिफासो वि से न कप्पति हु । जो जिणपुगवमुद्द नमिऊण तमेव धरिसेइ ॥२॥ ससारमणवयग्ग जाइजरामरणवेयणापउर । पावमलपडलछन्ना भमति मुद्दाधरिसणेण" ॥३ । इति । आशातना याश्च मिथ्या-दर्शनत्व ससारभ्रामकत्व च । "आसायण मिच्छत्त आसायणवज्जणा उ सम्मत्त । आसायणानिमित्त कुव्वइ दीह च ससार ॥१॥" [उप०] इत्यादिना स्पष्टमेव । शासनमालिन्यापादनेनापि तस्य स्यादेवैवविधफलप्राप्ति । अनुपयोगेनापि मालिन्यकृतो मिथ्यादर्श-नप्राप्त्यादिकमाम्नात, का वार्ता तर्हि ईदृशस्य ।? यत आहु -"य शासनस्य मालिन्येऽनाभोगेनापि वर्त्तते । स तन्मिथ्यात्वहेतुत्वादन्येषा प्राणिना ध्रुवम् ॥१॥ बध्नात्यपि तदेवाल पर ससारकारणम् । विपाकदारुण घोर सर्वानर्थविवनर्धम् ॥२॥" [अष्टक०] इत्यादि। आपन्नमिथ्यादर्शनस्य चाज्ञानता स्पष्टैव, तस्य प्रचुरकर्मबन्धकत्वेन, प्रचुरकर्मोपादान च तस्य "पल्ले महइमहल्ले" इत्यादिना स्पष्ट-मेव । यद्वा–मिथ्यादर्शनान्वितस्य ज्ञानज्ञान्याद्याशातनया स्पष्ट एव ज्ञानावरणीयस्य बन्ध प्रकृष्टस्तदुदयाच्च स्पष्टमेवाज्ञानत्व, अज्ञानवतश्च न स्यादेव संयतत्व 'पूर्वलाभे भजनीयमुत्तर'मितिवच-नात्प्राप्तसम्यग्दर्शनज्ञानस्यापि विरतेर्भजनीयत्वात् "नाणेण विणा न हुति चरणगुणा" इतिवचनाच्च । न चाज्ञाताश्रवादितत्त्वस्य भवति व्रतादानेच्छापीति । न चाननुष्ठितसवरनिर्जरायुगल-

सिध्यति, अनादिकालीनघनरूढकर्मग्रन्थिविदारणाभावे सिद्धि-वधूसमागसस्यासम्भवात्, ततस्तदनन्तरमुपान्यास्यसयतत्वानन्तर सिद्धत्वाभावरूपमसिद्धत्वम्। असिद्धश्च यथायथ द्रव्यसयोगात्स्यादेव लेश्यावानिति पर्यन्त उपन्यस्ता लेश्या। विज्ञेया चैव क्रमोपन्यासस्य सफलता वाचकमिश्राणा, पर न कर्मवन्नियत एप क्रम इत्युभयथे-त्युच्यते। अन्यत्रान्यथाविन्यस्यापि तस्योपलम्भात्। यत आहुर्देवेन्द्र-नम्यचरणा देवेन्द्रचरणा –"अन्नाणमसिद्धत्ता-सजमलेसाकसायग-इवेआ मिच्छ"ति। तन्नैप क्रम इत्याग्रह । भेदा अपि च नैवविधा इत्याग्रहो, विवक्षयाऽन्यथापि सुवचत्वात्। तदुक्तमनुयोगद्वारेषु–"नेरइए तिरिक्खजोणिए मणुस्से • देवे पुढविकाइए जाव वणप्फइकाइए तसकाइए कोहकसाए ४ कण्हलेसा ६ इत्थिवेए ३ मिच्छद्दिट्ठी असन्नी अन्नाणी आहारए ससारत्थे छउमत्थे असिद्धे अकेवलि" इति। एव च कथ नोक्ता अजीवाश्रया औदयिका अत्र, न च न तेऽभिमता वाचकमिश्राणा 'औपशमिकक्षायिकौ भावौ मिश्रश्च जीवस्य स्वतत्त्वमौदयिकपारिणामिकौ चे'त्यत्राद्याना त्रयाणा जीवस्वतत्त्वरूपताख्यानेनैत्रान्त्यद्वयस्य जीवाजीवोभयनि-श्रितत्वप्रतिपादनात्। तत्समाहितमेव तत्र, भावजीवाधिकारप्रतिव-द्धत्वाद्भावप्रकरणस्य। अत एव पारिणामिकभावभेदकथने 'जीव-भव्याभव्यत्वादीनि चे'ति सूचिता एवाजीवत्वादय आदिशब्देन पारिणामिका न तु साक्षादुपात्ता। न च वाच्य कथमजीवाना-मौदयिको भाव सम्भवति?। पारिणामिकस्य स्वाभाविकत्वेन विवक्षितत्वादजीवत्वादेस्तथात्वेन पारिणामिकत्वे सम्भवत्यपि, यतो न ह्यजीवा कर्मभेदाना कर्तारो "य कर्ता कर्मभेदाना" इति "कर्त्ता भोक्ता" इतिवचनाच्च। न चाकर्तृणा तत्फलोपभोगो न्याय्य, अकृताभ्यागमापत्तेरिति, यतो जीवगृहीतानामेवौदारिकानां

तथाभावादजीवाना तेषामप्यौदयिकत्व प्रणिगद्यमान नानुचितिकोटिमियर्त्ति। उच्यन्ते च शरीराणि पुद्गलविपाकीनि क्रोधादयश्चोभयविपाका इति। आहुश्च सूत्रकारा स्पष्टमेव–"से किं तं अजीवोदयनिप्फन्ने२ अणेगविहे पन्नत्ते, त जहा-ओरालिय वा सरीर ओरालियसरीरपओगपरिणामिय वा, एव वेउव्विय आहारय तेययं कम्मय पओगपरिणए वण्णे गधे रसे फासे। से त अजीवोदयनिप्फन्ने" इति। तथा च जीवकृतैरपि पूर्वकर्मभि शरीरादितया परिणति पुद्गलानां यत उदयावसरनिष्पन्ना, तत एषामौदयिकत्वम्। तथैव च वर्णगन्धरसस्पर्शपरावृत्तिरपि,तन्नाजीवानामौदयिकत्वमसङ्गतम्। एवमेव क्रोधादीनामुभयविपाकित्वमपि विज्ञेयम्, तदुदयेऽक्षिशरीरादौ दृश्यत एव रक्ततादि। न च शरीरेण भवति जीवे परावृत्तिरिति तत्तन्नोभयविपाकीति सुधिया स्वयमूहनीयम्। एव–मौदयिकस्वरूप कथञ्चिद्विस्तरत. सुबोधायाऽऽख्यायाऽथ क्रमप्राप्तं द्वितीय भावमाहु.–"उवसमिए"त्ति। तत्रोपशमेन–कर्मोदयविष्कम्भेण निर्वृत्तमौपशमिकम्। न च वाच्य कथमुदयनिरोध कर्मणा सम्भवी, यतो न हि वन्धावसरे तथा बद्धानि तानि, तथावन्धाभावे च कथमुदयनिरोध., तथा प्रागेव वन्धे च कथमौपशमिकत्वमिति। प्राक् तथाबन्धाभावेऽप्युदयात्प्रागध्यवसायविशेषेण तथा विधातु शक्यत्वात्। यथा ह्यध्यवसायविशेषेण वद्धानि पूर्वं जीवेन तथैव तान्युपशाम्यन्ते चेत् तदा को विरोधो? जीववीर्योल्लासप्रावल्ये एव च भवत्येवम्। न चोदयप्राप्ताना निरोधोऽभिधीयते केनापि, किन्तु भाव्युदयानामेव "अणुदिय च उवसत" इतिवचनात्। यदि च न भवेदुदयनिरोध, क्षयोऽपि न भवत्येव। न च वाच्य मास्त्विति, भोगेनैव क्षयोपपत्ते, यथा बद्ध तथैव वेद्यते चेत्, न स्यादेव मोक्षो, वेदनकालेऽपि नूतनवन्धभावात्। ननु-क्षयभावापत्तावपि समान-

मेतदिति चेत् न, अयोगिनि बन्धाभावात्। क्रमोदये च दीर्घकाल-
मबन्धकत्वाभ्युपगमप्रसङ्गो दुरुत्तरः। अन्यच्च—यदि नैव सम्भवे-
त्कर्मक्षयो, निरर्थकतामेवाप्नोति दीक्षाद्यनुष्ठानम्। न च स्याद्
गुणप्राप्तिरपि, कर्मोदयस्य नाभ्युपगम्यते चेत्क्षय उपशमो वा,
प्राग्बद्धाना प्रतिबन्धककर्मणा सद्भावात्। तदवश्यमभ्युपेय कर्म-
णामुदयनिरोधेनोपशम क्षयवत्। ननु भविष्यत्ययेपोऽर्थ क्षयोपशमेन
तत्सदृशलक्षणेनोदीर्णस्य नाशाद्भोगेनानुदीर्णस्योपशमाच्च तत्रापि,
तन्नार्थोऽनेन क्षयक्षयोपशमाभ्या भिन्नेन तृतीयेन जीवगुणभावेनेति
चेत्, ननु कथमुपशमस्यानभ्युपगमे क्षयोपशमस्यैव तावच्छोभते-
ऽभ्युपगम उभयरूपत्वात्तस्य, सति चोपशमयोग्यत्वे कर्मणा किमिति
नाभ्युपगम्यते भावस्तृतीय औपशमिकाख्य। न हि क्षयोपशमभावे
उपशम क्षयो विदधाति, तत्राप्यात्मपरिणामजन्यतयैव तस्यावश्य-
मङ्गीकरणीयत्वात्। तथा चात्मपरिणामजन्यः केवल औपशमि-
कोऽप्यविरुद्ध एवेत्यभ्युपेय एवासौ। न च वाच्य भेदेनाभ्युपगम-
स्तथाप्य यानर्थक एव, यत क्षय स्वतन्त्रो यथा तथोदीर्णस्य
क्षयेणानुदीर्णस्योपशमेन च क्षयोपशमभावस्य निर्वृत्तत्वान्नार्थान्तर-
मस्ति, येन युक्तः स्यादभ्युपगन्तु भावस्तृतीयोऽभ्युपगच्छतापि
चैन क्षयोपशमवदेवाभ्युपगम्यते। न चोदयमागतस्याभिमत
विष्कम्भणमत्रापि, येन भेदः स्यादस्य क्षयोपशमभावादिति। विष्क-
म्भस्य द्वैविध्यात् प्रदेशविपाकाभ्या कर्मणा वेदनस्यापि द्वैविध्यात्।
य उदय निरुणद्धि विपाकतोऽसौ स्यात्क्षायोपशमिक, यस्मिन्
भवेत् प्रदेशोदयानुभवो येन च विष्कम्भितोदयस्यापि कर्मण
स्यात्क्षय, उभयनिरोधे च क्षयाभावान्न कथङ्कारमप्यापद्येत कोऽपि
क्षायिकभाव "कडाण कम्माण न मोक्खु अत्थि" इतिवचनात्।
न च वाच्य कथं तर्हि प्रदेशोदयवेदनमात्रेण स्यात्क्षय इति। मदन-

कोद्रववत्तद्रसस्य तनूकरणात् । एव च दीक्षादिसाफल्यमप्यनेन रसादिहान्यावसेयम् । शास्त्रमपि "तीव्वाणुभावाओ मदाणुभावाओ पकरेइ" इत्यादिना एतदेवाह । ननु च तत्र "बहुपएसग्गाओ पकरेइ" इत्यप्युच्यत एव, न च प्रदेशोदयस्यावेद्यत्वमभिमतं 'पएसकम्मं नियमवेज्ज' (पएसवेज्ज समं कम्म) इतिश्रुतेरिति चेत्, सम्यक् पर अपवर्तनादिकरणापेक्षया ह्येतत्, सोपक्रमादृष्टाना च स्यादेवैतत् । यद्वा-न प्रदेशोदय प्रसिद्ध ,(निषिद्ध), किन्तु प्रतिपादिताऽल्पता, सापि परिमाणापेक्षया, यत पठ्यते तत्राग्रशब्द , स च परिमाणवाचक. । यद्वा—अग्रशब्देन तत्र न केवल प्रदेशो—दलसञ्चयरूप , किन्तु प्रकृत्यादिसमुदाय. प्रदेशशब्देन ग्राह्यः 'समुदायः प्रदेश स्यादि'त्युक्ते , पूर्व पृथक् पृथक् प्रतिपादितानि स्थित्यादीनि यद्यपि, पर समुदायेनाऽत्र निर्देश इति नात्र चर्चावतारः कोऽपि । यथाऽऽगम वा परिभावनीयमेतत् । ननु भवतु तथा, पर कथं भवन्ति प्रदेशा रसशून्या , येन स्यात्केवलस्य प्रदेशस्योदय इति चेत्, सत्य, नास्त्येव, पर मतिज्ञानावरणीयादिसद्भावेऽपि तत्तज्ज्ञानोपलम्भान्निश्चीयत एतत् यदुत—प्रदेशोदयेन सह रसस्य वेदनेऽपि सूक्ष्मत्वात् भक्षितैलकस्य कदल्यादिविकाराऽभाववत् तद्रसस्य गुणघातकत्वाभावादसत्त्वं विवक्षितम् । तथा च मिथ्यात्वमोहपुद्गलानां सम्यक्त्वमोहतामापादिताना वेदनेऽपि मिथ्यात्वाऽभावेऽपि न कोऽपि विरोध इत्यलमप्रसङ्गेन । औपशमिके तु द्विधापि निरोधः प्रदेशविपाकाभ्याम् । न च तत्र वेदनमदृष्टस्यास्ति लेशतोऽपि । अत एव चान्तर्मौहूर्त्तिकत्व स्थितितोऽस्याभिमन्यतेऽभियुक्तै. । ननु कथ तस्यान्तर्मौहूर्त्तिकत्व प्रतिपातनियमश्चेति चेत्, ननु अवधारणीयं तावदेतावद्यद्-यदि भवत्यौपशमिक', नैव वेदयति प्रदेशन्निपाकौ लेशतः । न चाऽननुभूत

क्षीयते, आसन्नोदयान्यपि च निरुध्यन्त एव कर्माणि, छाद्मस्थिकश्चोपयोग एकस्मिन्नुत्कृष्टतोऽप्यान्तर्मौहूर्त्तिक एवेति। भवत्येव वान्तिस्खलनावत्काश्चित्कला उदयनिरोध प्रतिपातश्च। कथ न क्षायोपशमिकस्तर्ह्येवंविध इति चेन्न, तत्र पूर्वोक्तवत्प्रदेशोदयवेदनेन क्षयापादनात्प्रतिबन्धकाना न प्रतिपातनियम, न चान्तर्मौहूर्त्तिकत्व तत्रापि, तथाविधरसवेदने तु भवत्येव प्रतिपात, अत एव "खओवसमिय असख" इति श्रूयते। औपशमिकश्च द्विधा—'सम्यक्त्वचारित्रे' इति। तत्र समिति सम्यक् यथावस्थिततयाऽञ्चति—अवगच्छति जीवाजीवादीन् सर्वेन्द्रियानिन्द्रियगम्यानर्थानिति क्विपि सम्यग्—यथावस्थितपदार्थप्रतिपत्तिमान् तस्य भाव सम्यक्त्व-चेतनाचेतनत्वादिलक्षणादिविशिष्टाना जीवाजीवादीना श्रद्धानमिति यावत्। तच्चैव भवति-अनादिकालीने ससारेऽनादित परिभ्रमन्नसुमानरघट्टघटीयन्त्रन्यायेन स्वोपात्तकर्मबन्धोदीरणोदयनिर्जरापेक्ष चतुर्गतिकेऽनाभोगनिर्वर्तितेन यथाप्रवृत्त्याख्यकरणेन परिणामविशेषेणोत्तुङ्गतरसानुमन्निस्सरत्सरित्स्रोतोऽनुसारश्रितगतिग्रावा विचित्राकृतिमिवावाप्नुयात् लघुकर्मताम्। न च वाच्यं कथ सेति। यतो भवति बन्धोऽध्यवसायापेक्षया निर्जराऽपि च। यदि चाङ्गी नारकवन्निर्जीर्येद्बहु, बध्नीयाच्चाल्प, कथ न स्याल्लघुकर्मताऽकामनिर्जरासाम्राज्यं च तत्रापि विद्यत एव। तथा च तीव्रदुःखोपनिपाते सत्यपि येन तथाविधानि नूत्नान्यादत्ते स स्यादेवैवंविध। न चैव स्वभाववादस्य नियतिवादस्य वा साम्राज्य तन्निरपेक्षमपि नेति चेत्क किमाह? नहि स्याद्वादमतानुगै किमप्येकान्तेनाभ्युपगम्यते किञ्चिदपि। तथात्वे सर्वमनिश्चितमिति चेद् अस्तु समग्रवस्तुन एकधर्माभिलापापेक्षया, अत एव च स्याच्छब्दप्रयोग सङ्गच्छतेऽखिलावनीनिवास्यनुभूत एवापेक्षिकवादो न निह्नोतु शक्यते

-ऽनात्मनिह्नुवानेन। कथं विरुद्धयोरेकत्र समावेश ? इति चेत् ह्रस्व-दीर्घत्वपितृपुत्रत्वगुरुशिष्यत्ववत्तरयानुभवसिद्धत्वम्। न चैव सशयसाक्राज्य विकृतान्तरीक्षणेक्षितकान्तसुन्दरशारीरिकमीमासाकार-लुप्तविवेकनयनप्रभारत्नप्रभाद्यापादित, स्वापेक्षया निश्चितत्वात् सर्वेषाम्। नन्वेवमे (मने) कान्तवादाभ्युपगमे प्रतिज्ञाहान्या निग्रह-स्थानानुसारित्वमिति चेत, आ पातकिन्! अनवधार्यैव वस्तु-तत्त्व वस्तुतत्त्ववधायाऽवधावसि, स्वत्वादिकमप्यापेक्षिकमेव। न हि सर्वथा स्वत्व परत्व वा नियतम, स्वेतरद्रव्यक्षेत्रकालभावापेक्षया स्वत्वान्यत्वात्। अन्यच्च—कथ व्यवहारेण प्रत्यगात्मना निश्चयेन परमात्मतामभ्युपगच्छन् कारणकार्ययोरनन्यत्व चाभ्युपगच्छँश्च स्ववचनायोद्गीर्णं प्रहरण न सम्पादयेत्। इत्यल पापाना कथया। एव चानाभोगेनापि निर्वर्त्तयन् कमलाघव जन्तुस्तावद्यथाप्रवृत्ति-करणेनाभ्येति यावद् घनरूढदृढ सुचिक्कणो रागद्वेषपरिणामरूपो ग्रन्थि ,तं प्राप्तश्च पल्योपमासङ्ख्येयभागन्यूनसागरकोटाकोटिहीना सर्वामपि क्षपयति सर्वेषा कर्मणामनायुष्काणाम्। ननु च कथ स्थितिक्षयो बद्धाना, सम्भवेद्यद्यपि बध्यमानानामिति चेत् "दीह-कालट्ठिइयाओ हस्सकालट्ठिइयाओ पकरेइ" इतिवचनात्। तथा च प्राग्बद्धानामपि स्थितिं ह्रसयन् कर्मणामेतावती शेषयति। दीर्घस्थितिकानि हि दृढबन्धनबद्धानि भवन्ति कर्माणि। न च तथाबद्धोऽवाप्नुयाद् गुणयोग्यतामिति युक्त एव स्थितिह्रासः। न च वाच्य यथायमनाभोगेनापीयान् स्थितिह्रासो भविष्यति तथा शेषोऽपीति पलायितं सम्यग्दर्शनादिना मोक्षसाध-नेनेति। पांशुबहुले पथि वायुनापहृते स्थूले रजसि किमेवमेव स्यान्नीरजस्त्व तस्य। एवमेवात्रापि। यथा वा सीमानमतिगन्तु शक्यते प्रत्यर्थिपार्थिवेनान्यस्यावनीपते., नैव तस्य पट्टनगरम्। यथा

वा विद्यासाधने पूर्वसेवा महत्येव, पर नैतावन्मात्रेण सिद्धिराप-
-नीपद्यतेऽन्तरेण जापमिति नानाश्वासो निःश्रेयसाध्वनि, विभाव-
यामश्च यथा हि तीव्रतरव्याधिव्याप्तकरणस्याऽनुलबलौषधोपभोग-
माहात्म्येन प्रतनुके आमये स्वयमाविर्भवति नीरोगता, भवति च
प्रसन्नमुखकमल आमयावी, आसेवते च द्विगुणितहर्षभरमेदुरो
यथाविधि प्राप्तप्रोल्लासागदकरणक्रियोऽगदमगदङ्कारोक्तम्, भवति
च सर्वथा रोगाणा नामशेषता। तथाऽत्रापि तावति ह्रासे स्वय-
मेवोत्पद्यते गुण प्रवृद्धश्च परिणामश्च पूर्वोक्तातुरवत्प्रवर्त्तते
विशेषत, एव च विना सम्यग्दर्शनावाप्ति क्रियाया निष्फलत्वमपि
कथञ्चिज्जागद्यमानमसाध्यव्याधिपूरपूरितमूर्तिग्लानस्यौषधव्रात-
मिवातिक्रान्ताशेषौषधिवल आरोग्यविधानरूपतात्त्विकफलाभावेनेव
परमपदप्रापणताविकलत्वेन तथाविधस्य न पक्षपातिता व्यञ्जये-
त्तत्प्रतिपादकाना, ग्रन्थि यावदेनमनन्तश आगच्छन्ति जीवा। न
चैतावन्मात्रेण कल्याणास्पदपदप्रापणयोग्यकारणसमापत्ति। अभव्या
अपि चागच्छन्त्यैवात्र, लभन्ते च द्रव्यत श्रुतसम्यक्त्वमपि। न च
वाच्य कथमेतावती भूमिमागतस्य ग्रन्थिर्नाविर्गिवेति। चरमभाग-
त्वेनानन्तानुवन्धिना विवक्षितोऽत्र, गुणप्रापणमप्येतस्मिन् भिन्ने,
भवति च पुरगोपुर इव बलवत्तरा मोहसुभटा अत्र। यदि वा
जातेऽवबोधे उदय यायान्मोह इति सोऽत्रैव विवक्षितो, यदि वा
प्राक्क्रमशोऽशाशेन क्षय स्थिते, अत्र तु समुदित इति क्षय्यसमुदा-
यापेक्षयाऽत्र ग्रन्थित्वमुद्घुष्यते। भवत्येव च समुदायस्याल्पशक्ति-
कस्यापि बलवत्तरता, दृश्यते च तृणसहत्या मदोन्मत्ता अपि
करिणो वध्यमाना इति अत्रैव ग्रन्थिर्विवक्षित। यदि वा समूल-
मूत्खननाय प्रवृत्तो मिथ्यात्वमूलमनन्तानुबन्धमिति तस्य ग्रन्थिरिव
भेद्यो विधेय इत्येव व्यपदिश्यते, वृक्षस्येव भवति दृढता मूलस्य,

अत एव चापूर्वकरणवज्रसूच्या भेदोऽस्य। एवं भिन्नग्रन्थिश्चो-पक्रमते मिथ्यात्वक्षयायानिवृत्तिकरणाख्येन परिणामेन। तत्र चौपशमिकं उदितानुदितमिथ्यात्वमोहक्षयोपशमाभ्यामवाप्नोति औपशमिकं सम्यक्त्वं मिथ्यात्वकृशानोरुदयस्योपशामनात्। तदाह—"ऊसरदेसं दड्ढिल्लयं च विज्झाइ वणदवो पप्प। इय मिच्छस्स-णुदए उवसमसम्मं लहइ जीवो ॥१॥" इति। शुद्धं परिणाम-श्चात्रोषरोर्व्यादिवत् प्रतिबद्धोदयाश्च मिथ्यात्वपुद्गला अन्त-र्मुहूर्त्तं यावदेवेति लभतेऽसौ प्रतिपातं प्रथममौपशमिकलाभश्च तत्रैव युगपन्मिथ्यात्वपुद्गलाक्रमणात् प्रत्यर्थिपार्थिवप्रथितपुर-रोधवत्। अन्यत्र तु सामर्थ्यविशेषस्य सद्भावात्क्षपयत्येव देशतः प्रदेशवेदनेन उपशमश्रेणौ च चारित्रमोहक्षपणव्यग्रतया नैतस्य क्षपणाय विधत्ते विक्रमं, न चान्यत्रास्ति ह्येतत, पञ्चकृत्व एवै-तत्प्राप्तिः समग्रेऽपि भवचक्रे उत्कृष्टतो जीवस्वाभाव्यादेव, प्रथमं तावदुक्तनीत्या चतुश्चोपशमश्रेण्यामिति तावतामेव भावात्। ननु च पुनरौपशमिकत्वावाप्तौ कथं द्वितीयमपूर्वकरणमिति चेत्। एक आहु पुनर्बन्धात्। एके तु तत्रापूर्वमिवेत्याहु। एवमेवौ-पशमिकचारित्रमपि, तच्चोपशमश्रेणावेव, सा चेत्थ—"अणदसन-पुंसित्थीवेयछक्कं च पुरिसवेयं च। दो दो एगतरिए सरिसे सरिसं उवसमेइ ॥१॥ लोभाणू वेइंतो जो खलु उवसामओ व खवगो वा। सो सुहुमसंपराओ अहखायाओ णओ किंचि ॥२॥ उवसामं उवणीया गुणमहय"त्ति। तथा चर्यते—मुमुक्षुभिरा-सेव्यत इति चारित्रम्। तच्चौपशमिकं प्रागुक्तोपशमश्रेण्यामेव, तत्र कषायनोकषायचरणमोहोपशमादिति प्रतिबन्धकसंसर्गाभावे च स्पष्टैव कार्यसिद्धिरिति चारित्रमपि स्यादेवोपशमोद्भवमिति। एते द्वे एव औपशमिके। ननु कथं च मतिज्ञानावरणादीनां

येषा क्षयोपशमोऽस्ति तेषा नौपशमिकत्व ? न च वाच्य "मोह-स्सुवसमो ख"ल्विति वचनान्मोहविलयप्राप्यव्यक्तिभावस्यैवौपश-मिक, मोहश्च दर्शनचारित्रमोहभेदेन द्विधेवेति द्वौ एवौपशमिकभे-दाविति तस्यैव विचारार्हत्वात् । न च न भवति तेषा निरोध क्षयोपशमभावस्य स्वीकारादिति चेत्, शृणु तावत् येषा येषामुपश-मस्ते ते प्रतिबन्धका सन्तोऽप्यकिञ्चित्करा । यत उच्यते औपश-मिकचरणमाश्रित्य–"जिणसरिस पि"त्ति । तद्यदि शेषा अपि तथा स्युरेवमेव स्यु । मतिज्ञानादीनि चक्षुर्दर्शनादीनि दानादीनि च केवलज्ञानकेवलदर्शन (नावरण) निखिलान्तरायावृतस्य जीव-स्यौपाधिकानीति न तेषामुपशम, केवलज्ञानादीना च तथात्वे स्यात्केवलादीनामपि प्रतिपातित्वम् । अस्त्विति चेत् "केवलि यनाणलभो नन्नत्थ खए कसायाण" इति प्रवचनविरोधात् । न च भवति कषायक्षयमन्तरा तन्मूलत्वात्केवलज्ञानावरणीयादीनां केवल उदयनिरोध. । सत्तावानपि मोहो न केवल प्रकटयितु ददाति । यद्वा–न तस्य काल उपशान्ते मोहे विश्रामादन्तर्मु-हूर्त्तमनन्तर च परिणामपरावृत्ते, न चोदीर्णकषाय उपशमितु क्षमो भवति केवलादीनि अनभ्यस्तयुद्धकल इव सयति, तन्न केवलादीनामुपशम इति ध्येयम् । एवमेव सयमासयमो ज्ञाना-न्यपि वाच्यानि, तान्यपि सम्यक्त्वानन्तर गते च मिथ्यात्वे भवन्ति क्रमश औपशमिकसम्यक्त्वस्य पातादन्तर्मुहूर्त्तात् अश-मितमिथ्यात्वस्य चोपशमकारणीभूतातिप्रशस्ताध्यवसायाभावात्, तत्सिद्ध केवलस्य मोहस्योपशम, सम्यक्त्वचारित्रद्वयमेव च तत्प्रा-प्यम् । पारमर्षमप्येवमेवावस्थितम् । यदाहुः–"से कि त उवसमे ? मोहणिज्जस्स कम्मस्स उवसमेण"त्ति । नन्वनेका उक्ता औपश-मिका. प्रवचने–उवसतकोहे उवसतमाणे उवसतमाए

उवसत्तलोभे" इत्यादिका । अत्रापि पूर्वं "अणदसनपु" इत्यादिना प्रतिपादित एवानेकानामुपगम इति कथ द्वे एवेति चेत्, सत्य, यद्यपि भावाना परिस्थूरतया दर्शिता इत्युक्तमेव प्राक्, तथापि तत्राप्यगुणद्वैविध्यादत्र द्वैधत्वमुपपाद्यमानं नासङ्गत । मोहस्य द्वैविध्यादेवावार्यस्यैकविधत्वे आवारकाणां बहुविधत्वेऽपि प्रादुर्भावमापन्नस्यैव तथात्वेनोत्पादस्याविवादास्पदत्वात् । मोहश्च दर्शनं चारित्र चेति युग्ममेवावृणोत्यनेकभेदोऽपीति युक्तमेव द्वैविध्य तदुपशमप्रभवम् । क्रोधाद्याश्च दर्शनचारित्रमोहभेदा एव, तृतीयस्य मूलभेदस्यैवाभावात् । ननु यथोपशमयितुमारभते मोह दर्शनचरणभेदेन द्विविधमपि, कालस्यातिह्रसीयस्त्वात्तत्करणे कालपूर्त्तेर्न करोति शेषकर्मणामुपशमस्तथा ज्ञानावरणीयादिक किमिति नोपशमयितुमारभते ?, कश्चिदारभेत च चेत्तर्हि वाच्यानि केवलादीन्यप्यौपशमिकानीति चेन्मा विस्मार्ष्टयदनिरुद्धकषायबलो न शेषकर्मणामुपशमाय प्रभवत्ति, तन्मूलत्वाज्ज्ञानावृत्यादीनाम्, अत एवोच्यते–"मस्तकसूचिविनाशात्तालस्य यथा ध्रुवो भवति नाशः । तद्वत्कर्मविनाशो मोहनीयक्षये नित्यम् ॥१॥" इति । यद्वा–मोहक्षयानन्तरमेव शेषादृष्टक्षयो यथा, तथैवोपशमोऽपि तदुपशमानन्तरीयकः । अत एव 'मोहक्षयाज्ज्ञानदर्शनावरणान्तरायक्षयाच्च केवल'मिति [तत्त्वा०] सूत्रित सङ्ग्रहकारैः क्षयमाश्रित्येति न शेषकर्मणामुपशमसम्भवः । एव च नोक्तभेदसङ्ख्याव्याघात इति प्रदेशविपाकोदयनिरोधेऽपि चैतस'यौपशमिकक्षायोपशमिक–क्षायिकाणा परतः परतो विशुद्धिप्रकर्ष' इतिवचनेन योऽस्य विशुद्ध्यपकर्ष क्षायोपशमिकापेक्षया प्रतिपादितो भाष्यकारैः । असौ चावस्थितपरिणामत्वादौपशमिकस्य प्रवर्धमानपरिणामत्वात्प्रदेशोदयेन कर्मनिर्जरणाच्च क्षायोपशमिकस्येति युज्यत

एव, अन्यथा प्रदेशोदयसम्भवात्क्षायोपशमिके स्यादस्यैव विशुद्धि-प्रकर्ष । यद्वा–उद्भूतवीर्यत्व क्षायोपशमिकस्याऽस्य तु स्थिति-वीर्यत्वमिति स्फुट एव क्षायोपशमिकस्य विशुद्धिप्रकर्ष पूर्वप्रति-पन्नापेक्षयैतत्। अन्यथा "वड्ढते परिणामे पडिवज्जेज्जा चउण्ह-मन्नयर" इतिवचनान्मन्तव्यमिति चेद्, अस्तु तथाविशुद्धपरिणाम-त्वात्प्रतिपद्यमानस्यौपशमिकत्वम्, पर नैष नियमो यद्वर्धमानप-रिणाम एवाप्नोति चतुर्णामन्यतम "एमेव वट्टियम्मि" इतिवचनात्। एतावानेवात्र नियमो–यद्धीयमानाध्यवसायो न लभत इति। तत उक्त–"हायति न किचि पडिवज्जे"त्ति। युक्त चैतदनिवृत्तिकर-णानन्तरमौपशमिकस्यावस्थितपरिणामत्वात्। अनिवृत्तिकरण तु न स्यादेवावस्थितपरिणामानाम्। न चाविधायानिवृत्तिकरणम-वाप्नोति सम्यक्त्व "तइय अनियट्टिकरण सम्मत्तपुरक्खडे जीवे" इतिवचनात्। त्रिपुञ्जीकरणरूपमन्तरकरण तु नैवासौ विधत्ते प्राप्स्यत्क्षायोपशमिकस्य तत्करणात्। अत एवोक्तमभियुक्तैरावश्य-कादौ "ऊसरदेसं दड्ढिल्लय च" इत्यादि। तथा "खइए"त्ति। क्षायिकाभिधानस्तृतीयो भाव, तत्र क्षयो–विवक्षितस्यात्मगुण-प्रतिबन्धकस्य बन्धोदयोदीरणासत्तापेक्षयाऽपुनर्भावेन विनाशो, न हि क्षीणे भवति पुनस्तद्बन्ध आकस्मिकत्वापत्ते, क्षयश्चानुभवेन, यथा 'विपाकोऽनुभाव । ततश्च निर्जरे'तिवचनात्तथैव तपसापि, "तपसा निर्जरा चे"ति वचनात्। न चास्ति नियमो यद्भोगादेव क्षय कर्मणा, विपाकोदयस्यावश्यमनुभवनीयत्वे गुणप्राप्तिप्रसङ्ग-स्यैवोच्छेदापत्ते, वेदनकाले विपाकस्यावश्य बन्धभावात्तस्य। न चोपपद्येत मोक्षावाप्तिरपि चैवमिति स्वीकार्य एव क्षयोऽनुभवेतरे-णापीत्यभिहितमेव प्राक् सप्रपञ्चम्। तेन क्षयेण निर्वृत्त क्षायिक – समूलघातं घातितकर्मावाप्तात्मस्वाभाविकगुण । स च नवधा

"ज्ञानदर्शनदानलाभभोगोपभोगवीर्याणि चे"ति [तत्त्वार्थ०] वचनात्। अत्र चकारेणौपशमिकभावविभावित सम्यक्त्वचारित्राख्य भावयुगलमनुकर्षणीयमिति। ज्ञान केवलज्ञानमेव, न त्वन्यानि, तस्यैव समस्तज्ञानावरणीयादृष्टापनयनोद्भवत्वात्। न हि केवलिनो भवति सूक्ष्मतममपि ज्ञानावरणीयम्, तत्सद्भावे केवलस्यैवानुत्पादात्। शेषाणि मत्यादीनि तु न हि भवन्ति ज्ञानावृतिसम्बन्धमन्तरा, हृषीकादिनिमित्तत्वात्तेषाम्। न चावाप्तस्वभावानामर्हत्यन्यसाहाय्येन कार्यकर्तृता। यद्वा-केवलावरण स्थितिमदेव तेषा मत्यादिवतामिति न तानि क्षायिकाणि। न च वाच्य तानि सन्त्येव केवलिना, केवलिनश्च ज्ञानावरणीयशून्या इति स्यात्तेपामपि क्षायिकतेति। कैश्चिदेव तदभ्युपगमात, अभ्युपगतेष्वपि च न तै' क्षायिकत्वेनाभिप्रेतानि,केवलावरणक्षयजातजन्मत्वाभावात्। ते हीत्यध्यवस्यन्ति यदुत—केवलोत्पादादर्वागभूवन् यानि मत्यादीनि, तानि नाऽऽवृतानि, केवलिनो ज्ञानावरणीयवन्धायोगात्। न च केवलेन नाशितानि, तस्य तैस्तथाविरोधाभावान्मत्यादिज्ञानान्यपि चाऽऽत्मस्वभावभूतान्येवेति तानि सन्त्येव, पर न तेषामुपयोगः केवलिनाम्। उपयोगे च स्पष्ट एवासर्वज्ञत्वव्यपदेश उपयोगापेक्षया स्यादिति। व्याख्यान्ति चैतत्पक्षानुसारिण —"नट्ठम्मि उ छाउमत्थिए नाणे" इत्येतत्सूत्रमुपयोगनाशापेक्षया नष्टे छाद्मस्थिके ज्ञाने समुदायोपचाराज्ज्ञानोपयोगे इति, न तु शक्तिरूपस्य च्छाद्मस्थिकस्य मत्यादेर्नाग इति। अन्ये तु व्याख्यान्ति यदुत—द्वारजालकगवाक्षादिकल्प मत्या'द, सर्वथा व्यतीते भित्तिकल्पे ज्ञानावरणे कथङ्कार सम्भवेदिति नास्त्येव च्छाद्मस्थिक ज्ञान, स्वरूपापेक्षयापि केवलिनामालोकितलोकालोकाना च प्रतिसमय कि न्यूनं भगवता सर्वज्ञाना सर्वदर्शिना ? यदवलोकयेयुर्मत्यादिनेति नास्य सम्भव इति द्वयोरपि

-पक्षयोर्न मत्यादीनि क्षायिकाणीति तु स्थिरपक्ष, सम्यक्त्वारोपणमन्तरापि तस्य प्राप्ते । किञ्च मत्यादीनि भवेयु क्षायिकाणि, न स्युस्तदा तानि तारतम्यभाञ्जि, न स्युरनेकभेदभिन्नानि च तानि, चत्वारिंशदधिकत्रिशत-चतुर्दश-षड्-द्विभेदत्वात्क्रमेण मत्यादीनाम् । क्षायिकत्वे तु न तारतम्य, न च भेदा केवलवदिति । किञ्च-अभ्यासादिना वृद्ध्यादिकमपि नैव युज्यते, क्षायिकस्योत्पादसमयत एवैकरूपत्वात् । न च यावन्ति कर्माणि मत्यादीनामावारकाणि तानि यदा क्षिणियुस्तदा किं न तेषा क्षायिकत्व ? केवलावरणक्षये क्षायिकतावदिति वाच्यम्, जलधरपटलावृतार्कप्रभेव केवलावृत्यावृतज्ञानस्यैव मतिज्ञानादित्वात् । मत्यादिप्रतिबन्धकक्षयमन्तरा च कथ न केवलावृतिविलय ? इति तु नैव नोद्यम्, ध्यानस्यानलस्येव तृणादिवन्मत्याद्यावरणमदग्ध्वा काष्ठकल्पकेवलाच्छादनस्य दहनासम्भवात् । "चउनाण–तिदसणावरणा" इतिवचनान्मत्यादीनि देशघातीनि "केवलजुअलावरण' त्तिवचनात्केवल च सर्वघातीति । तृणादिकल्पताकल्पनान्यस्य च सारदारसन्निभता न कथञ्चनाप्यनुचितेति । अन्यच्च–यावन्न क्षीण केवलाच्छादन तावत्तस्य ध्रुव उदयो मत्यावृत्यादीनामिति न तानि कदापि ज्ञानावृतिकर्मरहितस्यासुमतः सम्भवन्तीति स्पष्टैवाक्षायिकता, केवल तु क्षीण ज्ञानप्रतिबन्धकादृष्टे जायते । न च बध्नाति ज्ञानावरणमशतोऽपि तद्धानभावाच्च तस्योदयवानपि नेति स्पष्टैवास्य क्षायिकता । युक्तियुक्तं चैतत् "नाणंतरायदसणमिच्छ धुवउदय"त्ति वचनात् । अत एव च "चउदसणुच्चजसनाणविग्घदसगं"ति "सोलसुच्छेओ"त्ति दशमगुणस्थानचरमसमये पठ्यते । "चउ दंसणनाणविग्घतो" त्ति च क्षीणचरमसमये पठ्यते । तथा च नैव सम्भाविनी मत्यादीना क्षायिकतेति । एवमेव च केवलदर्शनमपि क्षायिकमेकमेव, न

चक्षुर्दर्शनादीनि । न च नोपात्त सूत्रे केवलयदमिति, अनुपादानेऽप्य-स्यैव क्षायिकता केवलयुगलस्येति तदेवोपादीयते । यद्वा—पूर्व हि क्षायिक प्रज्ञाप्य 'ज्ञानदर्शने'तिसामान्यशब्देन क्षायोपशमिके ज्ञान-दर्शनयोश्चतुस्त्रिभेदोपादानादत्र केवलस्यैव युगल गृह्यते इति न कापि विप्रतिपत्ति । क्षायिकत्वादेव चानन्तानुत्तरकृत्स्नप्रति-पूर्णत्वादिविशेपणान्वित केवलयुगलमिति द्वयमप्येतन्न क्षयमन्तरा कपायाणाम् । सत्सु हि तेषु प्रतिकलमाकलनीयः कलाविदा ज्ञानवृत्यादिवन्धस्तन्मूलत्वात । अत एवोच्यते—"केवलियनाणलभो नन्नत्थ खए कसायाण" इति । कषायाणा क्षयोऽपि च प्रवच-नोक्तक्रमेणैवेति प्रतिपादित—गुणस्थानक्रमारोहहतमोहमिति 'पर-परगयाण'मिति च । तथा च युक्तमेव "केवलनाण सनामे"त्ति "केवलदस सनामे त्ति च" जीवसमासवच । एतेनात्मस्वरूपभा-नमात्रेण केवलसत्तावादिनो निरस्ताः पापात्मान सारम्भपरिग्रहाः दृश्यमानभाषाज्ञानगन्धाभावेऽपि पूपूजयिषव । न हि लोकालोका-वभासकतां विहाय क्षायिकं केवलं । 'सर्वद्रव्यपर्यायेषु केवलस्ये'ति "त नत्थि ज न पासइ भूअ भव्व भविस्स च"त्ति सामग्री-विशेपसमुद्भूतसमस्तावरणविच्छेदाज्जात्त सर्वद्रव्यपर्यायसाक्षात्का-रस्वरूप केवलमितिवचनाच्च । न चात्मनो ज्ञस्वाभाव्यादावरण-क्षयाच्च समस्तवस्त्ववभासो न भवेत्, आवरणविच्छेदे अवश्य-मावार्यप्रादुर्भावात् । आवरणाभावश्च स्पष्ट एव न तेषा, ये रमणीरमणीयाङ्गरमणारामाणामस्त्राक्षमालादिपरिकरितकरणाः । मोहमहामल्लाभिहतात्मस्वभावत्वेन यथार्हगुणानवाप्तेरित्यलमभि-निविष्टैर्वार्ताप्रसङ्गेनापि । तथा दीयते—वितीर्यते सति स्वे याचके चेति दान—स्वस्वत्वत्यागपूर्वकमर्पणम् । लभ्यते—प्राप्यते याचनाया सति च स्वे परेभ्य इति लाभः—परकीयस्वत्वपरिहारेण प्राप्तिः,

परप्रेरित स्वस्वत्वत्यागेन स्वस्वत्व वा। भुज्यते–अभ्यवह्रियते-ऽपुनर्भावेन वस्तूना धान्यस्त्रक्सन्निभाना सुखसाधनतया प्रयोगः "सकृदेव भुज्यते य स भोगोऽन्नस्रगादिक" इतिवचनात्, मकृत्त्व च प्रकरणवललभ्य, पश्चादुपभोगो यत पठितोऽतस्तद्विपरीतं शेषमत्र ग्राह्य, तथा चोक्तमेवापतित। तथा उपेति पुन: पुन। न च वाच्य कथमुपशब्दोऽभिदर्धातैनमर्थ, यत "उपासन्नेऽधिके हीने" इत्यादौ नैपोऽर्थ इति। आधिक्येन समानत्वात्। यद्वा–निपातानामनेकार्थत्वाद्दिग्मात्रदर्शनमेव कोशादिना क्रियते, रूढ्या शक्तिर्नियम्यते कोशेन तावन्न तेन नान्या शक्तिर्नेत्यवसेयम्, यौगिकस्यापि भेदस्याभ्युपगमात्तन्न कोशादर्शनेनाप्रमाणता प्रस्तुते प्रकल्प्या कल्पनया आप्ताख्यातानुगते। भुज्यते–सुखसाधनतया प्रयुज्यते य स उपभोगोऽसकृदङ्गनादिसन्निभाना सुखसाधनतया प्रयोग "पुन पुनर्भोज्य उपभोगोऽङ्गनादिक" इतिवचनात्। तथा वीरण वीर्य 'शूरवीर विक्रान्ता'विति वचनात्,"ऋवर्णव्यञ्जनान्ताद्ध्यण्" [सि० ५।१।१७] इति यथेष्टरूपनिष्पत्ति। आत्मन शक्तिरिति, शारीरिकी तु तत्प्रभवैव, अन्यथाऽशरीरिणा न स्यादेव सा, नास्ति तेषा, वीर्यस्यानन्तचतुष्टये परिगणनात्, आत्मन स्वभाव एव च ज्ञानादिवद्वीर्यमिति भवत्येवेद तेपामिति। एतेन ज्ञानावरणवीर्यान्तरायक्षयोपशमसमुत्थ आत्मगुणविशेषो ज्ञानमित्यभियुक्तप्रोक्तं सङ्गच्छत एव, शक्तिमन्तरात्मन कस्यचिदप्यभावादिति। एतानि पञ्चापि दानादीनि जीवस्वभावभूतानि केवलमन्तरायाभिधानेनादृष्टेन विहतानि पञ्चभेदवता, क्षये चाभ्रपटलविलयनावाप्तनिरावरणताविस्तारितप्रभापटलप्रभापतिरिव जीवोऽपि प्रथितदानादिगुणप्रस्तारको भवेदेव। न च जीवाना कथ स्वाभाविक दानादीनि ?, यतोऽपरवस्तुदानादानादिसाध्यानि

तानि ससारिणा परापरवस्तुससर्गेणौपाधिकत्वात्सम्भवेऽप्येतेषा मुक्तात्मना तु तत्सम्भव एव कथमिति चेत्, सत्य, पौद्गलिक-वस्तुदानादानादीनि कार्यभूतान्येव व्याख्यायन्ते सौकर्याय, तत्त्व-तस्तु तदावरणक्षयोत्थ आत्मपरिणाम एव दानम्। एव लाभादी-न्यपीति न क्षति। न हि कार्याभावे कारणस्यासत्त्वम्, अन्यथा-ऽयोगोलके विद्यमानस्यापि धूमकारणस्य वह्नेर्घटकारणाया मृत्स्नायाश्चाप्यपलापापत्ते, नित्यस्य स्वरूपयोग्यस्येति नियम त्व-ननुमत एव, ईश्वरेऽपि सुखदु:खोत्पत्तिप्रसङ्ग, सचेतनत्वेनात्मत्वात्। अदृष्टाभावेन न स्वरूपयोग्यता तस्येति चेत्, न किं सात्रापि मुक्तात्मनामिति। आत्मगुणापेक्षया वा सन्त्येव दानादीनि सिद्धा-दीनामपीति। ननु दान तावन्ममत्वत्यागो लाभश्च स्वत्वापादन-रूपत्वान्ममत्व भोग क्षुदादिवेदनीयप्रतिकार उपभोगो वेदोदयादि-प्रभवेच्छाप्रतीकारो वीर्यं च सहननादिसम्पाद्यशरीरदार्ढ्यजात सामर्थ्यमेवेति न भिन्नान्येतानि क्रमेण रागत्यागरागवेदनीयमोहनी-यप्रतीकारनामकर्मरूपत्वादेषा। तथा च किमिति चेन्नैतानि गुणा. न वान्तरायकर्मणाऽऽवार्याणि तथा चान्यावार्याभावात्कर्मसङ्ख्या-व्याघातोऽन्तरायोच्छेदात्क्षायिकाश्च भावाश्चत्वार एव स्युरेवमिति चेत्, सत्य, तावदवधेयमवधारणावद्भिर्भवद्भिर्वस्तुतत्त्वम्, यद्दान न केवल ममत्वत्यागरूपम्, तथात्वे तस्याभावत्वापत्ते, किन्तु तथाविधात्मपरिणामजनितमेव। ममत्वविच्छेदस्तु दानहेतु। एव लाभोऽपि न ममत्व, किन्तु तत्सद्भावे भवेत्तथाविधानामन्यथा क्षीणघातिना न स्यादेव लाभ। एव भोगस्य कार्यं क्षुदादिप्रतीकार। उपभोगस्येच्छादिनिरो-धोऽपि। वीर्यं तु स्पष्टमेव शरीरादिसम्पाद्यमप्यात्मगुण एवेति, नैतानि न भिन्नानि, तथा सति चावश्यमभ्युपेय शेषमपि यथोक्त-

मिति। सम्यक्त्व चौपशमिकभावे प्ररूपितमेव। विशेषस्त्वेतावा-नेव, यदुत–जिनकालीनो नर क्षपकश्रेणियोग्य क्षपयति चानन्ता-नुवन्धिकषायसम्यग्मिथ्यात्वतदुभयरूपदर्शनमोहलक्षणा सप्त प्रकृती., क्षयश्च नि.सत्ताकीभाव', उपशमस्तूदयनिरोध., तथा चोप-शमलब्धसम्यक्त्वस्य स्यात्प्रतिपातोऽवश्यतया। अस्य तु न कदापि तत्सत्ताभावान्नूतनबन्धाभावाच्च, तथैव शेषाणामपि क्षायिकाणा-मप्रतिपातित्वमवगन्तव्यम्। चारित्र तु क्षायिक क्षपकश्रेणिक्रमेण, क्षपकश्रेणिश्चैव–"अणमिच्छमीससम्म अट्ठ नपुसित्थिवेयछक्क च। पुमवेअ च खवेइ कोहाइए अ सजलणे ॥१॥" इति। तथा च केवलज्ञानाद्या नव क्षायिका इति। ननु च "खयपरिणामि उदया अट्ठण्ह वि हुति कम्माण" इतिवचनात् शेषकर्मणामपि क्षायिको भाव स्वीकर्त्तव्य, तथा च शेषकर्मक्षयोद्भूता अपि भावा अवश्य वाच्या। न च शेषाणि न क्षियन्त्यदृष्टानि, तथा सति मोक्षत्वाभावप्रसङ्गात्। न चास्ति मोहमृतेऽन्यस्योपशम, क्षयोपशमोऽपि च न वेदनीयादीना चतुर्णामिति स्वीकर्तव्य एव क्षय एषाम्। तथा च तदुद्भवा भावा अपि वाच्या एव। तथा सति च न नवैवेति युक्तमिति चेत्, सत्य, शेषाणामप्यदृष्टाना-मस्ति क्षय, पर न तदुद्भवा गुणा सिद्धान्ते क्वचिदपि जेगीयन्ते ज्ञानावृत्यादिक्षये ज्ञानाद्युत्पत्तिवत्। आवार्यं च न तेषा किञ्चि-दस्ति,तथा सति ज्ञानावृत्यादिवद् व्यपदेशप्रसङ्गात्। सुखाद्यावारकत्वं वेदनीयादीना तत्स्वभावत्वादात्मन इति तु न तस्योपष्टम्भकत्वात्। अन्यच्च-यान्यात्मगुणघातीन्यदृष्टानि यानि घातीनीत्युच्यन्ते, तेषा क्षये तदावार्या गुणा. प्रादुर्भवन्ति। न चाघातिनामावार्यं किञ्चि-दिति न तेषा क्षये क्षायिकगुणोत्पत्ति। तथा च नवैव क्षायिका'। न चानर्थकस्तेषा क्षयस्तत्क्षय एव यथास्थितात्मस्वरूपोद्भवात्,

स्वरूपप्रतिबन्धकत्वे च न घातित्वमात्मगुणघातकानामेव तथात्वात्। तथा च भवोपग्राहीण्येवैतानि चत्वारि कथ्यन्ते। यद्वा—गुणस्थानापेक्षया भावविचारणाया प्रक्रान्तत्वाच्छेषाघातिकर्मक्षयश्च चरमगुणस्थानके प्रान्ते, तदुद्भवाश्च गुणा. सिद्धदशाया प्रादुर्भवन्त्यनन्तसुखाद्या, सिद्धदशा च गुणस्थानक्रमातिरोहातिक्रान्ता कार्यरूपेति न शेषक्षायिकभावसम्भवः। यदि च "दुविहा होति अजोगी सभवा अभवा निरुद्धजोगा य। इह सभवा अभवा उण सिद्धा जे सव्वभवमुक्का ॥१॥" इतिवचनेन सिद्धानामप्ययोगित्व स्वीक्रियते। अयोगिगुणस्थानीया ह्रस्वपञ्चाक्षरात्मिका स्थितिश्च सभवायोगिन आश्रित्येति सोपस्कार च व्याख्यायते, तदा स्यादेव शेषाणा क्षायिकभावत्वम्, परमत्र तद्गुणाधिकारत्वेन नवैवोदिता इत्यवधेयम्। सिद्धत्वप्रादुर्भावश्च समस्तादृष्टक्षयात्, न त्वेकतमक्षयात्। इति नासावपि सिद्धत्वाख्यः परिपठित क्षायिके। यद्वा-भवन्तूपलक्षणेनान्यान्यपि। यदुक्तमनुयोगद्वारेषु—"से कि त खयनिप्फन्ने २ अणेगविहे पन्नत्ते—उप्पन्ननाणदंसणधरे अरहा जिणे केवली खीणाभिणिबोहियनाणावरणिज्जे, एव० सुयओहिमणपज्जवकेवलनाणावरणे अनावरणे निरावरणे खीणावरणे नाणावरणिज्जकम्मविप्पमुक्के केवलदसी सव्वदसी खीणनिद्दे खीणनिद्दानिद्दे खीणपयले खीणपयलापयले खीणथीणगिद्धी खीणचक्खुदसणावरणे एव० अचक्खुओहिकेवलदंसणावरणे अनावरणे निरावरणे खीणावरणे दरिसणावरणिज्जकम्मविप्पमुक्के खीणसायावेयणिज्जे खीणासायावेअणिज्जे अवेयणे निव्वेयणे खीणवेयणे सुभासुभवेयणिज्जकम्म विप्पमुक्के खीणकोहे जाव खीणलोभे खीणपेज्जे खीणदोसे खीणदंसणमोहणिज्जे खीणचरित्तमोहणिज्जे अमोहे निम्मोहे खीणमोहे मोहणिज्जकम्मविप्पमुक्के खीणनिरयाउए,एवं० तिरियमणुयदेवाउए

अणाउए निराउए खीणाउए आउयकम्मविप्पमुक्के गतिजातिसरीरगोवंगबंधणसंघायणसंघयणसंठाणअणेगबोंदिविंदसंघायविप्पमुक्के खीणसुभनामे खीणअसुभनामे अनामे३ सुभासुभनामकम्मविप्पमुक्के खीणउच्चागोए खीणनीयागोए अगोए३ सुभासुभगोयविप्पमुक्के खीणदाणंतराए एवं० लाभभोगउवभोगवीरियंतराए अणंतराए निरंतराए खीणंतराए अंतरायकम्मविप्पमुक्के सिद्धे बुद्धे मुत्ते परिनिव्वुडे अंतगडे सव्वदुक्खप्पहीणे से तं खयनिप्फण्णे" इति सूत्रानुरोधादेवम्। तत्त्वतस्तु न तत्रापि शेषकर्मक्षयोद्भूता गुणा दर्शिता इति नवैव क्षायिका। ननु च मत्याद्यावरणानां क्षयो भवति न वा? भवति चेत्, तत्समुद्भूता कथं न क्षायिका भावास्तेषां त्वस्त्येव घातिकर्मत्वमिति चेत्, सत्यं, व्रजन्ति क्षयं, अन्यथा निरावरणत्वानुपपत्तेः; परं न तदुद्भवा भिन्ना गुणा केवलादिभ्यो, येन व्यपदिश्येरँस्ते पृथगिति। केवलाद्यावृत्यपनायकाध्यवसायेनैव तेषां नाशात्समूलम्, उत्पद्यते चानन्तरं केवलमेवेति न भिन्नानि मत्यादीनि प्रतिपादितानि। चकारश्च क्षायिकाणामवान्तरभेदज्ञापनाय। ये औपाधिका भवस्थकेवलत्वादय उच्यन्ते तेऽत्रैव, न भिन्ना इति। यद्वा—आत्मस्वरूपतैषां ज्ञापयति। तथा च नेतरोत्पातुकभाववदस्य सान्तत्वं, कर्मवियोगजन्यत्वात्। वियोगश्चानन्तोऽपि भवत्येव, अन्यथा ध्वंसस्यानित्यत्वापत्तेर्नैव च स्वरूपस्योद्भवः, किन्तु प्रादुर्भाव एव। तथा च नोत्पत्तिमत्त्वादपि सान्ततापसङ्गः। तथेति वक्ष्यमाणक्षयोपशमस्य क्षायिकवत् सद्भाववताज्ञापनाय, तेन निरस्तास्ते, ये कल्पनां कल्पयन्ति स्वमनीषया यदुत—प्रतिपादनीयाश्चत्वार एवौदयिकौपशमिकक्षायिकपारिणामिकाख्या भावाः, क्षायोपशमिकस्तु सान्निपातिकतया न पृथक्, तस्य क्षयोपशमलक्षणद्विकसंयोगरूपत्वादिति। तेषां निरासश्च

क्षयोपशमस्य विलक्षणगुणोत्पादकत्वात्, साद्यनन्तत्वनियमाभावात्, प्रदेशोदयवत्त्वेन क्षायिकौपशमिकोभयवैलक्षण्यात्, औपशमिकादनन्तर क्षायिकात् पूर्वं भावात्, मत्यादिस्वतन्त्रगुणप्रभवत्वाच्चोह्नीय. सुधीभि । सान्निपातिका हि सयोगरूपेण वाच्या एव, न तु ततो विलक्षणगुणस्य प्रादुर्भाव, केवल के सयोगा कुत्र सभवन्तीति विचारणायैव तदुपयोगः। अत एव च सङ्ग्रहकारैर्भावजीवाधिकारपठितभावेषु नासावुपान्यासि । क्षायोपशमिकस्य च चेत्स्वीक्रियेत सान्निपातिकता, छाद्मस्थिकज्ञानदर्शनाज्ञानलब्धिसयमासयमाना व्यवच्छेद आकस्मिकता वा, जात्यन्तरत्वे च द्विसयोगात् स्पष्टैव न सान्निपातिकता । 'खओवसमिए"त्ति । क्षायोपशमिक — क्षय उदितस्य, उपशमोऽनुदितस्य क्षयोपशमाभ्या निर्वृत. क्षायोपशमिक । भिन्नश्चायमौपश मकात्, प्रदेशोदयवत्त्वेन प्रतिपातनियमाभावात्, क्षायिकतावाप्ते क्रमेण, सर्वेषामपि घातिना विषयत्वात्, स तु "मोहस्सुवसमो खलु"त्ति वचनात् पूर्वोक्तयुक्तेश्च मोहस्यैव केवलस्य। न च वाच्यमुपशमश्रुतिसाम्ये किंकृतोऽय भेद, क्षयस्तु तत्रापि सिद्ध एवार्थबलादिति । तत्र द्विधोपशमः । अत्र तु विपाकोदयस्येत्युक्तप्रायमेव । श्रुतिसाम्य द्विविधस्यापि उपशमशब्दवाच्यत्वाविरोधात् । न च वाच्यमौपशमिकस्यैव द्विभेदत्व कथ्यता, सर्वोपशमदेशोपशमजत्वेनेति । तथोक्ते. सौकर्येऽपि भावार्थानभिगमात् । औपशमिकादुपशमप्रधानात् क्षायोपशमिकस्य तु प्रदेशोदयवेदनेन क्षयोन्मुखत्वाद्भिन्नत्व क्षयमिश्रत्व चास्य सङ्गमनीयं तथैव । अन्यथोदीर्णस्य क्षयस्तु तत्रापि, पर विशेषोऽयमेवात्र यत्-क्षायोपशमिकावस्थायामपि नूतननूतनवेदनेन क्षपयतीतिध्वननाय उभयताऽऽम्नातेति । 'विपाकोऽनुभव ततश्च निर्जरे'ति नियमेनोदितस्य च नामशेषता स्यादेवोभयत्रापि तन्नोद्य न, नार्थोऽत्र क्षय-

शब्देनेति । सङ्क्रमादिव्यवच्छेदाय वोभयत्र क्षयो व्याख्यायते, तत एव च क्षयोपशमनिष्पन्नता मत्यादे सङ्गता भवति। न ह्यन्यथोदितपूर्व तदावरण तदवस्थाया व्याघातक भवति, येन तन्निष्पाद्यता तेषा सङ्गता भवेदिति नौपशमिके क्षययोजना। अत्र तु पठितः क्षय शब्द., तदुपपत्तये च विपाकोदयस्यैवैकस्य निरोधोऽभ्युपगतो नोभयो, तथात्वे च क्षयाभावात्, क्षयोन्मुखत्वादेव च केवलादौपशमिकादस्यैकधोदयनिरोधिनोऽपि विशुद्धिप्रकर्ष आम्नायते भाष्यकारादिभि । क्षायिके तु बन्धादिक्षयान्न क्षयशब्दयोजना सङ्गतेति ध्येयम्। ध्वनित च पूज्यपादैरपि सम्यक्त्वत्रयलक्षणमेवम्—खीणम्मि उइण्णम्मि अणुइज्जते असेसमिच्छत्ते। अतोमुहुत्तकालं उवसमसम्म लहइ जीवो ॥१॥ खीणे दसणमोहे तिविहम्मि वि भवनियाणभूयम्मि। निप्पच्चवायमउल सम्मत्त खाइय होइ ॥२॥ मिच्छत्त जमुईण्ण त खीण अणुइय च उवसत। मीसीभावपरिणय वेइज्जतं खओवसम ॥३॥" इति। अत्र शेषमिथ्यात्वेऽनुदीर्यमाणे इति, निष्प्रत्यवायमिति, मिश्रीभावपरिणतमित्यत्र प्रागतत्त्वे च्विविधानमिति च चिन्तनीयानि मतिमता, येनोक्तपूर्व भावि स्फुटमिति। अष्टादशधा चाय परिपठ्यते प्रवचनानूचानै। तदाहु—"ज्ञानाज्ञानदर्शनदानादिलब्धयश्चतुस्त्रित्रिपञ्चभेदा सम्यक्त्वचारित्रसयमासयमाश्चे"ति [तत्त्वार्थ०]। तत्र ज्ञायते—सामान्योपसर्जनेन विशेषमुख्यतया गृह्यते वस्त्वनेनेति ज्ञान-साकारोपयोगवाच्य स्वपराभास्यसाधारण आत्मगुण इति यावत्। तच्च यद्यपि मतिश्रुतादिभेदेन पञ्चधास्ति, तथापि पूर्वं क्षायिकभावव्याख्याने केवलस्योक्तत्वाच्छेषाणि चत्वार्येव क्षायोपशमिकानि मतिश्रुतावधिमन पर्यायाख्यानीति प्रतिपत्तव्यम्। न च वाच्य शेषाणा स्मृतिप्रत्यभिज्ञातर्कानुमानोपमानार्थापत्त्यभावसम्भवैतिह्यप्रातिभा-

पेक्षिकादिज्ञानानामनेकेषा सद्भावात्कथ पञ्चैव ज्ञानानीति, कथ च क्षायोपशमिकत्व चतुर्णामेवेति। यत इन्द्रियानिन्द्रियोद्भव: समग्रोऽपि बोधो मतिरेव, केवल विहाय श्रुतम्। यद्वा–अवग्रहादिक्रमोत्पन्नो बोधो मति। तथा च विहायैतिह्यप्रातिभज्ञाने शेषाणि सर्वाण्येवविधानीति न मतित्व व्यभिचरन्ति। तथाहि–स्मृतिस्तावत् पूर्वमवगृहीत ईहितोऽपेतो धृतश्च योऽर्थ तस्यैकसम्बन्धिज्ञानादिभिरुद्भवन्ती कथमिव मतिज्ञानता व्यभिचरेत्?। पठ्यते च स्पष्टमेव स्मृतेर्मतित्वमभियुक्तै। इत्थ निश्चितस्यैवाविच्युतिवासनास्मृतिरूप धरण धारणेति अवग्रहादिक्रमेण पूर्वमवधृतस्यैव तदित्युल्लेखेन स्मृतित्वात्। उदाह्रियते च तत्तीर्थकरबिम्बमिति। ननु मतिजन्या स्मृति स्यान्न तु मतिरेव, यतोऽवग्रहादि पूर्वमेव जात नाधुनेति चेन्न, मतिजन्यस्यापि मतित्वात् श्रुतजन्यस्मरणस्य श्रुतत्वमेव। यद्वा–अस्तु तस्यापि मतित्व "अक्खरलभेण समा ऊणहिया हुति मइविसेसेहिं। ते उण मइविसेसा सुयनाणब्भतरे जाण ॥१॥" इति परममुनिवचनप्रामाण्यात्, श्रुतोपग्राहकत्वेन तस्य श्रुतत्वाभिधानोपपत्ते, श्रुतस्य च स्पष्टमेव धारणाख्यमतिज्ञानजन्यत्वमाम्नायते। स्मरण च धारणैवेति तु निर्णीतमेव। न च स्मरणस्याऽपूर्वार्थावगाहकत्वाभावादप्रामाण्य धारावाहिकज्ञानवत् निर्विषयत्वाद्वा मरुमरीचिकाज्ञानवद्वेति वाच्यम्। तत्तेदत्वयो. स्पष्टमेव भेदात्। अपूर्वार्थकग्राहकताया धारावाहिकज्ञानमपि न सर्वथा नापूर्व, न चाप्रमाण, प्रमेयत्वाभावापत्ते., निर्विपयताऽपि नास्य, अननुभूतस्यापि स्मरणप्रसङ्गात्। अन्यच्च–स्मृतिप्रामाण्याभावे कथमिवानुमानस्यापि प्रामाण्यं जेगीयमान जाघटचात्, व्याप्तिस्मृतिमूलत्वात्तस्य। हेतो साध्याविनाभावित्व हि यत्पूर्वं निश्चित तद्दृष्ट्वा लिङ्ग स्मर्यते, स्मृते च तस्मिन् पक्षे साधनदर्शनात्

साध्यसत्ता निश्चियते, अजातायां च स्मृतौ न कथंङ्कारमपि दृष्टसाधनस्यापि निश्चितसाध्यसाधना, व्यभिचारित्वस्यापि सम्पद्यतेऽनुमाप्रथेति, तस्या अप्रामाण्ये च विपर्ययज्ञानादिव कथं तस्या जातमनुमानं प्रामाण्यभावमास्कन्देत् ? । आस्तामन्यत्, स्मृतेरप्रामाण्ये नैव व्याप्तिरपि निश्चिता । यतो नहि दृष्टमात्र-वस्त्वालोचनेन व्याप्तिनिश्चितिः, किन्त्वनन्यथाभावित्वग्रहादिना । तथा च विना स्मृतिमप्रामाण्ये वा तस्याः, कथङ्कारं सा ? । तत्त्वतस्तु तस्या अप्रामाण्ये प्रत्यक्षस्यापि नैव प्रामाण्यनिश्चयः, यथावस्तुत्वस्य तयैव निश्चयात्, तन्न स्मृतेरप्रामाण्यमाश्रयणीय-मात्मप्रामाण्यविघातकरमिति । प्रत्यभिज्ञानस्याप्रामाण्ये तु नैव प्रथयितु पराक्रमतेऽनुमानप्रथा । यतो दृश्यमानसाधनस्य दृष्टपूर्व-साधनसमानता यावन्न निश्चिता, तावदुद्धूतधूलिधूसरनभोभाग-दर्शनादिव न व्याप्तिस्मृतिः, भ्रान्त्या स्मृतौ वा न प्रामाण्यम् । न चैकत्र लूनपुनर्जातनखादावप्रामाण्यावलोकनेन सर्वत्रानाश्वास आत्मन्याश्वासवतामर्हं कर्तुं, अन्यथा प्रत्यक्षाणामपि द्विचन्द्रादी-नामनृताना दर्शनात् सर्वेषामपि तथात्वापातो दुर्निवारः समापतन् केन निरोध्य ?। इन्द्रियदोषोद्भवानि तानि चेदनृतानि प्रत्यक्षाणि, तर्हि प्रत्यभिज्ञापीय पूर्वापरविचाराभावादिति निश्चीयताम्, का हानि ? । पूर्वापरक्षणविशिष्टता भिन्नेति चेत् किमाह ? न तावता विशेष्यनाशो वैशिष्ट्यनाशमात्रेण, तथा च सर्वथा भिन्नता द्रव्यस्य न,अन्यथा ध्वस्तं ध्वस्तमिति प्रतीत्यापत्तेः,स्मरणाद्यभावस्य प्रत्यक्षस्यापि चाविसंवादित्वनिश्चयाभावेन प्रामाण्यानवगमप्रसङ्ग-श्चैव सति दुर्निवारः । इदं मदीयमित्यादिव्यवहारोच्छेदप्रसङ्गाच्च स्पष्टैव वनेचरता स्ववाक्यसिद्धा दिगम्बरता चापद्येत । ननु सोऽयं वह्निसाधनं स एवायं जिनदत्त इत्यादिविधं हि प्रत्यभि-

ज्ञानमुच्यते। व्याहृत चेदं प्रत्यक्षमेव, यतो महानसीयो वह्निसाधनो धूमोऽन्य, अन्यश्च पार्वतीय इति कथ तयोरैक्यं ?। तथा सति च कथ सोऽय वह्निसाधन इति ज्ञानमवाप्नुयात् प्रामाण्यभूमि ?। पूर्वं हि ये जिन-दत्तशरीरेऽवयवास्ते नाधुनेति कथ तत्रापि स एवाय जिनदत्त इति स्यात्प्रामाणिक सलाप· ?। तथा च निर्णीतप्रामाण्यस्य लक्ष्यस्य वाधे लक्षणमेव दूपित स्यादित्ति। स्पष्टा अप्रामाणिकी प्रत्यभिज्ञेति चेत्, न, आद्याया तज्जातीय एवायमित्यादिवदालोचनेन दृप्टपूर्वसजातीयताया प्रान्त्ये च तदभिधानाभिधेयताया तात्पर्यात् कथञ्चिदभेदाभेदवादे च न कथञ्चनाप्यसङ्गतमेव, कथमन्यथोपलक्षणाह्वानादिक व्यवह्रियमाण युक्तियुक्त स्यात् ?। न च वाच्य वार्त्तमानिकानुभवातीतानुभवस्मरणसङ्कलनारूपस्यैतस्य प्रत्यभिज्ञानस्य कथमिव भिन्नत्वम् ?। तथात्वे च द्वीन्द्रियादिग्राह्य-विषयज्ञानाना स्मृतितर्कैक्यादीना च भेदेन भेदेयत्ता विशारुता-प्रसङ्गादिति चेत्, सत्य, परं भिन्नोऽनुभवो भिन्नमनुभूतस्मरण च यत्र युगपदुदपादिपाता यद्यपि, तथापि न तत्र प्रत्यभिज्ञान-स्योद्भव, किन्तु ज्ञानद्वयस्य भिन्नस्यैवेति पृथक्ता प्रत्यभिज्ञानस्य। अत एव चालोको वह्निव्याप्यो धूमवाँश्च पर्वत इति सतोरपि स्मरणानुभवयोर्नानुमाप्रथा प्रथते। न च द्वीन्द्रियादिपरिच्छेद्यमेव, प्रत्येक स्वविषयनिश्चयविधानप्रत्यलत्वात् हृषीकाणा। परिमाणा-दिनिश्चयोऽपि यथास्वमेवेति न द्वीन्द्रियादिविपयग्राहकाधिक्यम्, स्मृतितर्कादीना च नैकत्रीभूय विषयवेदन विशिष्टं समस्ति, येन पृथग्ज्ञानाङ्गीकारप्रसङ्गेन भेदेयत्ता विशीर्येत। केचित्तूपलक्षण-मिदमित्याहु। तथा चान्यज्ञानसयोगेऽपि नैव क्षति·। नन्वेव साजात्येन प्रत्यभिज्ञानस्य सिद्धौ वैजात्येनान्यदपि कि न सिध्येदिति

चेन्न, तस्याप्यनुभवस्मरणैकसङ्कलनारूपत्वात् । दृष्टे महिषे स्मृते च सादृश्यादिना गोपिण्डे वैचित्र्यावगमे च स्पष्टमेव विजातीयोऽयं गोपिण्डादिति भवेदिति ज्ञानम् । न च वैचित्र्यावगमश्च कथमिति वाच्यम्, पिण्डद्वयधर्मालोचनाया तस्य स्वतो भानात् । न रूप रसतो विजातीयमित्यत्रोपयुज्येत प्रमाणान्तरेणाभावस्य साजात्याभावबोधनाभ्युपगमेऽपि वैजात्यसत्ताबोधनं तु मनसैव विकल्पनीयम् । न च साजात्याभाव एव वैजात्यमिति तत्तदभावेन बोधनीयतामापद्येत, तस्य निषेधमुखेनैव बोधनात् । तथा च स एवायं जिनदत्त, तज्जातीय एवायं गोपिण्डो, गोसदृशो गवयो, गोविजातीयो महिष इत्यादीनि सर्वाण्यपि प्रत्यभिज्ञानान्येव । एतदपि मतिज्ञानमेव, पूर्वानुभूतस्येदानीमनुभूयमानस्य च सङ्कलनारूपत्वेन श्रुतभिन्नतयेन्द्रियानिन्द्रियोद्भवत्वेन चेति । तर्कोऽपि न व्यभिचरति मतिज्ञानताम् । यतस्त्रिकालीकलितसाध्यसाधनाद्यालम्वनज्ञानरूपो हि स । तच्च क्वचिद् वह्निधूमादौ ज्ञानपञ्चकेनानुपलम्भद्वय–साध्योपलम्भसाधनोपलम्भ–साध्यानुपलम्भ–साधनानुपलम्भात्मकेन । न चैतत्सर्वमवग्रहाद्यन्तरा हृषीकाऽनिन्द्रियसाधनमन्तरा च । न च वाच्य तर्कस्यामानतैव युक्ता, विकल्परूपत्वात्तस्य । मेयाधीना हि मानप्रामाण्यसिद्धि । न चास्ति मेयमस्येति । सर्वथाऽसता शशशृङ्गाकाशकुसुमवन्ध्यास्तनन्धयादीना विकल्पाविषयत्वेन सर्वथा विकल्पस्याप्रमाणत्वाभावात् । अन्यच्च–असति तर्कस्य प्रामाण्ये कथङ्कार व्यवस्थाप्येत व्यवस्थाप्रियैरपि प्रत्यक्षस्यापि प्रामाण्य, प्रमेयाव्यभिचारित्वज्ञानरूप हि तत् । न च विना तर्केण यथावन्निश्चीयते च तत् । न च दृष्टेऽपि प्रत्यक्षेण विषये तर्कशून्यो ज्ञातुमलम्, इष्टानिष्टोभयानुभयादिमत्तादिप्रत्यक्षवत्तस्याकिञ्चित्करत्वापत्ते ।

कथ च विना तर्केण व्याप्तिग्रहोऽपि देवानाप्रियाणाम्। यतो न हि सहचारदर्शनमात्र व्याप्तिनिश्चायकम्, वज्रस्यापि पार्थिवत्वेन लोहलेख्यत्वानुमानापातात्। किन्त्वविनाभावनिश्चयेनैव व्याप्तिनिश्चयः। न चासौ विना तर्कमित्यवश्यमभ्युपेया प्रामाणिकता तर्कस्य। अप्रामाण्ये च तस्य सुतरा व्याप्तेरप्रामाण्यापत्त्याऽनुमानमानप्रामाण्यव्यवच्छेद.। सोऽय तर्कोऽप्यूहापरनामधेयो नातिरिच्यते मतिज्ञानाद् एतस्य मनोज्ञानरूपत्वादेव। न च वाच्यं विचाररूपोऽय न तु ज्ञानरूप इति। तथा सति ज्ञानमात्रस्यैव प्रत्यक्षादेस्तथात्वापातात्। यथा हि स्मृ-या जानामीति स्मरामीति स्मारयामीति चानुभव. स्मृते. सिद्धिश्च, तथैव तर्केण वेद्मीति तर्कयामीति प्रत्यवतारितस्तर्केण तर्के वेति सुप्रसिद्धस्वस्वानुभवात् स्पष्टैवाभ्युपेया तर्कस्यापि स्मृतेरिव ज्ञानरूपता प्रमाणरूपता चेति। तदेवविधस्तर्कोऽपि नातिगेते मतिज्ञानस्वरूपम्, हृषीकमनोनिमित्तत्वात्, तत्स्वरूपस्य च मतिज्ञानत्वात्। यत आहु सङ्ग्रहकारिपादा—"तदिन्द्रियानिन्द्रियनिमित्त"मिति। तथा साध्याविनाभुवो हेतोः साध्यनिश्चयरूपमनुमानमपि मतिरूपमेव प्रतिपादिताया एव युक्ते, न चानुमानमप्रमाणम्, तथावचनस्यैव अनुमानाप्रामाण्येऽप्रामाणिकत्वेन अनुमानप्रामाण्यध्रौव्यात्। तत्प्रसञ्जनमपि परेषा नाप्रमाणेन, पर्यनुयोजनमपि नाप्रामाणिकेनाऽसता वा गगनकुसुमकल्पेन। अन्यच्च—न स्याद्वचनीय वाक्यमपि, प्रामाण्य चेन्नाभ्युपगम्यतेऽनुमानस्य, पराभिसन्धि सावधानता शुश्रूषा वाऽनभिसन्धाय तत्प्रयोगस्य मदोन्मत्तवचनत्वापत्ते। कार्यैव च न जीवजीवनप्रगुणजीवनपानादिका क्रियापि विनाऽनुमानप्रामाण्यवादम्। न च ससशया तत्र प्रवृत्तिरनुभूयते, येन सशयात् स्यात्प्रवृत्ति., न च सशयोऽप्यभावे प्रामाण्यस्य घटाकोटिमाटीकते, स्मृतिरपि च नाप्रतिबन्धशून्ये

युज्यत इति व्यभिचरतीति प्रत्याख्यायते चेत्क· किमाह, न हि यावदनुमानस्य प्रामाण्यमाम्नायते आम्नायवेदिभि·, किन्तु यदेव सद्धेतुप्रभव नि शेपदोषापोहित तदेव। व्यभिचारित्वज्ञान प्रतिवन्धकं चेत्, प्रत्यक्षस्यापि किं न तथात्वं? व्यक्तिविशेपस्यैव तथात्वानुसन्धानादिति चेद्,अत्रापि न यावदनुमानस्य व्यभिचारित्व प्रतिसन्धत्तं, व्यक्तेस्तत्प्रतिसन्धाने तस्या एव प्रत्यक्षव्यक्तिवद-प्रामाण्य भवन्न केनापि निवार्यते। न लौकिक नाभ्युपगम्यतेऽनुमान, किन्त्वतीन्द्रियात्मादृष्टादिसाधकमिति चेत्, तदपि चेत् सद्धेतुप्रभव-मभ्युपेयमेवाविसवादिपदार्थाभ्युपगमतत्परैः। असद्धेतुप्रभव तु लौकि-कमपि नैवाभ्युपेय विचक्षणैरिति। को लौकिक-लोकोत्तरयोर्भेदोऽभि-प्रेतो वुद्धिमद्भिरतीन्द्रियसाध्यके प्रतिवन्धाप्रतिपत्तेरिति चेत्, न सा चेत्, क. कथयेत् प्रमाणभावतामस्य, पर गत्यादिनाऽतीन्द्रियस्यापि मनसो लक्षणाद्। यदि प्रतिवन्धप्रतिपत्तिस्तत्राऽवितथा तदा काऽवि-तथताऽस्य, येनाभ्युपगम्य नास्य प्रामाण्य?। अतीन्द्रिय मन इति तद्विपयकस्यास्य प्रामाण्यानभ्युपगमे नैव रात्रौ पिधेय गृहद्वारमपहर-णवुद्धे प्रत्यक्षाभावाच्चौरस्याप्रत्यक्षत्वात्, विहिते हि चौर्ये प्रत्यक्ष-भावात् वार्त्तमानिकत्वात् प्रत्यक्षस्य, कल्पनापि विनाऽनुमान न प्रभवत्युद्भवितुम्। न च वस्तूना स्वत्व वाच्य, विशिष्टचिह्नादिना स्वत्वस्यानुमेयत्वादेव। किञ्च–विनाऽनुमानप्रामाण्य कथ स्वप्रसू-सद्भाव वेत्सि स्वप्रसव वा?, अवेदने चानयो स्पष्टैव कान्दिशि-कता। तथा च न स्मृतिप्रत्यभिज्ञानतर्कानुमानानि मतिज्ञानम-तिशेरते इति तत्त्वम्। ऊचुश्चानूचाना अपि–"मतिः स्मृति सज्ञा चिन्ताऽभिनिवोध इत्यनर्थान्तर"मिति। ननु मा भवन्तु स्मृत्यादीनि पूर्वोक्तयुक्तेर्मत्यतिशायीनि, परमुपमानादीनि तथा भवन्ति न निवारयितुं शक्यानि शक्रेणापीति चेत, मा हि त्वरिष्वम्। यतो

विचिन्त्य—यथोपमानं तावन्न भिन्न प्रत्यभिज्ञानात्, सादृश्यज्ञान-मात्रतया भिन्नत्वे तु वैसादृश्यस्यापि हेतु वाच्यं स्यादन्यदपि, तद-भावज्ञानाच्चेत्तत् तदा वैसादृश्याभावादेवेद न तत्र किं निबन्धन ? प्रवृत्तिनिबन्धनमिद चेद्, अपर कि न निवृत्तिनिबन्धन प्रवृत्तिनि-बन्धन चापि । सादृश्यदर्शनोत्थज्ञानत्वमप्यस्य प्रत्यभिज्ञानत्वमेवा-वगाहते धर्मप्रत्यभिज्ञानेन धर्मिप्रत्यभिज्ञानात्, तन्नातिरिक्त पूर्वो-क्तादुपमान, [न] तेन तदन्तर्भावविचारोऽपि युक्तियुक्त । एव-मर्थापत्तिरपि न भिन्नाऽनुमानात् तर्काद्वा । तथा च तत्र क्वचित्-पक्षादिविकल्पाभावेऽपि न क्षति.। न च विचारशून्यानामभ्युपगम्यते सा, विचारवतां च तर्कबलादुद्भवन्ती सा न तर्कादतिशायिनीति । तर्कश्चाननुभूतेऽपि वस्तुनि वस्तुधर्मपर्यालोचनयोद्भवत्येव । न च सर्वथाऽसति प्रवर्त्ततेऽर्थापत्तिरपि, अन्यथाऽनुपपन्नोऽर्थोऽदृष्ट कल्प-येत्तदुपपादकमित्येवंलक्षणा वाऽर्थापत्तिर्नानुमानप्रथामतिक्रामति, अन्यथाऽनुपपन्नहेतुप्रभवत्वात्तस्य, व्याप्त्याद्यप्रतिसन्धानं पाटवा-देवेति । भवति ह्यभ्यासपाटवादन्यत्रापि स्फुटतामन्तरेणाप्यवग्रहे-हयोरपायोद्भव.। न चैतावताऽवग्रहेहयोरन्तरेणैवापाय इति निश्चेतु शक्यम्, अनवगृहीतस्येहाविषयमनीहितस्य चापायविषय समवतरीतुमेवाशक्यत्वात् । तद्वदत्रापि पक्षधर्मताव्याप्त्यादिस-मुल्लेखस्फुटताभावेऽपि नानुमानभिन्नताऽस्याभिगन्तव्या । तत्त्वतस्तु हेतुपक्षवचनात्मकमेवानुमानमपि व्युत्पन्नानपेक्ष्योच्यतेऽनूचानप्र-धानै.। न च सर्वथाऽत्र न तदुल्लेख:, तच्छब्दोल्लेखाभावस्त्वनुमा-नेऽपि सम एवेति नाभिनिवेष्टव्यमर्थापत्तिप्रमाणपार्थक्ये विचार-विशारदै:। यच्चोच्यते यद्यर्थापत्तिरनुमानरूपा समभिगम्यते, किं लिङ्ग तत्राभिमन्तु योग्यं ? यत्र गृहवृत्तित्वाभावेन देवदत्तस्य बहि-र्वर्त्तित्वकल्पना ह्यर्थापत्तिस्तत्र न गृहवृत्तित्वाभावो हेतुतयाभिप्रेतुं

(योग्य·) वहिर्वृत्तित्वसाध्यस्य, मृतादेरपि तथाकल्पनप्रसङ्गात्। जीवनं च गेहादर्शनेनैव सन्दिग्धताभूमिमारूढम्, ततस्तद्विशिष्टमपि न गेहावृत्तित्वं वहिर्वृत्तित्वसाधनायालं, सन्दिग्धविशेषणत्वेन हेतोर्भागासिद्धे साध्यसिद्धेरपि सप्रत्यूहत्वादिति। तदपि न समञ्जसम्। यतो यदि तावज्जीवनमेव सन्दिग्धं तर्हि कथमर्थापत्तिरप्युन्मज्जेत्?। न हि गेहाभावमात्रेण देवदत्तस्य वहिः सद्भावो निश्चीयते कल्पनया, किन्तु जीवनस्य कुतोऽपि ज्योतिषादिना निर्णये एव। तथा च काऽनुमानेऽपि क्षतिः? यतो जीवने निश्चिते गेहावर्त्तित्वं गमयेदेव वहिर्वृत्तित्वम्, जीवतः परिमितक्षेत्रवृत्तित्वनियमात्। एवं चायुःसत्तावैशिष्ट्यान्वितं गेहावृत्तित्वं वहिर्वृत्तित्वं साधयेदेव, वहिर्वृत्तित्वसन्देहे च न किमपि क्षीयते न; सन्दिग्धस्यैव साध्यत्वेनाम्नायमानत्वात्। प्रतीतं च न स्यात्साध्यं; "अप्रतीतमनिराकृतमभीप्सितं साध्य"मिति [प्रमाणनयतत्त्व०] वचनप्रामाण्यात्। गेहावृत्तेर्जीवनान्यथानुपपत्तिरेव वहिर्वृत्तित्वं साधयेत्। तथा कथं गेहाभावो वहिर्वृत्तित्वं साधयेदित्यपि निरस्तमेव। न चात्र नान्वयिता व्याप्तिरपि, जीवतः कुत्रचिद्वृत्तित्वनियमाद्, गेहावृत्तित्वं वा अध्यक्षसिद्धमिति पारिशेष्याद्वहिर्वृत्तित्वसिद्धिः सिद्धिसौधमध्यारोहन्ती नानुमानादर्थापत्त्या विलम्बयितुं शक्या। अन्यच्च—कल्पनापि नियमान्विता स्यात् अन्यथा वा?। आद्ये, स्पष्टमनुमा, अन्त्ये, न यथार्थता। न च वाच्यं श्रुतादेरपि कल्पना तु भवति, लिङ्गत्वं त्वध्यक्षादेवेति। लिङ्गस्यापीतरप्रमाणसमधिगम्यत्वाऽऽम्नायात् तत्त्वतो लिङ्गनिश्चयस्यैवानुमानहेतुत्वात्। अत एव न लिङ्गमेवानुमानहेतुतयाऽऽम्नायते आम्नाये, किन्तु लिङ्गज्ञानमेवेति न श्रौतार्थापत्तिकल्पनायामपि क्षतिः। तत्त्वतस्तु तर्कादेवार्थापत्तिभावे न कोऽपि विरोधः। उभयमप्येतन्मतिज्ञानमिति तु निर्णीतमेवेति। अभाव-

स्यापि प्रणिगद्यमाना भिन्नप्रमाणता न जाघटीति। कथङ्कार तर्हि परिगणना तदभावान्न्यूनेति सङ्गच्छते जेगीयमानम्?। यतो विचारणीय तावत् प्रथम किं प्रमाणत्व नाम प्रमाकरणत्व स्वार्थव्यवसायित्व वा? यत् किमपि भवतु, तथापि भावरूपमेव तदित्येतावन्निर्विवादमेव। तथा च स्पष्टमेव न तदभावव्यवहार्यतामेति। अन्यच्च—प्रमाण हि प्रमेयमवगमयन्नवाप्नोति सद्भावव्यपदेश्यताम्, इद किमवगमयेत्? न तावत्स्पर्शादि, तस्यैन्द्रियकत्वेन प्रत्यक्षविषयत्वात्। नापि प्रतिपन्नप्रतिबन्ध धूमादि नाऽतीन्द्रिय हुताशनादिवत् परोक्ष सिषाधयिषित क्षममवगमयितुम्, व्याप्त्यादिनिबन्धनत्वात्तदवगमस्य। तथा अन्यदपि वाच्यादिकमवगमयितु नाऽलम्। तथा च प्रमेयाभावे कथमिव प्रमाणताऽस्य?। अभाव एवास्य प्रमेय इति चेत्। ननु किं भावव्यतिरिक्तोऽभावो भावाश्रितो वा परिच्छिद्येत?। आद्ये, अन्धस्य सर्वाभावावगति, तेनानवलोकनाद् भावानाम्। अथोच्येत योग्यताया सत्यामिति चेत्, सा किं कुर्यात् येन प्रविश्यते?। तत्त्वतः तु प्रत्यक्षादिनिवृत्तिरेवाभावतयाऽभिमता। निवृत्तिश्च न ज्ञानरूपा, यया प्रमाणता तस्य व्याक्रियमाणा शोभेत। अथ 'भावव्यतिरिक्त' इत्यस्य भावाद्भिन्न इत्यर्थो न तु भावाभाव इति चेत्, ननु तथापि नैव सुन्दरम्, तस्य सत्त्वेनाभावावगमाविषयत्वात्। किञ्च—प्रत्यक्ष निवर्त्तमान यन्निवृत्तिमधिगमयेत् सैवाभावमेया अन्यापि वा?। आद्ये, अनुमानादिनिवृत्तेरन्यदपि प्रमाणान्तरमनुगमनीयम्। अन्त्ये च, धूमाभावाद्यपि यथायथ ज्ञेयम्। न तत्र च प्रयत्नकणिकापि विधेया स्यात्। न चैवमनुभूयते, व्यापकनिवृत्त्यैव व्याप्यनिवृत्तिसमासादनात्। न चाभावोऽस्ति व्यतिरिक्त, समग्रस्यैव वस्तुस्तोमस्य भावाभावस्वरूपत्वात्। य एव घटः स एव पटाभाव। न च वाच्यमन्योन्याभावस्य तथात्वे नान्ये तथाविधाः।

प्रागभावप्रध्वंसाभावयोस्तावन्मृत्तिकाकपालरूपताऽनुभूयते । न च वाच्य भावावेव तौ कथमभावौ, भिन्नस्याभावस्यैवाभावात् । यस्मिन्नेव न घटाकारो भूतपूर्वो भूतपूर्वो वा स एव मृदाख्यो भाव उभयत्रापीति। तत एव च प्रत्यभिज्ञापि मृदः तस्या अय, तस्य वेय कपालद्वयीति । अत्यन्ताभावो नाधिकरणात् सर्वथा भिन्नः, तथा-सत्यधिकरणानवलोकिनोऽपि तदवगमप्रसक्तेः । न च वाच्य व्यति-रिक्ताभावाभावे कथमत्र घटाभाव इति प्रतीतिरिति केवलस्य भूतलस्यावलोकनेनाभिप्रेता दर्शनमात्रेण तथोच्चारात्, अन्यथा कथमनन्तात्यन्ताभावे सत्त्वे केषाञ्चिदेव प्रतीति । ननु तज्ज्ञाने प्रतियोगिज्ञानस्य कारणत्वमिति चेत्, न, तदपि प्रतियोगिनामप्य-नेकेषामस्त्येव ज्ञान भूतपूर्वं, पर यदेवाभिप्रेयते न दृश्यते च तत्तदा तदभाव प्रतीयते,अतिरिक्ताभावे घटपटादिवद्विलोक्येत स्वतन्त्रम् । न च स्यात् प्रतियोगिज्ञानापेक्षा, अन्यच्च-अभाव स्वरूपेण स्थाणु-तामादधीत तत्रान्यतरेण वा सम्बन्धेन ? । आद्ये, स्पष्टमेवाधिक-रणात्मकत्वम्, कथमन्यथा स्वरूपेणावस्थान तत्र ? । न च भिन्न. प्रमीयते । अन्यतरेणावस्थाने तु स्पष्टैवाभावताक्षति । अन्यच्च अभावस्य गन्धादिशून्यत्वान्नात्र घटाभाव इति ख्याप्यते भवद्भिरपि घटसत्त्वदशायाम् । यद्वा—घटो न घटाभाव इति। तथा चाभावा-भावस्य भावरूपतापत्तौ कथङ्कार निर्वाहः घटे गन्धवत्त्वादेरिति चिन्तनीयम् । ननु भवतामपि भावे गन्धादिर्नाभावे इति कथ उभयरूपत्वाद् घटादेरभावेऽपि गन्धादिमत्त्वप्रसङ्गादिति चेत्, सत्य, यथा हि घटे विद्यमान रूप न रसादिमत्, न चापि रसादिरहित भिन्नदेशानवस्थानेन, तथाऽभावस्याप्यङ्गीकुर्यु, को विरोध ?। तत्त्वतस्तु नाय नियम एव प्रामाणिकोऽभावस्यैव व्यतिरिक्तस्या-भावात् । ननु गगनकुसुमादिस्थले किं वाच्यमभावस्यातिरिक्तस्या-

भावे इति चेत्, न, किञ्चिद्गगनस्यैव कुसुमवत्त्वादर्शनेन तथा सुखेन प्रतिपादयितु शक्यत्वात्, पर भवद्भिरेव चिन्तनीयमेतत् यदुत—न प्रतियोगिज्ञानमित्यादिनियमेन कथमापादनीयम् ? नात्र गगनकुसुम न वा तमो द्रव्यमिति, प्रतियोगिनोरेवाभावाद्। अत्र नञ· क्रियान्वयित्वेऽप्यभावस्यैव प्रतीते.। न चाभावस्यातिरिक्तत्वाभावे कथ कण्टकादिरहिते भूतले तथाज्ञानेन निरङ्कुशा प्रवृत्तिरिति वाच्यम्, न तत्र कण्टकादिसद्भावाऽसत्तामवलोक्य तथाप्रवृत्ति:, किन्त्वनुभवसिद्धा एव सामान्यप्रवृत्तिर्नि शङ्का,कण्टकादिना स्खलना तु क्रियत एव, तथा दृष्टपथेऽपि प्रवृत्तिर्जायते निरङ्कुशा। न हि पथि प्रवर्त्तमानो यावदरिष्टाभावमवकल्पयति, किन्त्वरिष्टे दृष्टे सम्भाविते वा निवर्त्तत इति, तथाऽस्वीकारे च कण्टकादीनामनेकेषा निरङ्कुशप्रवृत्तिकारणता भिन्ना प्रत्येक वाच्या अनन्तकारणता च निरर्थकैव सति स्यात्। अस्माक तु कण्टकादीना निरङ्कुशप्रवृत्तिविघातकतेति सुमहल्लाघवम्। न च कथ प्रतिबन्धससर्गाभावस्य जनकत्वेन लाघवं भवतामपीति। न नूतनैषा कल्पना, सर्वत्रोपयोगित्वादस्या। तथा च स्पष्टमेव लाघव, भावाश्रितत्वे तु सम्प्रति ज्ञायमानेऽभावस्य किं भिन्नत्वेनाश्रितत्वमविष्वग्रूपतया वा ?। आद्ये, भिन्नत्वायोगाद्व्याघात.। अन्त्ये तु स्पष्टैवाधिकरणात्मकता। न च वाच्यमभावस्याधिकरणात्मकत्वे स्पार्शनेन ज्ञातेऽधिकरणे तद्वृत्तिरसाभावोऽपि ज्ञायेत तेनेति। सङ्ख्येयप्रत्यक्षेऽपि सङ्ख्याप्रत्यक्षाभाववत् स्वाद्यमाने आम्रादौ रूपज्ञानाभाववदुपपत्ते। न हि तेनाधिकरणे भिन्ने वा, यद्यदिन्द्रियवेद्य तत्तेन वेद्यत इति नियमस्तु सामान्य एव, कथमन्यथा ज्ञाते घटमात्रे कुशूलाज्ञानिनापि प्रोच्येत पृष्टेन केनापि कुशूलो नायमिति प्रतिवचो, न तत इद न्याय्यमभावस्य भिन्नताभिधानम्। तथा च कथमेवाभावस्य भिन्न-

प्रमाणता ? । अन्यच्च—ज्ञाते घटे पूर्वं पश्चात् केनचित् पृष्टस्तत्र पटो न वेति, तदोत्तरयति द्रष्टा—नेति । भवता हि मतेऽभावस्यायं विषयोऽधिकरणं च परोक्षमिति कथङ्कार स परिच्छिन्द्यात् तत्रत्य पटाभाव प्रतिपादयेच्च । अस्माक तु घटस्यैव पटाभावरूपत्वात्तत्परिच्छेद एव गतार्थता । अन्यच्च—अभावाभावस्य भावरूपत्वाद् घटादयोऽपि भवतामभावप्रमाणविषया एव, न तु प्रत्यक्षादिविषया । यतोऽभ्युपगम्यते 'प्रमाणपञ्चक यत्रे'त्यादि भवद्भिः । अन्यच्च—भावाभावोऽभाव इति स्वीक्रियते । तथा चाभावेनैव प्रमाणेन भावास्तदभावाश्च यद्यवगम्यन्ते, स्यात्तदा तस्याभावावगन्तृत्वम्, तथा च प्रत्यक्षादीनि निरर्थकान्येव, अनेन भावानामप्यवगमात् । विप्रतिहन्यते च 'प्रमाणपञ्चक'मित्यादि तथा सति । अन्यच्च-अभावेनाभावावगम कथ नेन्द्रियादिना ? तस्य प्रत्यक्षत्वाच्च । न च वाच्य प्रत्यक्ष सत् परिच्छिन्द्यादसत्तु न तेन परिच्छिद्यते, किन्त्वभावेनैवेति, तथा सति तस्य मानसत्वाभ्युपगमात् । अस्तु चेत् कथ नेन्द्रियविचारमन्तरा मानसमपि च प्रत्यक्षमेव व्यावहारिकमिति कथमभावस्य भिन्नमानता ?। तन्नाभाव प्रमाणान्तरम् । कथ तज्ज्ञानमिति चेदनुमानादिना भवतु । तथा च धूमाभावादिसाधनमपि वह्न्यभावादिहेतुना व्याप्तिपुरःसर भविष्यति । भविष्यति वैजात्यादिज्ञान गतशुद्धिभावशब्दादिज्ञान चापि यथायर्थं स्वस्वज्ञानसाधनसहकृतालोचनात स्पष्टं भविष्यति । व्यापाराभावमात्रत्व च भवेत् अन्यथा भवदीयाभ्युपगमानुयायित्वे स्वीकर्तव्यम् । न च प्रत्यक्षादीनि भिन्नानि ज्ञानपञ्चकात्, न चानुमानादीनि मतेरिति नाभावस्याप्रतिपादनेन न्यूनता प्रस्तुतसूत्रस्येति । सम्भवमपि च मान न भिन्नतामर्हति । अवयवसङ्ख्यावगमरूप हि तद् अवान्तरतया न चानधिगता सा ज्ञायते, अधिगतत्वे च तस्या

प्रत्यक्षादिना किमिव भिन्नेन प्रमाणेन ? । न सम्भवस्य सर्वथा प्रामाणिकता, विसवादस्यापि दर्शनादतथाविधेन विहितस्य तथाविधस्य तु पटुवभ्यासात्तथाभवने न प्रमाणान्तरता। अन्यथा शतशोऽभ्यस्तव्याप्तेरन्तरापि व्याप्तिस्मृतिमनुमानोत्पत्ते अभ्यस्तरूप्यकादेश्च झटिति सत्येतरत्वाववधारणदर्शनाच्च व्याप्त्यवग्रहेहादिविलोपापत्तेश्चाभ्याससंस्कृतबुद्धेर्हि विशेषेणावगमान्न ज्ञानान्तरमभ्युपगम्यते। अन्यथा पर शताद्या प्रत्यक्षादीनामपि भेदा भवेयु । यद्वा—सम्भवस्य पाथक्याभिगमे न काचिन्नो हानि , कर्मजाया बुद्धेः कथञ्चित्तथात्वात्। कथं च बुद्धे कर्मजत्वमिति चेद, अभ्यासेन पाटवोपलब्धे· प्रत्यक्ष न कथञ्चनापि सङ्गतिहीनता। प्रमाणप्रमेयव्यवस्था ह्यनुभवानुरोधेनैव क्रियते, अनुभवबाधस्य सर्वेभ्यो दुस्तरत्वात्। अनुभवश्चाभ्यासेन बुद्धे पाटवोपलम्भे स्फुटतर एवेति। ह्रस्वदीर्घादिज्ञान च यद्यपि न प्रत्यक्षम्, एकतरदर्शनेऽपि तथाज्ञानाभावात्, परदर्शन एव पूर्वज्ञातस्य द्वयोर्ह्रस्वदीर्घयोरेकतरेणाऽध्यवसाय । न च परदर्शनाऽनेहसि पूर्वदृष्ट विद्यते, न वा पूर्वदर्शनकाले परवस्तुनो दर्शन, अध्यवसितिश्च समुदितयोरिति भिन्नमेवापेक्षिकमभ्युपगमनीयमित्युच्यते यत्। तदपि नैव समञ्जसम्, मानसत्वादेतस्य। यत् परिमाण पूर्वस्याभूतदितो दृश्यमानवस्तुपरिमाणान् न्यून वाऽधिक वा, ततस्तदस्मात् ह्रस्व वा दीर्घ वेति प्रतिपद्यते, पश्चाद् द्वयोरपि स्यात ह्रस्वता यदि, ततोऽपि दृष्टिपथमायाति महदिति नैतावता भिन्नप्रमाणता। अन्यथा परस्महीयसो लघीयसो वा यावद्दर्शन न जायते पूर्वस्य, न स्यान्निर्णयो, निर्णये वा प्रामाणिकता, समूहालम्बनवद्यावज्ज्ञाननिर्णयत्वाऽऽपातात्तस्य। तथा च कदापि निर्णयो नैव भवति महीयसो लघीयसोऽपि च दर्शनस्य भविष्यन्त्या सम्भावनेन निर्णयाऽभावात्, द्वयोर्निर्णय

इति चेत्, पूर्ववदेव युक्तः स , अन्यथा तु निर्णयाऽभाव एवोक्तयुक्ते । न च विचारशून्य किमपि प्रमाणमाम्नायते आम्नायविद्भि । तथा सति प्रमाणाऽप्रमाणयोर्विशेषाऽभावाद् अत्रापि । पूर्वदृष्टस्मरणेन सम्प्रति प्रेक्ष्य तदितरन्निश्चीयते तत्तथा तथारूपतया मनसेति नैव पार्थक्यम् । न च प्रत्यक्षाद्यतिरिक्ततत्वाऽभावेनैव केषाञ्चित्तत्सत्ता भवतीति वाच्यम्, प्रत्यक्षेऽपि क्षयोपशमवैचित्र्याद्विचित्रता दृश्यते एव पटुपटुतरपटुतमत्वादिना लोचनादेरनेकेषु आत्मन एववासन्न-दूरादिभेदेन । न चैतावता वोऽभिमता भिन्नता । तद्वदत्रापि कथञ्चिद्भिन्नताया तु प्रतिव्यक्ति भिन्नव्यवत्यात्मकतारूपोऽस्त्येव भेद इति । पर नैतावता भिन्नप्रमाणता । न चानुमानादेर्भिन्नता । तत्त्वतस्तु तर्कोऽयमित्यत्रसेयम्, ऊहापोहरूपत्वादस्य । स च नाति-शेते मतिज्ञानमिति तूक्तमेवेति । इति केषाञ्चित् पार्थक्येऽपि मतिज्ञानान्तर्भावात्, केषाञ्चित्तु पार्थक्याऽभावादेव न मत्यादिनिरू-पणमसङ्गतम् । यद्वा-समान्येवैतानि मतिज्ञानान्तर्गतान्यैव । ऐतिह्य क्वेति चेत्, प्रमाणभूत चेत्तत्तदा श्रुते, आप्तोपज्ञतास्वरूपत्वात्तस्य । ऐतिह्यस्यापि प्रामाणिकस्य तथात्वादेवेह वटे यक्षो वसतीति श्रूयत इत्यादि ह्यैतिह्यतयाऽऽम्नायते, तच्च पूर्ववद्विचारणीयम्, सत्य चेच्छ्रुततया, अप्रामाणिकत्वे तु का चर्चैव, तथाविधस्यासङ्ग्रहो भूषणमेव, यतो भारतीभाभास्वता । तन्न तत्पृथग्ज्ञानचतुष्कान्तर्गतात् श्रुताख्यात् प्रातिभमपि भेदमास्कन्दति कथञ्चनापि, प्रतिभा हि नवनवोल्लेखशालिनी प्रज्ञा, तदुद्भव च प्रातिभमिति यौगि-कार्थानुगमे तु मतिरेव तत् । यदि च योगसामर्थ्यप्रभवतया भिन्न-रूप ऋतम्भराप्रज्ञाया अर्वाक्तनमिष्यते प्रातिभतया, तदापि परमावधिवत् केवलादर्वाक्तनीयो मतिज्ञानप्रकर्ष एव तत् । तथापि च नोक्तमङ्ख्याव्याघात इति युक्तमुक्त—पञ्चैव ज्ञानानि पूर्वो-

क्तयुक्तिकलापात्। केवलस्य क्षायिकतासिद्धौ च पारिशेष्यादेव चतुर्णां क्षायोपशमिकता। आद्ये मोहोपशमात्तन्मूलत्वाज्ज्ञानावरणस्य सर्वदाऽर्वाक्केवलादेतद्वेदननियमात् केवलोपलब्धिनियमाच्च नैतानि औपशमिकानीति तु पूर्वं निर्णीतमेवौपशमिकव्याख्यानावसरे, तन्न भूयश्चर्च्यंते। ननु च मतिश्रुतादे क्रमेणोपन्यासो यथाकथञ्चिद् अस्ति वा प्रयोजनमिति। विद्यत एवेति ब्रूमः। किं तदिति शृणुत सावधानीभूय–पञ्चस्वपि ज्ञानेषु मतिज्ञानं तावत् स्वाभाविकं, जीवस्य चेतनारूपत्वात्। शेषाणि तु परोपदेशक्षयोपशमक्षयविशेषनिबन्धनानि श्रुतादीनि। न च वाच्यं मतिज्ञानं तावदिन्द्रियानिन्द्रियनिमि , इन्द्रियमनांसि चाऽवाप्तपर्याप्तिभावस्यैन्द्रियपर्याप्तस्य वा केवलानीन्द्रियाणीति कथं स्वाभाविकं तत्, कथं वा हृषीकापर्याप्तस्यापि जीवस्येति। यतोऽनिन्द्रियशब्देन मनोज्ञानमोघज्ञानं च द्वयमपि गृह्यते, गुरुशब्दव्यपदेशेन तज्ज्ञापनात्। न चैतत् स्वमनीषिकाविजृम्भितं, यदाहुर्भाष्यकारपादा –"अनिन्द्रियनिमित्तं मनोवृत्तिरोघज्ञानं च" इति। स्वीकर्तव्यमेतदेवम्, अन्यथा जीवस्योपयोगस्वभावव्ययापत्ते। उपयोगश्च न साकारानाकाराऽन्य। न च भवदीयनीत्याऽनाकारशब्दाख्येयदर्शनसम्भवोऽपि। प्रोक्तशैल्या तु दर्शनेऽप्यचक्षुर्दर्शनस्य शेषेन्द्रियौघदर्शनं द्वयमित्यर्थाख्यानेन तत्र सम्भव स्यादेवेति। न चैतत् सिद्धान्ताननुपाति। यत सिद्धान्तेऽपि सिद्धान्तितमेव जीवस्य ज्ञानदर्शनयोरप्रतिपातित्वं पर्याप्तापर्याप्तलक्षणयोरुभयोरप्यवस्थयो। तथा चादौ मतिज्ञानमेवोपन्यसनीयम्। न च वाच्यं यथा मतिज्ञानं स्वाभाविकं तथा सञ्ज्ञाया नित्यत्वाभ्युपगमात्तस्याश्चाभिलाषरूपत्वात्तस्य चाक्षरोल्लेखरूपत्वात्तस्य च श्रुतत्वात्तदपि नित्यमेवाभ्युपेयं स्वाभाविकं चेति चेत्। सत्यं, भवदीयापेक्षया "सव्वजीवाणं पि य णं अक्खरस्स

अणत [तमो] भागो निच्चुग्घाडिओ चिट्ठइ, अन्नहा जीवो अजीवत्तण पाविज्ज"त्ति (नन्दी० सू० ४२) अक्षरस्य केवलार्थकत्वेऽपि अक्षरानन्ततमभागस्य श्रुतत्वाऽव्याहते श्रुतमपि सर्वदा जीवस्यास्तीति प्रतिपाद्यते सिद्धान्ते यत, ततश्च तस्य नित्यत्व स्वाभाविकत्व च, तथापि तस्य विशेषोपयोगरूपत्वेनेन्द्रियविपयावगममन्तरा श्रुतोद्भवाभावान्मतिज्ञानजन्यत्वाच्च श्रुतस्य पश्चादेवोपन्यासो युक्तियुक्त । केचित्त्वक्षरादिमात्र न श्रुतम्, अन्यथा स्पार्शनादेरप्यक्षरानुविद्धत्वेन मतिविलोपप्रसङ्गात्। यत उच्यतेऽपि "न मतेरधिक श्रुत"मिति, किन्त्वङ्गप्रविष्टादिरूप सिद्धान्त एव श्रुतम्। तथा च वाच्यवाचकभावसस्पृष्टार्थग्रह श्रुतमिति श्रुतलक्षणमपि नाव्याप्तिमियर्त्ति। अपेक्ष्यैवैन पक्षमुक्त भाष्यकारै "मतिज्ञानमिन्द्रियानिन्द्रियनिमित्तमात्मनो ज्ञस्वाभाव्यात् पारिणामिक, श्रुतज्ञान तु तत्पूर्वकमाप्तोपदेशाद् भवतीति"। एव चैकस्मिन् जीवे एकादीनि मत्यादीनि आ चतुर्भ्यो ज्ञानानि भवन्तीति युक्तियुक्त स्यात्, आहुरपि च—"एकादीनि भाज्यानि युगपदेकस्मिन्नाचतुर्भ्य [तत्त्वार्थ १-३१]"इति। व्याख्यात च—"यथा कस्मिँश्चिज्जीवे मत्यादीनामेक भवति, कस्मिँश्चिज्जीवे द्वे भवत, कस्मिँश्चित् त्रीणि भवन्ति, कस्मिँश्चिच्चत्वारि भवन्ति। श्रुतज्ञानस्य तु मतिज्ञानेन नियत सहभावस्तत्पूर्वकत्वात्, यस्य श्रुतज्ञान तस्य नियत मतिज्ञान, यस्य तु मतिज्ञान तस्य श्रुतज्ञान स्याद्वा न वेति" [भाष्यम्]। पक्षे श्रुतज्ञानस्य नाऽक्षरादिका भेदास्तल्लब्धे शेषेन्द्रियैरपि प्राप्तु शक्यत्वात्। श्रुत चानिन्द्रियस्यार्थो लिप्यक्षराणि च सङ्केतरूपाणीति न तावन्मात्रेण श्रुतत्वम्। तथा च—"श्रुत मतिपूर्व द्व्यनेकद्वादशभेद [तत्त्वार्थ० १-२०]"मिति सूत्र "अगपविट्ठियरसुय" इति च सङ्गच्छते इत्याचचक्षिरे युक्त्यनुसारिण । तन्मते स्पष्ट एव श्रुतस्य

पञ्चादुपन्यासो युक्तियुक्त.। व्यवहारश्रुततामपेक्ष्य नैतदसङ्गतम्। तत्त्वतस्तु "मोइदिओत्रलद्धी सुयनाणं सेसय तु मइनाण। मुत्तूण दव्वसुअ अक्खरलभो अ सेसेसु" ॥१॥ [विशेषाव०] इति गाथाप्रतिपादितो महाभाष्यकाराभिमत पन्था उभयानुयायी, शास्त्रेषु चैष एवाभिसमीक्ष्यते पन्था·, तत एवोच्यते–"विसिट्ठो वा मइभेओ चेव सुय" इति। इत्यलमतिप्रसङ्गेन। उभयोरप्य-वधार्यं तत्त्वं पक्षयो श्रुतस्य पश्चादेवोपन्यासो युक्त इति त्ववि-प्रतिपन्न पन्था। श्रुतस्य मतेरनन्तरमुपन्यास किमिति चेत्, स्वामि–काल–कारण–विषय–परोक्षत्वसाधर्म्यात्। श्रुतपक्षे मति-श्रुतयोर्नियतसहचारित्वेन यो मतिज्ञानवान् स श्रुतवान्, य श्रुतवान् स मतिमान् इति स्वाम्यनयोरेक एव। न चास्मिन् पक्षे एकादी-नीति श्रुतमसङ्गतिमापाद्येत, केवलस्यैकस्यैवाभ्युपगमात्। ये च केवले उत्पन्नेऽपि शेषज्ञानसद्भावमामनन्ति, ते तु द्वयादीन्या पञ्चभ्य इत्येव स्वीकुर्यु.। तन्नाऽत्र तच्चर्चा। तथा कालतो यथा मतिज्ञान षट्षष्टिसागराणि यावदवतिष्ठतेऽप्रतिपतितं, तथा श्रुतमपि। ननु पूर्वमुदितमप्रतिपाति मतिज्ञानमेकीयपक्षेण तु श्रुतमपीति, किमिद परस्परविरुद्धमिति चेदनभिसन्धायाऽभिसन्धिमेतद्वचन, यत. "सामन्नओ मई च्चिय सम्मदिट्ठिस्स सा मइन्नाण" इति-वचनादत्र मतिज्ञानाधिकारात् सम्यग्दृष्टिमतिप्ररूपणा,सम्यग्दृष्टित्वं च नाधिकमिति युक्तैव षट्षष्टिसागराणि यावन्मतिज्ञानस्थिति। एव श्रुतेऽप्यूह्यम्। ननु च कथ षट्षष्टिसागराण्यप्रतिपातितयाऽव-तिष्ठेत सम्यक्त्वमिति चेच्छृणु–लब्धसम्यक्त्व: कश्चिदप्रतिपतित-सम्यक्त्व एव पर्यटति भवे तावत्काल, पश्चात्तु प्रतिपतेत् सिद्धि-सौध वाऽध्यारोहेत्। तदुक्त–"दो वारे विजयाइसु गयस्स तिन्न-च्चुए अहव ताइ। अइरेग नरभविअ" इतिवचनात् विजयादिषु

स स्यादेव। यद्वा—व्याप्त्यर्थादक्षेरचि स्यादेवाऽक्ष इति। न च वाच्य 'योगाद् रूढिर्बलीयसी'ति न्यायोऽत्र बाधक, व्याकरण एवोपयोगित्वात्तस्य, कोशप्रतिपादिता वा सर्वे रूढा एवार्था एतन्न्याग्रगृहीता इति ज्ञेयम्। तस्मादक्षात् पर परोक्षम्। परशब्दसमानार्थेन परशब्देनाव्ययेनात्ययार्थेन समासे परोक्ष इत्यादि। सत्त्ववचनता त्वभ्रादित्वादप्रत्यये भविष्यति, इन्द्रियानिन्द्रिययो' पुदगलरूपत्वात् स्पष्टमेव तदुद्भवस्यात्मन परस्त्वम्। यद्वा—परैरुक्षासम्बन्धो यस्मिन्निति परोक्षम्। इन्द्रियानिन्द्रिययो. पुद्गलरूपत्वेन परत्व तदुत्पन्न च तत परोक्षमेव। यदाहु.—अक्खस्स पोग्गलकया ज दव्विदियमणा परा होति''त्ति। तदुद्भवज्ञान च परोक्षम्। मतिश्रुते परोक्षे, पुद्गलजन्यत्वात्, व्यतिरेके अवध्यादि। यद्वा—सम्प्रतिपन्ने परोक्षे साभासत्वात् अनुमानादिवत्। न च विभङ्गस्याभासता वधेर्येन भवेदवधे' प्रत्यक्षस्य साभासत्व, किन्तु मिथ्यात्वसामान्याधिकरणत्वेन तस्याज्ञानत्व जेगीयते। न ह्यवधौ स भवति, येन भवेत्तदाभासरूपम्। यद्वा—परोक्षे एते, इन्द्रियानिन्द्रियोद्भवत्वात् अनुमानवत्। तदुक्त—"दव्विदियमणा प[illegible] तेण तेहि तो ज नाण परोक्खमिह तमणुमाण व' त्ति। न च वाच्य सर्वथा पर्याप्तावस्थायामप्यभ्युपगम्यमान कथ पौद्गलिकम्, न च वाच्य कार्मणशरीरस्य तदापि सत्त्वात्तदुद्भवं तत्, तथा सति यावद्भव तत्सद्भावात् प्रत्यक्षसम्भवव्याप्युच्छेदापत्ते, न च कार्मणमेति तयोपयोगता 'निरुपभोगमन्त्य'मिति वचनादिति चेत्। सत्य, यथा हि तैजसशरीरोपगृहीत आहारादिग्रहणाय व्याप्रियते, तथा जीवस्वाभाव्यादेव तैजसकार्मणाभ्यामुपगृहीतो वेत्त्येव किञ्चित्। न च कोऽपि जीवोऽभिमतो विद्यते वा यो न ज्ञानवान्, विशिष्टक्षयोपशमाभावान्न गाज्यथ्वादिनियमोऽपि तदेति। कार्मणस्य निरुपभोगत्व च

साक्षात्सुखदु खादिविधानाभावेन, अन्यथा तु तदभ्युपगमस्यैवानर्थक्याऽऽपत्ते । सूक्ष्मा च शरीरादिकृता ज्ञानकणिका सर्वेषामेवासुमताम्, अन्यथा सञ्ज्ञादीनामप्युच्छेदाऽऽपत्तेः । विशेषार्थिभिश्चाकरस्तत्त्वार्थवृत्त्यादयश्च विलोकनीया । एतावता च मतेर्यथा परोक्षत्व तथैव श्रुतस्यापीति परोक्षत्वसाधर्म्यम् । ततश्च स्वाम्यादिसाधर्म्येण मतेरनन्तर श्रुतोपन्यास इति युक्तमेवोदितम् । आहुश्च महाभाष्यकारपादा दुष्षमाश्यामासमयसमुद्भूताद्भुतसन्तमससम्भ्रान्तजनोद्दिधीर्षाकृपापारावारीणविततप्रदीप्रप्रदीपप्रतिमा – "ज सामि–काल–कारण–विसय–'.रोक्खत्तणेहि तुल्लाइ । तब्भावे सेसाइ तेणाइए मइसुयाइ ॥१॥ मइपुव्व जेण सुयं तेणाइए मई विसिट्ठो वा । मइभेओ चेव सुय तो मइसमणतर भणिय ॥२॥" इति । विवृत चैतदेव प्राक् । मतिश्रुताभ्यामुपर्यवधिश्च कथमिति ? चेत्, काल–विपर्यय–स्वामित्व–लाभसाधर्म्यादेव । यथा ह्यप्रतिपतिते मतिश्रुते षट्षष्टिसागराणि यावत्तथाऽवधिरपि । तानि च पूर्ववदेवाभिगन्तव्यानि । तत मतिश्रुताभ्या कालत साधर्म्यता । मन पर्याय तु नैति परभवमीयिवांस नरम् । न चान्यगतौ । स्थितिश्च तस्य जघन्यत समय उत्कृष्टतश्च देशोना पूर्वकोटी । ततोऽधिकायुष्कस्य तदनुत्पत्तेश्चारित्रमन्तरा तदावरणविच्छेदाभावात, चारित्र च यथोक्तस्यैव, केवलस्य तु भगवत साद्यनन्ता स्थितिरिति न स्थितेस्ताभ्यामनयो साधर्म्यम् । तथा विपर्ययसाधर्म्यात्, यथा ह्यवाप्तसम्यक्त्वोऽपि कदाचिद्भ्रान्तिकल्पानन्तानुबन्ध्युदयात् प्रतिपतति सम्यक्त्वात्तदा 'सम्यग्दृष्टेर्ज्ञान सम्यग्ज्ञानमिति नियमत सिद्ध'मिति वचनात् मतिश्रुते तदा ज्ञानरूपे ये अभूता, ते एव मिथ्यात्वावाप्तेरज्ञाने जायेते, तथैव चेदसौ प्रतिपतिता देवो नारको

वा अवधिज्ञानरूपेण वा निर्दिष्टं तत् मत्यज्ञानादिभिरपि विभङ्गरूपेण परिणमति। तदाह—"आद्यत्रयमज्ञानमपि भवति मिथ्यात्वसंयुक्तम्" इति। पारमर्षमपि—"सम्मद्दिट्ठिस्स मई मइनाणं" इत्यादि। ननु च केन हेतुना यत्—सम्यग्दृष्टेरेव ज्ञानं, मिथ्यादृष्टेरज्ञानमिति?। न हि मिथ्यादृष्टिरपि घटं पटतया, पटं घटतया वा वेत्ति। यथैव सम्यग्दृष्टिः रूपादिकं रूपादितया जानाति, तथैव मिथ्यादृगपि। यथा च तत्त्वेन तत्त्वमवगच्छति सुदृष्टिस्तथा मिथ्यात्वमोहितोऽपि। तत्र सम्यङ्मिथ्यादृशोरस्ति द्रव्यगुणपर्यायाणामवबोधादौ विशेषः। विना विशेषं न युक्तमेतस्य ज्ञानत्वमन्यस्याज्ञानमिति निगद्यमानं विद्वत्परिषदि प्रागल्भ्यात् प्रभवतीति चेत्, सत्यं, प्रथमं तावदवधेयमिदं—यन्मिथ्यात्वं हि मिथ्यात्वमोहनीयोदयजन्य आत्मपरिणामः। सम्यक्त्वं च मिथ्यात्वक्षयोपशमादिजन्यः प्रशमसंवेगनिर्वेदास्तिक्यानुकम्पाभिव्यक्तिलक्षणस्तत्त्वार्थश्रद्धानरूप आत्मपरिणामः। ज्ञानं चाप्यात्मस्वभाव इति मिथ्यात्वोपबृंहितात्मनो ज्ञानं मलिनं कुवासनया, अन्यस्य तु नेति। दृश्यते चैकरूपस्यापि दीपस्य काचगृहवैचित्र्येणैव विविधप्रभाविधायित्वम्, अत एव च तस्य जायमान आवरणक्षयोपशमोऽज्ञानावरणक्षयोपशम इत्यभिधीयते 'अज्ञानावरणापाय'मित्यादिना। अत एव चानर्थनिबन्धनताऽपि 'महापायनिबन्धन'मित्यनेनाभियुक्तैराख्यायतेऽस्य। अभिलापसादृश्यमात्रेण च न भ्रमो विधेयो विधानकुशलैः। यथा ह्युन्मत्तोऽश्वमश्वं गां गामिति वक्ति यदि, नैतावता तस्य स्वस्थता। स हि कदाचिज्जननीं प्रियीयति, प्रियां च जननीयत्यपीति, तथाऽयमपि घटादिकमेव व्यपदिशन्नपि न तावन्मात्रेण ज्ञानवत्ताऽस्याप्तुमर्हम्, यद्वा—वदन्नपि नैव मनुतेऽसौ तथा। ततश्चात्मद्रुहः कथं ज्ञानवत्ता?। कथं नु मनुते चेदुच्यते—ये

तावदात्मापलापपापकर्दमलिप्तात्मका नास्तिकास्ते तावज्जीवमेव नाभ्युपयन्ति, कथ तदा तत्कर्तृता घटादे , तन्मते च भूतैर्निर्वर्त्तितो घट॰। तथा साङ्ख्यैरप्यकर्ता निर्गुणो भोक्ता इत्यभ्युपगमेन नैवाय जीवप्रयत्नजोऽभ्युपगम्येत। प्रत्यक्षापलापिनो वेदान्तिनस्तु घटोऽय-मित्येव मृषोद्य, विहाय ब्रह्म अपरस्याभावादेव तन्मते। बौद्धाना-मपि मते नाय जीवकर्त्तृक॰, यत. कैश्चित्तावन्नाङ्गीक्रियते ज्ञानव्य-तिरिक्त. कोऽपि पदार्थोऽपरैरपि नाभिमतः कोऽपि पदार्थ , शून्य-वादाऽङ्गीकारात्। क्षणिकवादे चेदन्त्वेन प्रत्यक्षक्षणोऽन्योऽन्यश्च व्यवहारक्षण इति प्रत्यक्ष एवासत्यता स्वाभिप्रायेणैव तद्ग्राहिणाम्। तथा नैयायिक—वैशेषिकयोरपि जगदीश्वरकृतियोजितद्व्यणुकादिज-न्योऽयम्, न तु स्ववृत्तिस्निग्धरूक्षत्वादिगुणयोजिततथाभावाऽऽपादि-तमृत्तिकाजन्य। न च परमाणुमयो न वाऽपरमाणुमय , आद्येऽदृश्य-त्वापातात्, अन्त्ये च परमाण्वनित्यत्वाङ्गीकारात्, उभयाभ्युपगमे च स्वमतत्यागेन स्पष्टा स्याद्वादाभ्युपगमापत्ति , कथञ्चिद्वादस्य तथात्वात्। ततश्च न तौ स्वाभ्युपगममनुश्रित्य वक्तु शक्नुयाता अय घट इति। प्रतिपादितरीत्याऽन्येषामध्यात्माभ्युपगमेनाऽसद्वादि-तोपपादनीया। यथा घटादिद्रव्याण्यपेक्ष्योदित तथैव गुणाद्यपेक्ष्यापि वाच्य, भेदाभेदैकान्तप्रवणत्वादन्येषा सर्वेषा मिथ्यामतानुसारिणा-मिति। यद्वा-सदसतोर्न विशेषस्तेषा, सर्वथा सत्त्वमसत्त्व वा तैरभि-मतं स्याद्वादाभ्युपगमभीत्येव, तथाभ्युपगमे च घटस्य सत्त्वेऽपि स्वद्र-व्यक्षेत्रकालभावापेक्षया परद्रव्यक्षेत्रकालभावापेक्षया यद्घटे असत्त्व तन्न तैरभिप्रेत, पदार्थस्य सदसद्रूपेण स्वीकारापत्ते । नियमश्चाय सर्ववादिसम्मत॰—यद्भावाभावयो॰ परस्परपरिहारेणावस्थानम्। यदि च नाङ्गीक्रियते परासत्त्व घटादौ, स्पष्टमेव परसत्त्व तत्राप-तन्न निवारयितु शक्येत तै । तथा च घटस्य सत्त्वेऽपि पटादेरपि

सत्त्वमसत्त्वोऽपि । ततश्च स्पष्ट एव सदसतोरविशेष इति । न च विनोऽन्यपेक्षतोऽभावो भिन्नाश्रयमेऽपि तथाविधस्वरूपकारणा-भावात् । तद्यथा—यथा मृत्तिकाया घटाभावस्तथैव तन्त्वादौ, तथा च तन्तौ पटाभावस्तथैव मृत्तिकादावपि स्पष्ट एव सदसतोरविशेष , मृत्तिकायां कारणरूपेण घटस्य सत्त्वो न तन्त्वादौ तन्त्वे, पटस्य तन्त्वादौ पटस्य मृत्तिकादौ नासत्त्वोऽपि विशेषात् । न च नास्य नेयमापत्ति सत्कार्यवाद इति । तथापि तत्र निष्पन्नेऽपि पटाभाव-तद्भावे घटत्वाभ्युपगमस्तथा मृत्तिकायामसत्त्वेऽपि तथाभावे सत्-त्वाभ्युपगम इति स्पष्ट एव तेषामपि सदसतोरविशेषो, न स्यादेवे-यमापत्तिः । यद्यपि अभ्युपगम्यते कारणतया सत्त्व कार्यतया चासत्त्व कार्यस्य कारणे । न चैवमभ्युपगमो विना सम्यग्दृष्टेरन्येषां, तेषां स्याद्वा-दस्यैवानभ्युपगमात् । कथं भवति च आलम्बनानां गृहीतकर्मणो-ऽविश्वस्य चित्र चित्रकारितेति । अन्यच्च—नैकान्तेन सदेवासदेव वेति प्रोच्यते, तथा च वर्त्तमानगुणपर्यायाभ्युपगमेनातीतानाग-तानां गुणपर्यायाणां सतामसतां चाविकल्पेन पुनः प्रतिषेध इत्यपि सदसतोरविशिष्टतैव तेषामिति युक्तमेव मिथ्यादृशामज्ञानित्वम् । प्रतिपादितं च पूज्यपादैः—"सदसतोरविशेषा"दिति "सयसयविसेस-णाओ" इति च । अपरं चान्योऽन्याऽभावस्याधिकरणस्वरूपेण स्पष्ट एव सदेवासदेव वेत्येकान्तपक्षव्याहतिः । यतो यथाऽत्यन्ताभावे व्यपदिश्यते भूतले न घट इति नान्योऽन्याभावव्यपदेश तद्वत्, किन्तु नायं घटः पटो वेत्यादिना सद्वस्तुवाचकेनैव सर्वनाम्ना । तथा सति च स्पष्ट एवैकान्तसदादिव्यपदेशस्तेषां स्वाभ्युपगम-विरोधीति । अन्यच्च—सर्वं हि ज्ञानं हेयोपादेयोपेक्षणीयानां हानो-पादानोपेक्षाविधानक्षमतयोपादेयतामर्हति, तेषां च मिथ्यादृशां सतां यथार्थश्रद्धानाभावाद् हेयानुपाददते उपादेयतया अभिमन्यन्ते

च कषायाऽऽश्रवादीन्, उपादेयाँश्च सुदेवसुगुरुसुधर्मसंवरनिर्जरादीन् कषायकलुषिततया मिथ्यात्वमोहितमतिकतयेन्द्रियविषयरसलोलुपतया च नोपाददते। न चोपादेयतया रोचयति। तथैवोपेक्षणीयानाऽऽक्रोशादीन् बालविहितानुपेक्षयति, तत्स्वभावपरिज्ञानेऽपि विशिष्टाहृताममतापरिकरितया कषायोदयस्यानिरुद्धप्रसरतया अनात्मवशवदतया च विदधते क्रोधादिकं, शातयति च लब्धात्मलाभानपि कथङ्कार यथाभद्रकादीनिति न तेषामुत्पन्नमपि ज्ञानं फलेग्रहि तत्त्वत। यच्चोपादीयते स्रक्चन्दनादि, हीयते कण्टकादि, उपेक्ष्यते च स्थाण्वादि, न तत्परमार्थतो विवेकतयाऽभिमन्तुं योग्यं देहात्मभ्रमवासनालब्धजन्मतया तस्य, तस्याश्च स्पष्ट एव भवभ्रमणनिदानतेति वराकाणां तेषां प्रत्युत ज्ञानादेव भवचक्रपरिभ्रमणमुदयते, इति तेषां भवहेतुर्ज्ञानमिति स्पष्टैवाज्ञानता ज्ञानस्य। ननु सम्यग्दृशामपि न विरतिर्नियता, चतुर्थगुणे विरतेरभावाल्लेशतोऽपि। पञ्चमे च सत्यामपि देशतो विरतौ बहुतराया अविरतेः सत्त्वात् कथं तेषां सम्यग्ज्ञानमिति चेत्, सत्यं, तेषां श्रद्धानं परं विद्यत एव। यद्यपि कर्मनियोगाद्विदधते हेयादिषु प्रवृत्तिं, नोपाददते वोपादेयं, तथापि न तदीया वाञ्छा तेषां, वाञ्छा तु तेषां हेयादेर्हानादावेव, यत आहुः—'एवं त्वपूर्वकरणात्सम्यक्त्वामृतरसज्ञ इह जीवः। चिरकालासेवितमपि न जातु बहु मन्यते पापम् ॥१॥ यद्यपि कर्मनियोगात्करोति तत्तदपि भावशून्यमलम्" इत्यादि। अपुनर्बन्धकताप्येवमेव—"पावं न तिव्वभावा कुणइ" इत्यादिवचनात्। न च श्रद्धानेऽपि प्रवृत्तिश्चेद् हेयेषु निष्फलमेव तेषामपि ज्ञानं मिथ्यादृशामिवेत्यज्ञानतैवेति वाच्यम्, तथाश्रद्धानादेवाल्पीयसा कालेनैव हेयादिहानादेरवश्यंभावात्। यदाहुः—"अत एव धर्मयोगात् क्षिप्रं तत्सिद्धिमाप्नोति" इति। यद्वा—सन्तु तेऽपि ज्ञानविकला एव।

न च कथ सम्यग्दृशा ज्ञानविकलत्वमिति वाच्यम्, यतो निश्चयनयेन फलवदेव कारणं प्रतिज्ञायते, कारकसम्यक्त्वस्यैव तेनाभ्युपगमात्, यमाश्रित्याभिसमीक्ष्यते सिद्धान्तोऽप्येव—"ज सम्मति पासहा त मोणति पासहा, ज मोणत्ति पासहा त सम्मति पासह" त्ति। न च भवति कदाचिदप्यनेनाभिप्रायेण ज्ञानिनो विरसा प्रवृत्तिर्मोहाद्यैरलितत्वाल्लेपे तैर्न तज्ज्ञानमेव। न हि भवत्यन्धतमस नितरा भाभरभासितभुवनाभोगे भास्वत्युदिते, तथोक्त—"तज्ज्ञानमेव न भवति यस्मिन्नुदिते विभाति रागगण। तमस कुतोऽस्ति शक्तिर्दिनकरकिरणाग्रत स्थातुम् ॥१॥" इत्यादि। अत एव च पारमर्षेऽप्यविरताना सम्यग्दृशामपि बालत्व जेगीयते। व्यवहारेण तु कुशूलस्थबीजानामङ्कुरकारणतावत् श्रद्धानस्यापि विरतिकारणतामविकलामनुसन्धायाभिधीयते, तेषामपि ज्ञानत्व, प्रत्यक्ष सम्यग्मिथ्यादृशोरध्यवसायतारतम्यानुभवात्। एतदेव सम्यग्दृशा प्रशमादिमत्त्व—यन्न क्रुध्यन्ति तथा, न च भवे रज्यन्ति। न च विहायापवर्गं परमानन्दपदमभिलषन्ति परमिति स्पष्टैव तेन ज्ञानिताऽभ्युपगम्यते तेषामविरताना, देशविरताना तु स्पष्टैव ज्ञानिता व्यवहारेण। निश्चयेन तूभयमेवाभ्युपगम्यते, यत उच्यते तेषा "बालपण्डितत्वमिति"। तत्त्वतस्तु हेयोपादेयोपेक्षणीयांस्तथात्वेन श्रद्दधानानां ज्ञानत्व सम्यग्दृशामविरताना देशविरताना वाऽभिप्रायसौष्ठवात्। अत एव चोच्यते—"सम्मद्दिट्ठी जीवो जइ वि हु पाव समायरइ किंची। अप्पो सि होइ बधो जेण न निद्धधसो होइ ॥१॥" इति। "समत्तमि उ लद्धे विमाणवज्जं न बधए आउ" इति च। न च वाच्य कथमभिप्रायसौष्ठवेऽनुचिता प्रवृत्ति. सम्पद्येत ?, तस्या अभिप्राये कुत्सिते सत्येव भावादिति। कर्मनियोगादित्यनेन पूर्वमेव समाहितत्वात्। सत्यभिप्राये

कुत्मिते स्पष्टमेव निरपेक्षत्व, तच्च नैव सम्भवति सम्यग्दृशाम्, यत एवोदित प्राक् "जेण न निद्धधसो होइ"त्ति। न च प्रवृत्तिमात्रस्याभिप्रायपूर्वकतानियम, सुप्तमूर्छितादावतिव्याप्तेः। अन्यादृशीय प्रवृत्तिरिति चेद्, अस्तु, न त्विच्छापूर्विका प्रतीकारतया वा प्रवृत्तेस्तीव्रेच्छारहितत्व स्पष्टमेव। तथात्व च बलवदनिष्टानुसन्धानादिति। अत एवोच्यते—"भवहेउओ"त्ति। न च मिथ्यादृशामिव सम्यग्दृशा ज्ञान भवकारणमपार्द्धपुद्गलेनाप्यपवर्गसमापत्ते, अन्येषा तु नानन्तैरपि नियम इति तेषा ज्ञानस्य भवकारणता। यद्वा—यएवाऽऽप्तागमः सम्यग्दृशा यथास्थितार्थविभासकः श्रद्धाविषयतया ससाराम्बुधिपारदेशी, स एवान्येषा ज्वरार्त्तांना घृतमिव व्याधिवृद्धि विपरीतबोधतयाऽवज्ञास्पदतया च भवविकारवृद्धिमेव तनुते। उदित च-"स्याद्वादरसायनमश्रद्दधान कुरुते वाचाटताऽपथ्य पुन. पुनर्निरङ्कुशतये"ति। यथार्थमेव तेषा ज्ञानस्य भवहेतुत्वम्। अन्यच्च—सम्यग्दृशा ज्ञान विलोकितलोकालोकाना भगवता केवलिनामुक्तेरनुसारेणावाप्नोति जन्म, वर्धते च, प्रामाण्यमपि तस्यैवेमे मन्वते यत्तदनुसारि "तमेव सच्चं निस्सक ज जिणेहि पवेइय" इतिविचारस्य सर्वत्रानुगतत्वात्, अनृतभाषिता च भगवता न कदाचिदपि सम्भवति, तद्धेतूना रागद्वेषमोहाना समूलकापकषितत्वात्। यत उच्यते—"रागाद्वा द्वेषाद्वा मोहाद्वा वाक्यमुच्यते ह्यनृतम्। यस्य तु नैते दोषास्तस्यानृतकारण कि स्यात् ॥१॥" इत्यादि। तथा च न सम्यग्दृशा यादृच्छिक ज्ञानम्। न च तेनाज्ञानसम्भवोऽखिलज्ञातृज्ञानानुसारिज्ञानत्वात्। अत एव स्थाने स्थाने पूर्वपुरुषैः 'केवलिनो विदन्ति, बहुश्रुता विदन्ती'ति वा दुर्गमनिर्णये व्यपदिश्यते। एष एव च श्रीमदकलङ्कदेवाकलङ्को महिमा-यत् नान्यथाऽन्यथाप्ररूपणा सिद्धान्तस्य। अन्येपा तु दृश्यत

एव विचित्रैकमप्याश्रित्य सिद्धान्तम् । यदाश्रित्योच्यते–"यदाऽर्जवादुक्तमयुक्तमन्यैस्तदन्यथाकारमकारि शिष्यै । न विप्लवोऽय तव शासनेऽभूदहो ! अधृष्या तव शासनश्री ॥१॥" तथा "स्वपक्ष एव प्रतिवद्धमत्सरा, यथाऽन्यशिष्या स्वरुचिप्रलापिनः । निरुक्तमूत्रस्य यथार्थवादिनो, न तत्तथा यत्तव कोऽत्र विस्मय ॥१॥" न चैतत्-स्वरुचिप्रलपित स्तुतिकृता, यत उपनिषदोऽभ्युपगच्छतामपि नैयायिक–वैशेषिक–साङ्ख्य–जैमिनीय–वेदान्तिना परस्पर विरुद्धा सहस्रश प्रलापा, आख्यायन्ते च तैरन्यथाकारमन्यथाकारमर्था. श्रुतीना स्वस्वरुचिविरचितैर्भिन्नभिन्नव्याख्यानै । विस्तरस्तु तत्तच्छासनशासितार्थावगमावगम्यो भेदो, लेशतो दर्श्यतेऽत्र, येन तेषा तदनुसारेणान्येषा च यादृच्छिकज्ञानवत्त्व प्रसिध्यति–वेदा एव तावत् कैश्चिदीश्वरप्रतिपादिता सकर्तृका पौरुपेया अभ्युपगम्यन्ते "वुद्धिपूर्वा वाक्यकृतिर्वेदे" इत्यादिना । तदा कैश्चित् स्वयमेवानादिसिद्धा इति व्यपदिश्यन्ते "तस्मादतीन्द्रियार्थाना, साक्षाद्रष्टुरभावत । नित्येभ्यो वेदवाक्येभ्यो, यथार्थत्वविनिश्चय ॥१॥" इति । उक्त तु शब्दपूर्वत्वमिति च यत आख्यायते । अत्र चिन्तनीय तावद्यत्सर्वस्वाभिलपितसिद्धिनिवन्धनेषु वेदेष्वपि न स्वरूपतो निर्णय । तथेश्वरविपयेऽपि न ते एकशास्त्रानुसारिणोऽपि कञ्चिदेक सिद्धान्तमाश्रिताः साङ्ख्यादिका । केचित्तावन्नाभ्युपगच्छन्ति, वेदान्तिनस्तु जगदुपादानरूपमभ्युपगच्छन्ति, नैयायिकवैशेषिकाः पुनर्दृश्यमानचराचरजगन्निमित्तकारणतया कक्षीकुर्वन्ति । आत्मानमप्याश्रित्य केचित् वेदान्तिन एक एवात्मा "एक एव हि भूतात्मा भूते भूते व्यवस्थित" इत्यभ्युपगच्छन्ति, प्रतिपादयन्ति च द्वितीयाद्वै भय भवति, तथा "नेह नानास्ति किञ्चन" इत्यादि । साङ्ख्यादिकास्तु जन्मादिव्यवस्थात पुरुपवहुत्वम्, तथा नाद्वैतश्रुतिविरोधो,

जातिपरत्वात् । तथा वामदेवादिमुक्तौ 'नाद्वैत'मित्यादि प्रतिपाद-यन्तोऽनेकात्मत्व स्पष्टयन्ति जीवात्मनाम् । अपि च—कैश्चित् "नि.सङ्गोऽय पुरुष·" इत्यादिना न कर्तृत्वमभ्युपगम्यते, अभ्युपगम्यते च प्रतिबिम्बोदयन्यायेन केवल भोक्तृत्वम्, तदाऽन्यै शुभाशुभकर्मणो कर्तृत्व भोक्तृत्व चेति द्वयमप्यभ्युपगम्यते । जीवात्मना मुक्तिरपि कैश्चित् पदार्थषट्कज्ञानात्, कैश्चित्तु षोडशपदार्थबोधात्, कैश्चित् ऋणत्रयापाकरणात्, कैश्चन ज्ञानमात्रात्प्रकृत्यादीना, कतिभिश्चाविद्यानिवृत्तिमात्रात्, इत्येवमनेकधोररीकृता । मुक्तिरपि कैश्चिच्छुभाशुभादृष्टक्षयरूपा, कैश्चनैकविंशतिदु.खध्वसरूपा, कैरपि प्रकृतिवियोगरूपा, कतिभिश्च ब्रह्माभेदरूपा, एकै कैश्चन तु विशेषगुणोच्छेदरूपा । कैश्चित्पुनर्न मुक्तिर्नच मुक्तिसाधनमभ्युपगत सर्वज्ञत्वाद्यभावादेवेति । कियन्तो दधिमाषभोजनात् कृष्णा विवेच्या· । एवमेव बौद्धानामपि योगाचार—सौत्रान्तिक—वैभाषिक-माध्यमिकाद्या विचित्रतमा भेदा. शून्य—क्षणिक—ज्ञानमात्रादि विचित्रवासनाविर्भावुक बुद्ध व्याकुर्वाणा· परस्परविरुद्धव्याख्यायका एकसूत्रानुयायिनोऽप्यवगन्तव्या । अत एवोक्त "यादृच्छिकोपलब्धिमन्तो मिथ्यादृश" इत्यज्ञानमेव तेषाम् । सम्यग्दृशा चातीन्द्रियार्थदृग्व्यक्तागमानुसारित्वेन परम्परागततदर्थसत्यताभिसन्धिमता च न कथञ्चनापि यादृच्छिकत्वम् । अत एवोच्यते-"सूत्रोक्तस्यैकस्याप्यरोचनादक्षरस्य भवति नर । मिथ्यादृष्टि सूत्र न प्रमाण जिनाभिहितम् ॥१॥" इति । तथा—"पयमक्खर च इक्क जो न रोएइ सुत्तनिद्दिट्ठ । सेस रोयतो वि हु मिच्छादिट्ठी मुणेयव्वो ॥१॥" इति । एतदेवाभिसन्धाय तत्त्वं निवारितोऽर्थभेदेऽपि व्यञ्जनभेदो व्यवहारेण । तत्त्वतस्तु तत्राप्यर्थभेदाभ्युपगमान्नयभेदेन, तथा च व्यञ्जनार्थतदुभयभेदनिवारणमेव विरुद्धव्याख्या-

पीति युक्तमेव स्वामिसाधर्म्यं वर्ण्यमानमिति। तथा लाभसाधर्म्यात्। यदा हि सम्यक्त्वमश्नुते देवो नारकोऽज्ञानत्रयान्वितो नरस्तिर्यङ् वा तदा मतिश्रुताज्ञानयोर्विनाशेन मतिश्रुतज्ञानयोर्लाभः, तथैव विभङ्गस्याप्यपगमेनावधिज्ञानस्य लाभो, मिथ्यात्वनिबन्धनत्वादज्ञानतायाः, ज्ञानतायाश्च निबन्धनं सम्यक्त्वमिति युक्त एव मिथ्यात्वस्यापगमे, लब्धे च सम्यक्त्वेऽज्ञाननाशेन सज्ज्ञानलाभो भवत्येव। विषवेगापगमे स्पष्टा चेतनक्रिया, विज्ञत्वे वा सफलत्व क्रियाणाम्। अत एव चार्वागदशपूर्व्याः परमश्रुतस्यापि मिथ्याज्ञानताव्यपदेश, परतस्तु "चउदस दस य अभिन्ने" इत्यादिना सम्यक्त्वनियमात् सम्यग्ज्ञानता, मिथ्याश्रुतमपि सम्यग्दृष्टिपरिग्रहपूतत्वेन सम्यग्ज्ञानमिति च "सम्यग्दृष्टिपरिग्रहपूत जयति श्रुतज्ञानं" तथा "ज पि कुप्पावयणीय" इत्यादि च सङ्गच्छते। आप्तोक्ततया चात्र जैनेन्द्रागमाना सम्यक्श्रुतता,यत्किञ्चिज्ज्ञाऽवीतरागोदितत्वेन चान्येषा मिथ्याश्रुतता व्यपदिश्यते। तत्त्वतस्तु परिग्राहकाध्यवसायविशेषेणैव समीचीनता विपरीतता वा श्रुतस्येति नैकस्मिन्नप्यनाश्वास इत्यल प्रसङ्गेन। तदेव काल-विपर्यय-स्वामित्व-लाभसाधर्म्यतो मतिश्रुतयोरानन्तरीयकतयाऽवधेरुपन्यास। तदिदमाहु पूज्यपादा —"काल-विवज्जय-सामित्त-लाभसाहम्मतो तओ अवहि"त्ति। ननु च चतुर्थस्थाने किमिति मन पर्यायमभिहित, न केवल ? इति चेदुच्यते-मानसमात्र-च्छद्मस्थत्व-विषय-लाभ-प्रत्यक्षत्वादिसाधर्म्यात्। यथा हि निखिलानि रूपिद्रव्याण्यवधिमान् समीक्षते विनेन्द्रियानिन्द्रियसाहाय्यम्, तथा मन.पर्यायज्ञान्यपि मनोलक्षणानि रूपिद्रव्याणि वेत्ति विनैवेन्द्रियानिन्द्रियसाहाय्यमिति रूपिद्रव्यलाभसाधर्म्य, मनोमात्रग्रहणादनेन। तथा यथा हि-च्छद्मस्थसन्नेवावाप्नुतेऽवधिज्ञान तथा मनःपर्यायज्ञानमपि। न हि मन प-

र्यायोत्पादेऽपि निखिलावरणविच्छेद कारण, न वैकीयमतेन केवलिना भगवता द्वयमप्येतद्भवति, परिमितवस्तुपरिच्छेदात्मकत्वादिन्द्रियवत्। केवल त्वनन्त, यतो द्वितीयमतेन सदपि नोपयोगीति प्रतिपादितमेव प्राक्। अथवा-यथा लब्धेऽपि तृतीयस्मिन्नवधिज्ञाने छद्मस्थ इति व्यपदिश्यते तद्वाँस्तथैव लब्धे मन पर्यायेऽपि व्यपदिश्यते इति च्छद्मस्थत्वसाधर्म्यम्। तथा विषयसाधर्म्यात्, यथा हि रूपीण्येव द्रव्याण्यभिगच्छत्यवधिमाँस्तथा मन पर्यायज्ञान्यपि। नैतयोरेकतरमपि वेत्त्यरूपाणि। न च वाच्य मन पर्यायवाँश्चिन्तित सञ्ज्ञिना पर्याप्तकेन वेत्ति, चिन्तित चारूपमपि स्यादिति कथ मन.पर्याय रूपिविषयमिति। चिन्तितान्न वेत्त्यदः साक्षात् किन्तु चिन्तापरिणतान्मनोद्रव्यपुद्गलानेव, चिन्तिताँस्तु बाह्यान् वेत्त्यनुमानेनैव "जाणइ बज्झेऽणुमाणाओ" इतिवचनात्। तथा चावधिमन.पर्याययो समान एव विषय। तथा यथा ह्यवधिज्ञान क्षायोपशमिकमुदीर्णक्षयादनुदीर्णस्य विपाकत उपशमेन, प्रदेशतो वेदनेन क्रमश स्पष्टतादिरपि भवत्यस्यैवमेव, तथा मन पर्यायमपि क्षायोपशमिकभावान्तर्गतमपि। केवलोत्पत्तेरनुपपत्तिरन्यथा। ततश्च भावसाधर्म्यम्। तथा यथा ह्यवधिज्ञान केवलमात्ममात्रहेतुकोत्पत्तिकतया प्रत्यक्षमिति व्यपदिश्यते तथा मन पर्यायमपि, ततश्च प्रत्यक्षसाधर्म्यम्। स्पर्शनादि तु साव्यवहारिक प्रत्यक्ष, न पारमार्थिकमिति तूक्तपूर्वमेव। तथा यथा ह्यवधिज्ञान विकलप्रत्यक्ष देशप्रत्यक्षीकरणाद्व्यपदिश्यते, तथा मन.पर्यायमपीति विकलतासाधर्म्यमिति। प्रतिपादितवन्तश्च जिनप्रवचनानुयोगभुवनाभोगप्रदीप्रदीपायमानातनुबुद्धिप्राग्भारा. श्रीजिनभद्रगणिक्षमाश्रमणपादा.—"माणसमेत्त-छउमत्थ-विसय-भावादिसामन्ना" इति। अत्रादिशब्देन प्रत्यक्षता-विकलतादिग्रह.। केवल तूत्तमत्वात्सर्वेपु यति-

द्वारार्गलायमान समापयति सम्यग्दृष्टिसाधनम्, तदनुसारिणां च न कदाचनापि यादृच्छिकज्ञानसद्भाव.। विवृत चात एव– "जिणमय मह पमाण" इत्यादि। तथा सम्यग्दृशा ज्ञान आश्रव–बन्ध–सवर–निर्जरा–मोक्षाऽनुगत्वेन यत्र तत्रोत्पद्यमान कल्पतेऽपवर्गपदप्राप्तये। एवमेव "जन्मभिरष्टत्र्येकै. सिध्य-न्त्याराधकास्तासा" इत्यादिना प्रतिपाद्यमान फल सङ्गच्छते। रीत्यैवाऽनया सुबुद्धचमात्यस्याश्वक्रीडनेऽपि दुर्गन्धतरपानीयपूर्ण-परिखाजलेऽपि न जुगुप्सा, किन्तु पुद्गलस्वभावचिन्तन, वासुदेव-स्यापि विदितसारासारविवेकस्य पूतिकुथितमण्डलदुर्गन्ध-विदारितनासिकादरेऽपि सैन्ये न मनागपि जुगुप्सा, किन्तु मरकततततिरिव विराजमाना च्छदतति समक्ष प्रशसिता सैन्यानाम्, यत्प्रभावान्निशमितपूर्वतत्प्रशसाकोऽमरोऽर्पयामास तस्मै रोगोपशामिनी भेरी प्रजावत्पाल्यमानप्रजोपकाराय याचिता तेनेति। अभयादीना चाप्यनेके धर्ममया प्रबन्धा राजसभागता. श्रूयन्ते। इदमेव च तेषा वैमानिकाऽऽयुष्कस्य कारणं समवगन्तव्यम्, पुण्यानुवन्धिपुण्यरूपत्वात् कुशलानुबन्धित्वात् पूर्वोक्तवदपवर्गानु-बन्धिता तेषामिति। न चैव परेषा, तेषा तु परिग्रहारम्भ-मग्नत्वेनाविदितबन्ध–मोक्षहेतूना प्रवर्त्तते बुद्धि: शाकिन्या बालवधे यत्र तत्र ममतान्धितया बुद्धया विचार। तथा च स्पष्टमेव तेषा ज्ञानफलाऽभाववत्परमार्थत तत्त्वतो हेयहानादिफलमाम्नायते आम्नायवेदिभि, तच्च न तेषामिति स्पष्टैवाज्ञानितेत्यनुसत्त्वे-यमनभिनिवेशेन। तदुक्तमेतत्सर्वमभिप्रेत्य भाष्यकारपादै –" सय-सयविसेसणाओ भवहेउओ जहिच्छिओवलभाओ। नाणफलाभावाओ मिच्छाद्दिट्ठिस्स अन्नाण ॥१॥" इति। सग्रहकारमिश्रैरपि "सदसतोरविशेषाद्यदृच्छोपलब्धेरुन्मत्तवत्" तथा "आद्यत्रयमज्ञान-

मपि भवति मिथ्यात्वसयुक्त" इत्यादि। कृतमतिप्रस्तुतेन। प्रस्तुत प्रस्तूयते। इदमत्र प्रस्तुत-यन्मिथ्यात्वावाप्तौ मतिश्रुतयोर्विपर्ययवत् प्राक्प्रतिपन्नस्यावधेरपि विपर्ययतेति मतिश्रुतानन्तरमवधेरुपन्यास इति। तथा य एव मतिश्रुतयो' स्वामी, स एवावधेरपि, त्रयाणामपि सम्यक्त्वहेतुकत्वात्। न च मतिश्रुते अन्तरा भवति लाभोऽवधे। न च वाच्य क्रमेणैवायं गतार्थ इति। न तावन्नियमोऽस्ति तादृशो यत्पूर्वज्ञानलाभे एवोत्तरज्ञानलाभ इति, विनाप्यवधिना मनःपर्यायोपलम्भादेशात् केवलावाप्त्युपदेशाच्च। कथमिति चेच्छृणुत—गृहस्थलिङ्गे स्त्रीलिङ्गेऽन्यलिङ्गे चावाप्यते केवल, न तेषा मनःपर्यायिज्ञानसम्भव, सयमादिनिबन्धनत्वात्तस्य। न चावधिज्ञानस्यापि नियमो, व्यपदिश्यते च अत एव ज्ञानद्वारेऽव्यञ्जिते व्यञ्जिते चैव—अव्यञ्जिते द्वाभ्या ज्ञानाभ्या सिध्यति त्रिभिश्चतुर्भिरिति। व्यञ्जिते द्वाभ्या मतिश्रुताभ्या, त्रिभिर्मतिश्रुतावधिभिर्मतिश्रुतमनःपर्यायैर्वा, चतुर्भिर्मतिश्रुतावधिमन पर्यायैरिति। अल्पबहुत्वद्वारे च सर्वस्तोका मतिश्रुतज्ञानसिद्धाः, मतिश्रुतावधिमन पर्याय-ज्ञानसिद्धाः सङ्ख्येयगुणा, मतिश्रुतावधिज्ञानसिद्धा सङ्ख्येयगुणा इति स्पष्ट एवात्र विनाप्यवधिं मन.पर्यायोपलम्भ केवलोपलम्भोऽपि च। पूर्वभावप्रज्ञापनीयनयापेक्षया चेदमिति नैवाशङ्कनीयम्। कथमकेवला सिद्धि'? । केवल तु सर्वेषामेवाश्रुत्वा केवलिनोऽपेक्ष्य श्रुतानियम वाऽपेक्ष्य। मतिज्ञानेन सह कथ नैकज्ञानसिद्धा इति तु नैव द्वापरयितव्यम्, समताभावाद्यनागमे केवलित्वस्यैवाभावात्। अश्रुत्वाकेवलित्वं विशिष्टश्रुतलाभापेक्षयैव गुरुपार्श्वादनधिगतश्रुतत्वापेक्षया वेति यत्किञ्चिदेतत्। यथा च विनावधिं मन पर्याय केवल, विना मन पर्यव वा केवल प्राप्नोति कश्चिन्न तथा विना मतिश्रुते लभतेऽवधिं कश्चना-

पीति युक्तमेव स्वामिसाधर्म्यं वर्ण्यमानमिति। तथा लाभसाधर्म्यात्। यदा हि सम्यक्त्वमश्नुते देवो नारकोऽज्ञानत्रयान्वितो नरस्तिर्यङ् वा तदा मतिश्रुताज्ञानयोर्विनाशेन मतिश्रुतज्ञानयोर्लाभ, तथैव विभङ्गस्याप्यपगमेनावधिज्ञानस्य लाभो, मिथ्यात्वनिबन्धनत्वादज्ञानतायाः, ज्ञानतायाश्च निबन्धन सम्यक्त्वमिति युक्त एव मिथ्यात्वस्यापगमे, लब्धे च सम्यक्त्वेऽज्ञाननाशेन सज्ज्ञानलाभो भवत्येव। विषवेगापगमे स्पष्टा चेतनक्रिया, विज्ञत्वे वा सफलत्व क्रियाणाम्। अत एव चार्वाग्दशपूर्व्याः परमश्रुतस्यापि मिथ्याज्ञानताव्यपदेश, परतस्तु "चउदस दस य अभिन्ने" इत्यादिना सम्यक्त्वनियमात् सम्यग्ज्ञानता, मिथ्याश्रुतमपि सम्यग्दृष्टिपरिग्रहपूतत्वेन सम्यग्ज्ञानमिति च "सम्यग्दृष्टिपरिग्रहपूत जयति श्रुतज्ञान" तथा "ज पि कुप्पावयणीय" इत्यादि च सङ्गच्छते। आप्तोक्ततया चात्र जैनेन्द्रागमाना सम्यक्श्रुतता, यत्किञ्चिज्ज्ञाऽवीतरागोदितत्वेन चान्येषां मिथ्याश्रुतता व्यपदिश्यते। तत्त्वतस्तु परिग्राहकाध्यवसायविशेषेणैव समीचीनता विपरीतता वा श्रुतस्येति नैकस्मिन्नप्यनाश्वास इत्यल प्रसङ्गेन। तदेव काल-विपर्यय-स्वामित्व-लाभसाधर्म्यतो मतिश्रुतयोरानन्तरीयकतयाऽवधेरुपन्यास। तदिदमाहु पूज्यपादाः—"काल-विवज्जय-सामित्त-लाभसाहम्मतो तओ अवहि"त्ति।
ननु च चतुर्थस्थाने किमिति मन पर्यायमभिहित, न केवल? इति चेदुच्यते-मानसमात्र-च्छद्मस्थत्व-विषय-लाभ-प्रत्यक्षत्वादिसाधर्म्यात्। यथा हि निखिलानि रूपिद्रव्याण्यवधिमान् समीक्षते विनेन्द्रियानिन्द्रियसाहाय्यम्, तथा मन पर्यायज्ञान्यपि मनोलक्षणानि रूपिद्रव्याणि वेत्ति विनैवेन्द्रियानिन्द्रियसाहाय्यमिति रूपिद्रव्यलाभसाधर्म्यं, मनोमात्रग्रहणादनेन। तथा यथा हि-च्छद्मस्थः सन्नेवावाप्नुतेऽवधिज्ञानं तथा मन.पर्यायज्ञानमपि। न हि मन प-

र्यायोत्पादेऽपि निखिलावरणविच्छेद. कारण, न वैकीयमतेन केवलिनां भगवता द्वयमप्येतद्भवति, परिमितवस्तुपरिच्छेदात्मकत्वादिन्द्रियवत्। केवल त्वनन्त, यतो द्वितीयमतेन सदपि नोपयोगीति प्रतिपादितमेव प्राक्। अथवा-यथा लब्धेऽपि तृतीयस्मिन्नवधिज्ञाने छद्मस्थ इति व्यपदिश्यते तद्वाँस्तथैव लब्धे मन पर्यायेऽपि व्यपदिश्यते इति च्छद्मस्थत्वसाधर्म्यम्। तथा विषयसाधर्म्यात्, यथा हि रूपीण्येव द्रव्याण्यभिगच्छत्यवधिमाँस्तथा मन पर्यायज्ञान्यपि। नैतयोरेकतरमपि वेत्त्यरूपाणि। न च वाच्य मन पर्यायवाँश्चिन्तित सञ्ज्ञिना पर्याप्तिकेन वेत्ति, चिन्तित चारूपमपि स्यादिति कथं मन.पर्याय रूपिविषयमिति। चिन्तितान्न वेत्त्यद. साक्षात् किन्तु चिन्तापरिणतान्मनोद्रव्यपुद्गलानेव, चिन्तिताँस्तु बाह्यान् वेत्त्यनुमानेनैव "जाणइ बज्झेऽणुमाणाओ" इतिवचनात्। तथा चावधिमन पर्याययो समान एव विषय। तथा यथा ह्यवधिज्ञान क्षायोपशमिकमुदीर्णक्षयादनुदीर्णस्य विपाकत उपशमेन, प्रदेशतो वेदनेन क्रमश. स्पष्टतादिरपि भवत्यस्यैवमेव, तथा मन पर्यायमपि क्षायोपशमिकभावान्तर्गतमपि। केवलोत्पत्तेरनुपपत्तिरन्यथा। ततश्च भावसाधर्म्यम्। तथा यथा ह्यवधिज्ञान केवलमात्ममात्रहेतुकोत्पत्तिकतया प्रत्यक्षमिति व्यपदिश्यते तथा मन पर्यायमपि, ततश्च प्रत्यक्षसाधर्म्यम्। स्पर्शनादि तु साव्यवहारिक प्रत्यक्ष, न पारमार्थिकमिति तूक्तपूर्वमेव। तथा यथा ह्यवधिज्ञान विकलप्रत्यक्ष देशप्रत्यक्षीकरणाद्व्यपदिश्यते, तथा, मन पर्यायमपीति विकलतासाधर्म्यमिति। प्रतिपादितवन्तश्च जिनप्रवचनानुयोगभुवनाभोगप्रदीप्रदीपायमानातनुबुद्धिप्राग्भारा: श्रीजिनभद्रगणिक्षमाश्रमणपादा –"माणसमेत्त-छउमत्थ-विसय-भावादिसामन्ना" इति। अत्रादिशब्देन प्रत्यक्षता-विकलतादिग्रह। केवल तूत्तमत्वात्सर्वेषु यति-

स्वामिकत्वात्। न च वाच्य गृहिलिङ्गादीनामपि केवलभावात् कथमेतदिति। लाभेऽपि तदवस्थाया न भावचारित्रेण विना केवलज्ञानलाभो। अनेन "सिज्झति चरणरहिया" इत्यपि व्याख्यात ज्ञेयम्। द्रव्यचारित्ररहिता इत्येव ह्यस्यार्थ । कषायमोहनीयादिक्षयस्य भावचारित्र विनानुपपत्तेर्युक्तमुच्यते यतिस्वामिकत्वसाधर्म्यम्, परमेतावान् विशेषो यद्भुत– मन पर्याय तु न द्रव्यचारित्रमन्तरापि। यद्वा–अवाप्तकेवलोऽवश्य सत्यायुषि प्रभूते द्रव्यप्रव्रज्ययापि प्रव्रजत्येव, अन्यथा देवादिकृतमहिम्नोऽयोगात्। स्पष्ट चैतद् भरतकेवलोदन्ते पुरन्दरस्य तथावचनेनेति, स्यादेव यतिस्वामिकत्वसाधर्म्यम्। यद्वा–यतिशब्देनाऽप्रमत्तता गृह्यते, परमार्थतस्तस्या एव यतित्वात्। तथा च यथा मन पर्यायमप्रमत्तस्य प्रादुर्भवति, तथा केवलमप्यप्रमत्तस्यैव। न च मतिश्रुतावधयस्तथेति युक्तमप्रमत्तस्वामिकत्वेन साधर्म्यमिति। तथाऽवसानलाभात्। सर्वावरणविच्छेदलभ्य ह्येतत्। न च लब्धे एतस्मिन्नन्यत् प्राप्तव्य ज्ञानमवशिष्यते लभ्यते वा। सूर्योदयेऽन्यतेजस्युदयानपेक्षणमिव। तदिदमाहु'–"अते केवलमुत्तम जइसामित्तावसाणलाभाओ"त्ति। न चेद प्रकृतमत्र, क्षायिकत्वेनास्य क्षायिकभावे परिगणितत्वात्, केवल क्रमख्यापनार्थं साधर्म्यं दर्शितम्। अत्र तु चतुर्णां क्षायोपशमिकाना मतिश्रुतादीना प्रस्ताव । व्युत्पत्तिस्तु ज्ञानपञ्चकस्य समयसागरादवसेया, विस्तारभयात् प्रायोऽन्वर्थसिद्धत्वाच्च नोक्ताऽत्र। तथा श्रुतमन पर्याययोर्भिन्नत्वेनानभ्युपगमो य. सोऽपि नयविचारापेक्षत्वादुपेक्षित। तथा अज्ञानत्रय मत्यज्ञानश्रुताज्ञानविभङ्गज्ञानरूप पूर्वोक्तमतिश्रुतावधिविपर्ययस्वरूपम्। न च वाच्य कथ नान्यज्ज्ञान मन पर्यायादि मत्यादिवदिति, पर्यन्तज्ञानयुगलस्य मिथ्यात्वसद्भावे उत्पादायोगात्, सति च तस्मिन्मिथ्यात्वोदयस्यैवाभावाच्च। तत

एवोच्यते "मतिश्रुतावधयो विपर्ययश्चे" [तत्त्वार्थ०] ति। तथा "आद्यत्रयमज्ञानमपि" इत्यादि च। ननु च कथं भवत्याद्यत्रय-स्याज्ञानता ?। न तावत् कर्मोदयात्, तथा सति तस्यौदयिकप्रकरण-पाठप्रसङ्गात्। सति चौदयिकत्वे ज्ञानाभावरूपमज्ञानं भवेत्, न तु कुत्सितं ज्ञानमज्ञानमित्यभिप्रेतरूपम्। सति च क्षायोपशमि-कत्वेऽस्यावरणविलयप्रभवत्वे आवार्यस्याज्ञानस्याभावात् स्पष्टमेव ज्ञानत्वापत्तिः, आवार्यस्याज्ञानत्वे च न किमपि प्रयोजनं क्षयोप-शमेनाज्ञानाविर्भावकेनेति चेत्, नैवम्, अभिप्रायापरिज्ञानात्, मिथ्यात्वसहचरितत्वेन ज्ञानस्यैवाज्ञानताव्यपदेशादिति पूर्वमुक्तमेव। एवमेव मिथ्यादृशामज्ञानावरणीयक्षयोपशम इत्यत्राप्ययमेव पन्था.। न ह्यज्ञानावरणाभिधानं कर्म पठ्यते कर्मप्रकृतिविवेचनेऽभियुक्तैः, किन्तु मिथ्यादृशां ज्ञानावरणक्षयोपशमेऽप्यज्ञानस्यैवाविर्भावादुप-चर्यते यदज्ञानावरणक्षयोपशम इति। सदसदविशेषादिना चाज्ञानता मिथ्यादृग्ज्ञानानामित्यपि निर्णीतमेव पूर्वम्। ननु च विभङ्गस्याव-धिविपर्ययत्वेन प्रत्यक्षरूपत्वात् कथं विपरीतबोधकत्वमज्ञानत्वं च कथं तदभावे इति चेत्, सत्यं, प्रत्यक्षपरोक्षताकृत एव हि भेदोऽत्र मतिश्रुतावध्योः, परं श्रद्धानाभावकृतमज्ञानत्वं तु कथञ्चनापि विषमतावहमिति तस्याप्यज्ञानता। ननु प्रत्यक्षे कथमज्ञानतेति चेत्, यथा घटादिप्रत्यक्षे मत्यादिमता तदज्ञानानि त्रीण्येवेति। तथा दर्शनेति। दर्शनत्रयं चक्षुरचक्षुरवधिसञ्ज्ञं तत्र, "चक्षिङ् व्यक्तायां वाचि" इति धातुस्तस्मादौणादिके "चक्षेः शिद्वा" [१००१] इत्युसि चक्षु.सिद्धिः। तथा च चक्षतेऽनेनेति, चष्टे वेति वा चक्षुः। प्रेक्षणीयं हि पदार्थमवेक्ष्यैव चक्षुषा चक्षते जनाः। ततश्च चक्षुर-क्षीत्यर्थः। तथा दृश्यते–प्रेक्ष्यते–सामान्येनाववुध्यतेऽनेनेति दर्शनं, दृष्टिर्वा दर्शनमिति सामान्यमुख्यको बोध.। व्युत्पत्तिद्वयेऽपि

"करणाधारयो" इति अनट्, "क्लीवे" इति चानट्। चक्षुषा चक्षुषो वा दर्शनं चक्षुर्दर्शनमिति। यद्यप्यत्र दर्शनशब्दो बोधार्थ एव सामान्येन तथापि विशेषबोधस्यावग्रहादिरूपस्य चाक्षुषमतिज्ञानरूपत्वात् सामान्यमुख्यको गृह्यते बोध, अत उच्यते–"जं सामन्नग्गहणमत्थाण नेव कट्टु आगार। अविसेसिऊणमत्थे दंसणमिइ वुच्चए समए ॥१॥" इति। पदार्थश्च सामान्यविशेषोभयात्मको यतस्ततो ज्ञानदर्शनयो क्रमेण विशेषाणां च सामान्यस्य च ग्रहणमिति। न च वाच्यं कथमनाकारं ग्रहणं स्यादिति स्वस्वोत्तरापेक्षया सामान्यत्वाद् विशिष्टाकाररराहित्यमनुसन्धेय, परमादिसामान्यग्रहस्यैव दर्शनत्वमिति। तथा च–"सामन्नमेत्तगहणं नेच्छइओ समयमोग्गहो पढमो। तत्तो णंतरमीहियवत्थुविसेसस्स जोऽवाओ ॥१॥" सो पुण इहावायावेक्खाओ वग्गहोत्ति उवचरिओ। एस विसेसाविक्ख सामन्नं गिण्हए जेण ॥२॥ तत्तोऽणंतरमीहा तत्तोऽवाओ य तव्विसेसस्स। इय सामन्नविसेसावेक्खा जावंतिमो भेओ ॥३॥ सव्वत्थेहावाया निच्छयओ मोत्तुमाइ सामन्नं। संववहारत्थं पुण सव्वत्थावग्गहो वाओ ॥४॥ तरतमजोगाभावे वाओ च्चिय धारणा तदंतम्मि"। इत्यपि सङ्गच्छते। सङ्गच्छते च "नाणमवायधिइओ" इत्यादि च। चक्षुरितरत्वेन विभागश्च दृष्टिव्यपदेशानुरोधेन, यद्वा–चक्षुषोऽबद्धस्पष्टग्रहणार्हत्वेन स्पष्टतादर्शनपरं, यत उच्यते–"पुट्ठं सुणेइ सद्दं रूवं पुण पासइ अपुट्ठं तु। गंधं रसं च फासं च बद्धपुट्ठं वियागरे ॥१॥" इति। दृश्यते च त्रुटयादे महत्त्वे सत्यपि न स्पार्शनविषयता, चाक्षुषविषयता तु तस्या अपि विद्यत इत्यनुभवेनापि चक्षुष पाटवमिति। यद्यपि मनोदर्शनमोघदर्शनं चाप्यचक्षुर्दर्शनेन व्यपदेश्यम्, पाटवतरत्वं च मनस, तथापि व्यवहारानुरो-

धेनेत्थं विभागः। तथाऽचक्षुषा-चक्षुर्वर्ज्यशेषेन्द्रियचतुष्केण "अचक्खु नपुमिच्छि सव्वे वि" इतिवचनादचक्षुर्दर्शनरहितस्य कस्याप्यभावान्मनोदर्शनमोघदर्शन चापि ग्राह्यम्। ननु चक्षुषा दर्शनमिति सर्वजनप्रसिद्धम्, पर कथमचक्षुषा दर्शनमिति चेत्, सत्यं, पश्यतिः सामान्यमुखबोधार्थक इह गृहीत। सामान्यमुख्यको बोधश्च शेषेन्द्रियादिरपि भवत्येव, अन्यथा विशेषबोधाभावाच्छद्मस्थानां सामान्यबोधपूर्वकत्वनियमाद्विशेषबोधस्येति। पठ्यते च–"आत्मवत्सर्वभूतेषु यः पश्यति स पश्यति"। तथा 'पृष्ठत उपसर्पन्तं सर्पं बुद्ध्वैव पश्यती'त्यादौ सामान्यबोधमात्रे पश्यति। कोशकारैरपि–"दर्शनं दर्पणे धर्मोपलब्ध्योर्बुद्धिशास्त्रयो। स्वप्नलोचनयोश्चापि," इति व्युत्पादित एव दर्शनशब्द उपलब्धौ ज्ञानसामान्यवाच्यायां बुद्धौ चेति। तथा च चक्षुरवधिकेवलव्यतिरेकज आत्मनि जायमान सामान्यबोधोऽचक्षुर्दर्शनशब्दाभिधेय इति निर्गलितोऽर्थः। केचित्तु "अचक्खु सेसिंदिय"त्तिवचनस्य नियामकतामङ्गीकृत्य शेषेन्द्रियज एव सामान्यबोधो दर्शनमित्याख्यान्ति। तथाऽवधिना–ऽधोऽधो विशेषपरिच्छेदकेन बोधविशेषेण दर्शनंसामान्यावगमोऽवधिदर्शन, सामान्यमात्रग्राहकत्वाच्च दर्शनाना न ज्ञानानामिव विपर्यय एषाम्। तथा च न मतिश्रुताज्ञानविभङ्गवदत्र दर्शनाना विपर्ययेण निर्देश। तथा च कथ नावधिदर्शनवद्विभङ्गदर्शन दर्शन नाभिमत ज्ञानवद्विपर्ययेणेति शङ्कोत्सादितैव, एवमेवादर्शनव्यपदेशशङ्कापि निरस्ता, सामान्ये तावद्विभागाभावात्। यद्वा–श्रद्धानाभावेन ज्ञान एव विपर्ययभावादिति। ननु च यथा अवधिज्ञानापेक्षयाऽवधिदर्शनमभिमत तथा श्रुतज्ञानमनःपर्यायज्ञानापेक्षया कथ न दर्शनद्वयमभिमतमिति चेत्, सत्य, श्रुतज्ञान हि मनोमात्रविषय मतिपूर्वक चेति गतार्थ, तद्दर्शनमचक्षुर्दर्शनेनेति।

तथा च श्रुतपश्यत्ताभिधानेऽपि न क्षतिः। न च क्षति श्रुतज्ञान्योघेन सर्वद्रव्याणि जानाति पश्यतीत्यादिवचनेऽपि। मन पर्याये तु नास्त्येव सामान्यग्रहणमिति न तद्दर्शनाभिलाप। सामान्यबोधेति नियमे चैतद्भिन्नत्वेन सङ्कोचात् श्रुतान्यथाऽनुपपत्ते ,अतीन्द्रिये चार्थे सद्भावप्रतिपत्तये नान्यदागमान्मानमस्तीति। पर्यायाणा च विशेषरूपत्वात्तदवगमे न दर्शनाकाङक्षेति निष्कर्ष। न च वाच्यमवधिदर्शनेन रूपिद्रव्यसामान्योपयोगरूपेण तदर्थकरणमिति। सति सभवनियमे एवेत्य वक्तु युक्तत्वात्, स एव तु न विद्यते, विनाप्यवधेर्मन पर्यायोत्पादात्, विना चावधिविभङ्गावधिदर्शनाभावादिति। तथा केवलं—सम्पूर्णार्थगोचर सामान्यग्राहि (दर्शनं) केवलदर्शनम्, तच्च भिन्ने समये एकस्मिन् वा समये केवलज्ञानस्याभिन्नं वा केवलादिति विविक्तनयापेक्ष विवृतं समयाम्बुधावुपयुज्य ज्ञानबिन्दूक्तरीत्या सङ्गमनीयं, क्षायोपशमिकप्रकरणत्वाच्च दर्शनमेवात्र प्रकृतम्, केवल तु गणितपूर्वं क्षायिके भावे इति। तथा 'दानादिलब्धय' इति। दानादीनि च पञ्च व्याख्यातपूर्वाणि क्षायिकप्रकरणे। ननु क्षायिके व्याख्यातानि तर्हि कथमत्राप्याख्यायन्त इतिचेद्, द्विविधानि हि दानादीनि—समूलघात घातितान्तरायकर्मोत्थानि तत्क्षयोपशमजानि च। आद्यानि पूर्वमुक्तानि, अन्त्यानि त्वत्रैव तदधिकारत्वाद्बोध्यानि। एव च सम्यक्त्वचारित्रे अपि त्रिषु व्याख्यायन्ते (यते) कथमित्यपि समाहितं ज्ञेयम्, तयोस्त्रैविध्यात्। क्षयोपशमाभावे च दानाद्यन्तरायाणामध्यक्षोपलभ्यमानाना दानादीनामसङ्गत्यापत्तेः। न च क्षयोऽत्र तेषा। तथा सति सर्वदा सर्वयोग्योपलम्भप्राप्ते। न चोपशमोऽप्येषामिति, सर्वथैतद्रहितत्वानुपलम्भात्, ओजआहारादेः सर्वेषा भावात्, "ओयाहारा सव्वे" इतिवचनात्। सूक्ष्मक्षयोपशमस्य वीर्यान्तरायस्याप्यभ्युपगम्य एव, अनन्यगतिकत्वाज्जीवन-

प्रयत्नस्योपशमे चावश्यपातभावात्, गत्यन्तरालेऽपि चास्त्येव क्षयोपशम ,चेतनादिसत्त्वादिति द्विविधानि दानादीनीत्येव सम्यग् । लब्धित्व चोपशमादित्रयान्यतमप्रभवत्वम्, इत्थमेव च सर्वा लब्धय साकारोपयोगोपयुक्तस्येति सङ्गच्छते, तस्यैवोपयोग-विशेषेणैवैतद्भावात् । उपयोगविशेषता च साकारतैव । ननु कथमर्हदादिपदवीनामौदयिकीनामपि लब्धित्व जेगीयते तर्हीति चेत्, क्षयादिहेतुता प्रतीत्यैव नान्यथा । अत एव च लब्धिवर्णना-धिकारे चक्रधरादिबलवर्णन सङ्गच्छते । ननु कथ तर्हि सत्यामप्य-ष्टाविंशतौ लब्धीना पञ्चैवैता ? अष्टाविंशतिश्चैव–"आमोसहि विप्पोसहि खेलोसही जल्लओसही चेव । सव्वोसही सभिन्ने ओही रिउविउलमइलद्धी ॥१॥ चारण आसीविस केवली य गणहारिणो य पुव्वधरा । अरहत चक्कवट्टी बलदेवा वासुदेवा य ॥२॥ खीर-महुसप्पिआसव–कोट्ठयबुद्धि–पयाणुसारी य । तह बीयबुद्धि तेयग आहारग सीयलेसा य ॥३॥ वेउव्विदेहलद्धी अक्खीणमहाणसी-पुलाया य । परिणामतवविसेसा एमाई हुति लद्धिओ ॥४॥"इति । न च वाच्यमुपलक्षणीभूता इमा , तथा सति पञ्चानामप्यग्रहण-प्रसङ्गात् इति चेत्, सत्य, पर सर्वा अपि तपोविशेषोद्भवा , तपश्च वीर्यान्तरायक्षयोपशमजम् । यत एवोच्यते–'विशिष्टज्ञानस-वेगशमसारमतस्तप. । क्षायोपशमिक ज्ञेयमव्याबाधसुखात्मक-[अष्टके]मिति । यश्च परिणामविशेष. सहकारितयाऽभिप्रेयते सोऽपि चारित्रादिनाऽत्र गृहीत एवेति न न्यूनता लब्धिपञ्चकोप-न्यासेऽप्यत्र । ननु किं तर्हि गृहीता अवध्याद्या स्पष्टमिति चेद्, आत्माऽसाधारणगुणत्वेन विनापि तपो भावाच्चेत्यल प्रसङ्गेन । चतु-स्त्रित्रिपञ्चभेदा' इति तु गतार्थमेव । एव प्ररूप्य क्षायोपशमिकान् पञ्चदश भावान् शेपाँस्त्रीनाहु 'सम्यक्त्वचारित्रसयमासयमाश्चे'ति।

ननु कथ पृथगुपन्यास एषामिति चेद्, एकैकैकेति सङ्ख्याया अनु-पन्यासेन लाघवायेति। कथ नैवमौदयिक इति चेत्, पर्यन्ते लेश्यो-पादानस्य सकारणत्वात्तासा पर्यन्ते उपादाने चावश्य सङ्ख्याया उपादेयत्वादिति। न च वाच्य सम्यक्त्व चारित्रं च 'सम्यक्त्व-चारित्रे' इत्येतस्मादौपशमिकादनुवर्त्तते एव, न चोपात्ते साक्षात् अत एव क्षायिके, किन्तूपरिष्टादाकृष्टे, तथाऽत्रापि विधेयम्, निर्देश्यश्च स्पष्ट केवल सयमासयम एवेति चेत्, सत्य, पर परिभापानभिज्ञताख्यापकमेतत्, यतो न सम्यक्त्वचारित्रे इत्यनु-वर्त्तिते क्षायिकसूत्रे, किन्तु चकारेणानुकृष्टे 'चानुकृष्ट च नोत्त-रत्रे'ति हि वैयाकरणाना समयः सुप्रसिद्ध एव। न च वाच्य नाकर्पणीये तर्हि चकारेण, एवमेवानुवर्त्त्येताम्, तथा सति च नात्र पुनर्निरूप्यम्, न च पूर्वसूत्रे चकार कर्त्तव्य इति चेत्, सत्य, लाघवमपेक्ष्यार्थस्यैव निर्देश , आचार्यस्य शैलीय वा लक्ष्यते—यत्र दीर्घमनुवर्त्तनीयम्, उद्देश्ये वा नानुवृत्तिरिति पूर्वं चकारेण पश्चाच्च साक्षान्निर्देश इति। तथा च तत्र तत्रोक्ततच्छन्दसाफल्य-मिति। यद्वा—निवृत्तिवाचकता चकारेणानुकर्पणे चकारस्याभि-प्रेत्येद स्पष्टितम्। यद्वा-अनुवर्त्तने सयमासयमाद् भिन्नत्व कश्चित्प्र-तिपद्येत, कार्य च स्याद्विशेपव्याख्यान वेति नानुवर्तितम्। केचि-त्त्वित एव भिन्नत्वेन त्रयाणां निर्देश स्वरसादित्याहु। अवान्तर-भेदाभावात् पार्थक्येन प्ररूपणानियमज्ञापनायैव निर्देश इत्यपरे। तत्त्व (तु) वहुश्रुता एव विदन्ति। अत्र सम्यक्त्व तत्त्वार्थश्रद्धा-नलक्षण, चारित्र सर्वसावद्यनिवृत्तिरूप सामायिकादीनामन्यतमम्, सयमासयमश्च स्थूलेभ्यो हिंसानृतस्तेयाब्रह्मपरिग्रहेभ्यो ज्ञात्वाऽभ्यु-पेत्याकरणमितिस्वरूपा विरति सूक्ष्मेभ्यश्च तेभ्योऽविरति , अविरतिश्चेपा परिहर्त्तुमशक्यत्वाद् गृहस्थत्वे न तु परिणामाभावात्,

अत एव बन्धवधादीनामतिचारत्वं सङ्गच्छते, भङ्गाभङ्गरूपत्वात्तेषाम् । न च वाच्य देशविरते सूक्ष्मत्वात् कुन्थ्वादिकाये छिद्रमिव न तस्या भङ्गाभङ्गरूपातिचारसम्पत्ति । अन्यच्च—"सव्वे वि य अइयारा सजलणाण उदयओ हुति । मूलच्छेज्ज पुण होइ बारसण्ह कसायाण ॥१॥" इत्यादिवचनात्तेषा प्रत्याख्यानावरणाद्युदये स्पष्टैव देशविरते क्षतिर्न त्वतिचारतेति । कुन्थ्वादिष्वपि स्वापेक्षया तथाविधच्छिद्रसत्त्वमिव अन्यथा तथाहाराद्यपरिणतेर्देशविरतेरपि स्युरेवातिचारा । "सव्वे वि य" इत्यादि च सर्वविरत्यपेक्षमिति न तदुदयतो देशविरतिक्षति । व्याख्यायते च कैश्चिदेषा गाथैव—यथा द्वादशाना कषायाणामुदये मूलच्छेद्यमित्यस्यैष परमार्थो यदुत—यथा सञ्ज्वलनास्तीव्रा मन्दा मध्या वाऽतिचारानाऽऽपादयन्ति,तथा नान्ये, किन्तु प्रत्याख्यानावरणोदये चारित्रस्य हतिरेव । एवमप्रत्याख्यानोदये देशविरतेरनन्तानुवन्ध्युदये च सम्यक्त्वस्यापीति पूर्वपूर्वकषायोदये पूर्वपूर्वस्य मूलच्छेद्यतेति । तथा च कथ नातिचारत्वमस्या, व्यपदिष्टाश्च साक्षादेव सूत्रप्रकरणयोरतिचारा अप्यस्या इत्यलमप्रस्तुतेन । इत्थमेव दिग्विरत्यादावपि शेषदिग्गमनानर्थदडसावद्यकरणादिभोगोपभोगोपयोगिसक्षिप्तेतरादिभ्यो विरतत्वादितरेभ्यश्चाविरतत्वात् स्पष्ट एव देशविरताना सयमासयम । तथा च पञ्चदशाना त्रिभिर्मेलने जाता एवाष्टादश । एते च क्षायोपशमिका । चकारश्चात्र मत्यादीनामवग्रहादिभेदज्ञापनाय, तेन श्रोत्रेन्द्रियलब्धिरित्याद्यनुयोगद्वारनिर्दिष्टेनापरिगणितशेषक्षयोपशमेन न विरोध । तथा च तत्सूत्र-"से किं त खओवसमनिप्फण्णे २ अणेगविहे पण्णत्ते, तं जहा—खओवसमिया आभिणिवोहियनाणलद्धी एव सुयओहिमणपज्जवनाण-मइअन्नाण-सुयअन्नाण-विभगनाणसम्मदसण-मिच्छादसण-सम्ममिच्छदसण-सामाइयचरित्त-च्छेओव-

ट्ठावण–परिहारविसुद्धि–सुहुमसपरायचरित्तलद्धी खओवसमिया चरित्ताचरित्तलद्धी खओवसमिया दाणलाभभोगोवभोगवीरियलद्धी खओवसमिया बाललद्धी पडियलद्धी खओवसमिया बालपडियलद्धी खओवसमिया सोइदियलद्धी जाव फासिदियलद्धी खओवसमिया आयारधरलद्धी जाव दिट्ठिवायधरे खओवसमिया नवपुव्वधरे जाव चोद्दसपुव्वधरे खओवसमिए गणीवायए, से त खओवसमनिप्फन्ने"त्ति। अत्र च सामायिकादिकाश्चारित्रभेदा बालपण्डितबालपण्डितत्वानि च केवलसम्यक्त्वचारित्रदेशविरतिहेतुका परिणामा. सम्यक्त्वादिकार्यभूता इति न पृथगुक्तेभ्यः। श्रोत्रेन्द्रियाद्याद्युपलब्धयश्च न मतिज्ञानचक्षुरचक्षुर्दर्शनेभ्यो भिन्ना लब्धीन्द्रियाणाँ क्षयोपशमस्वरूपत्वात्, तस्य च मत्याद्यावरणक्षयोपशमरूपत्वादुपयोगेन्द्रियाण्यपि मत्यादिरूपाण्येव, अत एव च क्षायोपशमिकानीन्द्रियाणि। न च केवलिनस्तानीति पठचते पूर्वोक्तयुक्तेन्तस्य मत्याद्यभावात्। द्रव्येन्द्रियाणि त्वौदयिक पर्याप्तनामकर्माश्रित्योद्भूतानि त्विन्द्रियाणि सन्त्येव यदपेक्ष्योच्यतेऽसौ पञ्चेन्द्रिय इति। आचारधरत्वाद्या गणिवाचकत्वावसानालब्धयस्तु स्पष्टमेव श्रुतज्ञानोदयजाता इति नाधिकाः क्षायोपशमिकभेदा। ननु प्रोक्तान्तर्भावेऽपि सामायिकादीना मिथ्यात्व–सम्यग्मिथ्यात्वयो कथ क्षायोपशमिकत्वम्। कथ वा नाभिहितौ तावत्र भेदौ, कुत्र वा अन्तर्भावनीयाविति चेत्, सत्य, मार्गानुसारिमार्गपतितादिभेदभिन्न मिथ्यात्व न मन्दतामन्तरेण तस्य, सा च क्षयोपशमप्रभवेति युक्त मिथ्यात्वस्यापि तथाविधस्य क्षायोपशमिकता। अत एव च मिथ्यात्वस्य गुणस्थानकतापि सङ्गच्छते। यद्वा–अव्यक्तमिथ्यात्वाद्व्यक्तमिथ्यात्वप्राप्तिर्न क्षयोपशममन्तरा, स च मिथ्यात्वस्यैवेति क्षायोपशमिकता तस्य। यत उच्यते–"व्यक्तमिथ्यात्वधीप्राप्तिर्गुणस्थानतयोच्यते" [गुणस्थान-

कक्रमारोहे] इति। यदि वा सत्यपि मिथ्यात्वोदयेऽनन्तानुबन्धिना मन्दत्वमध्यत्वभावो यथाभद्रकत्वादिनानुमेय.। स च न तन्मूल-मिथ्यात्वमन्दत्वाद्यन्तरेति योग्यमेवास्य क्षायोपशमिकत्वम्, अत एव च मिथ्यादृष्टित्वेऽप्युत्थितानुत्थितादिविकल्प. सङ्गच्छते इति। सम्यङ्मिथ्यात्वस्य तु द्विधा गतिस्तद्वता द्विधा गते·। केचित् प्राप्स्यत्सम्यक्त्वाः केचिच्च प्राप्स्यन्मिथ्यात्वा इति स्पष्टो मिश्रोदयेऽपि तरतमभाव·। स एव च क्षयोपशमाविनाभावीति क्षायोपशमिकता तस्य। न चात्र ते भिन्ने उदिते, सम्यक्त्वमूलत्वेन तयोस्तद्ग्रहणेनैव ग्रहणात्। तथा च नाधिका क्षायोपशमिका इति। भावचतुष्क-माख्याय क्रमनिर्दिष्ट पञ्चम (भाव) निर्दिदिक्षयाहु.—'परिणामे'ति। तद्धितलुगन्तनिर्देशात् पारिणामिक इति। तत्र यद्यपि परिणामशब्देन "नार्थान्तरगमो यस्मात् सर्वथैव न चागम । परिणाम प्रमासिद्ध इष्टश्च खलु पण्डितै." ॥१॥ इतिवचनात् पूर्वावस्थापरित्यागेनोत्तरावस्थापरिणतिरुच्यते। तथापि नात्र स गृह्यते, किन्तु पारिभाषिकतया स्वभाव एव। तथा च परिणामेन—स्वभावेन निर्वृत्तः पारिणामिक—स्वाभाविक इत्यर्थो निष्पद्यते। ननु किमिति पारिभाषिक. परिणामार्थ· परित्यज्यते इति चेत्, नहि जीवत्व-भव्यत्वादिकं नूतन येन तदर्थपरिग्रह समञ्जसतामापद्येत। स च त्रिधा, यदाहु—"जीवभव्याभव्यत्वादीनि च" [तत्त्वार्थ०] इति। तत्र जीवति जीविष्यति अजीवीत् इत्यौणादिकाऽप्रत्यये जीवः, तस्य भावः स्वरूपमवच्छेदकधर्मो वेति जीवत्वम्, तद्धि स्वाभाविकमेव। यतो न हि पूर्वमजीवस्य सतो जीवत्व भवति, येनादो न स्यात् पारिणामिकम्, किन्त्वनादिनिधन, जीवस्यानादिनिधनत्वात्, तदपि तस्य वीतरागजन्मादर्शनन्यायेनाकिञ्चिन्मयत्वादिना सिद्धमेव। तथा भविष्यति सिद्धिपर्यायेणेति भव्य.। तद्विपरीत-

स्त्वभव्य·। अत एव भव्याभव्यसिद्धिक इत्यप्युच्यमान सङ्गच्छत एव। भव्याभव्यत्वशङ्काया एव भव्यत्वनियामकत्वात् नैवाभव्यत्व-शङ्काया धर्मप्रवृत्तिविघातकता, प्राप्ताया च सिद्धौ नैवाख्यायते भव्याभव्ययोरन्यतरेण, प्राप्स्यमानत्वाभावात्। प्राप्तत्वाच्चेत् किं न तृतीयो भेद उभयविलक्षणत्वादस्येति। पूर्वप्रज्ञापनीयनयेन तस्य भव्यत्ववत्त्वात् द्रव्यभव्यत्व तत्रापि "भूतस्य भाविनो वा" इत्या-दिवचनात्। नोभव्यो नोअभव्य इति तु प्रथमस्य निषेधेन द्वितीय-स्यापत्ति ससारिषु द्वयो परस्परपरिहारेणावस्थानाच्छक्येत केन-चिदिति द्वितीयमपि न्यषेधि। तथा च तेन न भावान्तर व्याख्ये-यम्। तथा भव्यत्व चापि भव्यत्वविशेष एवेति न तदपि भिन्नम्। तथा च भव्यत्वमभव्यत्व चेति द्वयमेव। 'आदीनी'ति बहुवचना-न्तादिशब्दोऽत्र। तत्रादिना जीवस्य सामान्यपारिणामिका भावाः सूचिता। के ते? इति चेदाहु—अस्तित्व अन्यत्व कर्तृत्व भोक्तृत्व गुणवत्त्वमसर्वगतत्वमनादिकर्मसन्तानबद्धत्व प्रदेशवत्त्वमरूपत्वं नित्यत्वमित्येवमादय·। ननु च किमिति सम्यक्त्वादय कण्ठत उक्ता अस्तित्वादयश्चादिशब्देन सूचिता? इति चेत्, सम्यक्त्वा-दीना वैशेषिकत्वात् अस्तित्वादीना च सामान्यत्वात्। केन समानतेति चेद्, धर्मादिनाऽजीवेनेति गृह्णीत। नन्वस्त्वन्येपा धर्मादिभि समानत्वमस्तित्वादीना, पर कर्तृत्वभोक्तृत्वानादिकर्म-सन्तानबद्धत्वाना कथ तत्?। यतो न हि धर्मादीना तानीति चेद्, अपेक्षया तेषामपि तानि। यत स्वपर्यायाद्यपेक्षया कर्तृत्वभोक्तृत्वे कर्मसन्तत्युपग्रहादिना च कर्मसन्तानबद्धत्वम्, अन्यथा वा यथागम परिभावनीयानि। बहुवचनेन चादिशब्दोत्तरेणाजीवत्वादय सूचिताः। अजीवत्वमपि पारिणामिकमेव। यतो न हि वर्त्तमानजीवत्वस्य भविष्यदजीवत्वमस्ति, येनाजीवत्व न भवेत् स्वाभाविकम्। एवं

धर्माधर्माकाशपुद्गलत्वादयोऽपि ग्राह्या । न चैतत् स्वमनीषिका-विजृम्भितम् । यत उक्तमेव—"औपशमिकक्षायिकौ भावौ मिश्रश्च जीवस्य स्वतत्त्वमौदयिकपारिणामिकौ चे"त्यत्र मध्यभागे जीवस्य स्वतत्त्वमनुवदद्भिर्भाष्यकारैरजीवानामपि प्रान्त्यभावयुगलम् । एतदपि च न स्वमनीषिकया व्याख्यायते, यत आहु—"छद्धा जीवसमासो; परिणामुदओ अजीवाण"त्ति तथा धम्माधम्मागासा कालो त्ति य पारिणामिओ भावो । खंधादेसपएसा अणू य परिणाम-उदए य ॥१॥" इति । तन्नाजीवानां पारिणामिकभाववत्त्वाख्यान सूत्रोत्तीर्णमिति । एतच्च पारिणामिक स्वाभाविक इत्यर्थमुररीकृत्य ज्ञेयम् । यदि च पारिभाषिक परिणामस्यार्थः कक्षीक्रियते, तदापि न विरोध । कथं अनादीनां जीवत्वादीनां परिणामभवत्व ? तस्य सादित्वादिति चेत् । प्रतिक्षणभाव्युत्पादव्ययध्रौव्याक्रान्तत्वात् क्षण-विशिष्टतया भावाद्वाऽनादीनामपि भवत्येव भवनता । पठ्यते चातः-सर्वव्यक्तिषु नियत क्षणे क्षणेऽन्यत्वमथ च न विशेष । सत्योश्चित्य-पचित्योराकृतिजातिव्यवस्थानात् ॥१॥ इत्यादि । भावेऽपि च क्षणे क्षणेऽन्यान्यत्वस्य, नान्यथा परिणमन्ति ये तेऽनादिपारिणामिका इति तत्त्वम् । तत एव चोच्यते पूज्यपादै —"तद्भाव परिणाम । अनादिरादिमांश्चे"ति । [ तत्त्वार्थ० ] अत एव च 'रूपिष्वादि-मानि'त्ति पौद्गलिक पारिणामिक सादिपरिणामभावोऽप्याख्या-यमान सङ्गच्छते । न चैतत् स्वकल्पनाशिल्पिनिर्मितम्, यत सूत्र—"से किं त पारिणामिए भावे ?, पारिणामिए भावे दुविहे पण्णत्ते, त जहा—साइयपारिणामिए य अणाइयपारिणामिए य । से किं तं साइयपारिणामिए ?, साइयपारिणामिए अणेगविहे पन्नत्ते, त जहा—जुन्नसुरा जुन्नगुलो जुन्नघय जुन्नतदुला चेव । अब्भा य अब्भरुक्खा सज्झा गधव्वनयरा य ॥१॥ उक्कावाया दिसादाहा

विज्जू गज्जिया निग्घाया जूवा जक्खा लित्ता धूमिया महिया रउग्घाया चदोवराया सूरोवराया चदपरिवेसा सूरपरिवेसा पडिचदा पडिसूरा इदधणू उदग मच्छा अमोहा कविहसिया वासा वासहरा गामो नगरो घडो पव्वओ पायालो भवणो निरओ पासाओ रयणप्पभा जाव तमतमा, सोहम्मे जाव इसीपब्भारा, परमाणुपोग्गले जाव अणतपएसिए, से त साइयपारिणामिए । से किं त अणाइयपारिणामिए ?, अणाइयपारिणामिए अणेगविहे पन्नत्ते, त जहा—धम्मत्थिकाए जाव अद्धासमए लोए अलोए भवसिद्धिया अभवसिद्धिया । से त अणाइयपारिणामिए"त्ति । स्पष्ट एव ह्यत्र तथा तथा परिणामः पुद्गलाना सम्पद्यमान पारिणामिकतयाख्यात । ननु कथं पर्वतपातालनिरयादीना सादिपारिणामिकता प्रतिपादितेति चेत्, न ह्यसङ्ख्येयकालातिक्रमात् परमेकत्र तिष्ठन्ति पुद्गलास्तत्परिणामेन विपर्यये नूतने चाऽऽगते स्पष्ट एव पारिणामिकः सादिर्भाव. । न च द्रव्यावस्थानमन्तरेण धर्मादीनामिवानादित्वं युक्तियुक्त स्यादिति । एव च षष्ठ सान्निपातिक इति । तत्र सन्निपातो—द्व्यादिसयोगस्तेन निर्वृत्त सान्निपातिकः । तद्भेदाश्च षड्विंशति । कथमिति चेत्, क्रमोत्क्रमाभ्यां न्यसनीयमङ्कपञ्चकमुपर्यध. । १ २ ३ ४ ५ / ५ ४ ३ २ १ तत्र प्रथमपङ्क्तिगाऽधस्त्यपञ्चकाङ्कस्योपरितनेनैकेन भागे हृते पञ्च लभ्यन्ते, ते चैकसयोगा । आगताना पञ्चाना द्वितीयपङ्क्त्यधस्त्यचतुष्केण गुणने जाता विंशति, उपरितनेन द्विकेन भागे हृते लब्धा दश, एते च द्विकसयोगा । ते तृतीयोऽल्यधस्तनीयत्रिकेण गुणिता जाता. त्रिशत्, उपरिष्टात् त्रिकेण भग्ने लब्धा दशैव त्रिकसयोगा. । तेषा च चतुर्थश्रेण्यधरवर्त्तिना द्विकेन गुणने जाता विंशति, उपरितनेन चतुष्केण भागेऽपहृते लब्धा पञ्च चतुष्कयोगा । तेऽप्येककेनान्त्येन

गुणयित्वोपरितनेन पञ्चकेन भागहारे विहिते लब्ध एकः पञ्चक-योग.। सर्वे च मिलिता भवेदेकत्रिशत्, पर पञ्चैकसयोगा नात्र गृह्यन्ते, तेषा सान्निपातिकत्वाभावात्, द्व्यादिसयोगस्यैव सान्नि-पातिकत्वात्। तथा च शेषा षड्विशति. सान्निपातिकाः। एतेऽपि प्ररूपणामात्रोपयोगिनो, न सर्वे सम्भविन.। कति सम्भवन्तीति चेत्, षडेव। प्रस्तुतनिर्युक्तिक्रमप्रामाण्येनैव योजना–दशसु द्विक-सयोगेषु क्रमेणौपशमिकादिभिश्चतुर्षु औदयिकस्य लब्धेषु, औपश-मिकस्य क्षायिकादिस्त्रिभिर्लब्धेषु त्रिषु, क्षायिकस्य मिश्रपारिणा-मिकाभ्या द्वयोर्लब्धयोर्नवम क्षायिकपारिणामिकाख्यो भङ्ग सम्भवति सिद्धानाम्। शेषास्तु नवापि न सम्भवन्ति। यतः शेषाणामस्त्येवौदयिकी गति, क्षायोपशमिक क्षायिकं वा ज्ञानादिक, पारिणामिक च जीवत्वमिति जघन्यतोऽपि भावत्रय, तन्निषेध्या एव ते। तथा त्रिकसयोगेष्वपि दशसु औदयिकौपशमिकयोः क्षायिकादिभिर्योगेन त्रिषु व्यतीतेषु, औदयिकक्षायिकयोर्मिश्रपारि-णामिकाभ्या द्वयोर्भङ्गयो सम्पन्नयो, पञ्चम औदयिकक्षायिक-पारिणामिकलक्षण पञ्चमस्त्रिकसयोग सम्भवति। यत केवलिनो भगवत औदयिकी गति, क्षायिक ज्ञान, पारिणामिक च जीवत्व यतोऽस्ति। नास्त्युपशमोऽस्यैकादशगुणीयचतुर्थगुणीयत्वात्तस्य। यद्वा–मोहसत्तान्वितस्यैव तद्भावान्न चासौ केवलिनो, न चास्ति क्षायोपशमिकोऽप्यस्य च्छाद्मस्थिकज्ञानदर्शनाद्यतीतत्वेन, ततो न शेषभङ्गकसम्भव। षष्ठस्तु भङ्गक औदयिकक्षायोपशमिकपारि-णामिकाख्यस्त्रिकसयोगो नारकादिगतिचतुष्टयेऽपि ज्ञेयः। यतश्च-तसृष्वपि गतिष्वौदयिकी गति. स्यादेव। सर्वत्र क्षायोपशमिकानि चेन्द्रियाणि मत्यादीनि च, तथा पारिणामिक जीवत्व सम्भवति। ततः शेषाणामसम्भवादष्टौ त्रिकसयोगा प्ररूपणामात्रोपयोगिनो,

न तु सम्भवन्ति । चतुष्कसंयोगेषु त्वौदयिकौपशमिकक्षायोपशमिकपारिणामिकाख्यभावचतुष्टयनिर्वर्त्तित सर्वास्वपि गतिषु सम्भवति, गत्युपशमसम्यक्त्वेन्द्रियजीवत्वसद्भावात्, भवति च तद्वर्तिना प्रथमसम्यक्त्वलाभ । तत्र चौपशमिकमेव सम्यक्त्वम् । तथौदयिकक्षायिकक्षायोपशमिकपारिणामिकभावाख्यश्चतुर्थ सर्वास्वपि गतिषु सम्भवति, पूर्वोक्तषष्ठत्रिकयोगभावनाया क्षायिकसम्यक्त्वमोचनेन तथाभावात् । पञ्चकसयोगस्त्वेक । स च नरगतावेव सम्भवति । यतोऽसावुपशमश्रेणि प्रतिपन्नस्य क्षायिकसम्यग्दृष्टेर्भवति, न चैवमन्य इति । समुदिता एते—द्विकसयोग एक, त्रिकसयोगौ द्वौ, चतुष्कसयोगौ द्वौ, एक एव च पञ्चकसयोग इति संभविन षडेव । अत्रापि चैकस्त्रिकसयोगो द्वौ च चतुसयोगौ गतिचतुष्टयेऽपि लभ्यन्ते, ततो द्वादश ते विवक्ष्यन्ते । ततश्च पञ्चदशविध सान्निपातिक इत्यपि वक्तु शक्यते । यत उक्त—
"ओदइयखओवसमिए परिणामिएक्केक्को गइचउक्के वि । खयजोगेण वि चउरो तयभावे उवसमेण चि ॥१॥ उवसमसेढी एक्को केवलिणो विय तहेव सिद्धस्स । अविरुद्धसंनिवाइयभेया एमेते पन्नरसग ॥२॥" त्ति । ननु च किमिति सान्निपातिकस्य भावत्व ?, यतो न हि ततो भवति कोऽपि गुणविशेष । न च व्याख्यातोऽपि शास्त्रकृद्भिरिति चेत्? सत्य, परस्परसमागमदर्शनायैवैतन्निरूपणम् । तथा च सम्भव्यभव्युपयोग स्यात्, अत एव चान्यत्र पञ्चैव निरूप्यन्ते भावा 'औपशमिकक्षायिकौ भावा'वित्यादिना, यद्वा—स्रयोगविशेषेण गुणविशेषदर्शनाय । यथा ज्ञानक्रियाभ्या समवेताभ्या साध्यतेऽपवर्गस्तथा लब्धमनुष्यभवलक्षणौदयिकभावानामेव सर्वविरतिरित्यादि अवगम्येत सान्निपातिकेनेति तत्प्ररूपणा । तदेव प्ररूपितं भावषट्क प्रकृते योजयन्त आहु—"छव्विहो भावलोगो

अ"त्ति । तत्र षट् औदयिकादयो विधा -प्रकारा यस्यासौ षड्विध., नास्त्यन्यो भाव एतेभ्य इत्यन्यूनता सर्वेषामपि पदार्थानामेषु प्रत्यवतारात् । कोऽसावित्याहु –'भावलोक'इति । तत्र भाव इति द्रव्यादिव्यवच्छेदेन शुद्धभावप्ररूपणाज्ञापनाय तथा भावभूतो लोको, विलोकनीयत्वात् पदार्थमात्रस्य वाऽत्रालोकनादन्तर्भाविनेति भाव-लोको,भावेन वा पर्यायप्राधान्येन भावानुगततया लोको भावलोक । भावा वा समुदिता लोको भावलोक. । चकारोऽस्यापि द्रव्यादि-लोकवद्विवक्षापरत्वसूचक ॥७॥

प्रकारान्तरेण भावलोकमेवाहु –

**तिव्वो रागो अ दोसो य, उइण्णा जस्स जंतुणो ।**
**जाणाहि भावलोग, अणतजिणदेसिअ सम्म ॥८॥**

व्याख्या–तत्र तीव्र –उत्कटो मन्दमध्ययोरविवक्षितत्वात्, न पुनरेतावता न तस्य भावलोकता । यद्वा–तीव्रभावस्य लोक्यत्वेन लोकत्वाभिसन्धानात्तस्यैव ग्रहणम् । कोऽसावित्याहु –रागश्चेति, तत्र रज्यतेऽनेनात्मरमणतामात्मस्वभाव वा विहाय परेषु पौद्ग-लिकेषु स्रक्चन्दनादिष्विति रागो–रागमोहनीय, यन्मायालोभक-षायमोहनीयमिति व्यपदिश्यते "मायालोभकषायावित्येतद्राग-सञ्ज्ञित द्वन्द्व"[प्रशम०] मितिवचनात् । रञ्जन वा राग - प्रीतिलक्षण । चकारस्तत्सहचरितनोकषायनवकस्य तन्निर्वर्तितप्राण-वधादेर्वा परिग्रहाय । तथा द्विष्यतेऽनेन जन्तु कण्टकादिषु दु.ख-साधनेषु इति द्वेषो– द्वेषमोहनीयो, यत्क्रोधमानमोहनीयमिति व्यपदिश्यते 'क्रोधो मानश्च पुनर्द्वेष इति समासनिर्दिष्ट' इति । द्वेषण द्वेषोऽप्रीतिलक्षण । चकारोऽत्रापि पूर्ववत् । अत्र प्राग्रागो-पादान तस्य दुरुच्छेद्यत्वप्रतिपादनाय 'मुक्खमग्गपवन्नाण सिणेहो वज्जसिखला । वीरे जीवतए जाओ गोयमो ज न केवली ॥१॥'

इति वचनात् । द्वेषो वा रागमूलक एवेति ज्ञापनाय, इष्टेषु रक्तो हि जन्तुस्तदपकारिषु द्वेष्टि। एतावेव च परमपदप्राप्तिप्रतिबन्धकौ, ससारेऽपि च सुखकल्पवल्लीकृपाणदु खदावदवकाष्ठकल्पौ। यदुक्त–"को दुक्ख पाविज्जा कस्स व सोक्खेहि विम्हओ होज्जा। को वा न लभिज्ज मुक्ख रागद्दोसा जइ न हुता ॥१॥" इत्यादि। ननु कथ ज्ञानावरणादीनामुत्कटत्व विहाय मोह एव प्रस्तुत इति चेत्? साम्परायिको हि ज्ञानावरणीयादीनामाश्रव, स च सकषायस्यैवेत्येव व्यपदेश:। तौ किमित्याहु:–"उइण्ण" त्ति। उदीर्णाविहायाऽवाधावस्थामुदयावस्थमितौ। ननु किमिति शेषा बन्धाद्या अवस्था उपेक्षिता इति चेद्? उदयाधीनत्वाद् बन्धादीनामन्यच्च–विहितेऽपि बन्धे यदि विधत्ते क्षयमपि प्रदेशवेदनसङ्क्रमापवर्त्तनादिना नोदिते इति स एव गृहीत इति। कस्येत्याहु–"जस्स जतुणो"त्ति। यस्य कस्यापि, अनेन सामान्यनिर्देशेन वक्तुर्माध्यस्थ्यं ख्यापित भवति। तथाविधादेव वक्तुस्तत्त्वाभिगमसम्भवात्। पठ्यते च–"आग्रही बत निनीषति युक्ति, तत्र यत्र मतिरस्य निविष्टा। पक्षपातरहितस्य तु युक्तिर्यत्र तत्र मतिरेति निवेशम् ॥१॥ इति। न हि व्यक्तिविशेषस्यैवापकारकौ रागद्वेषौ, नान्येषामिति पक्षपातो मध्यस्थमनोवृत्तेर्विदधाति काञ्चन शोभाम्, जैनेन्द्रमत तु निष्पक्षपातम्, आस्ता परेषु पक्षपातवार्ता, यावन्न भगवति जिनेन्द्रेऽपि पक्षपातो [नैव] शोभायायिति सिद्धान्तात्। तदुक्त–"न श्रद्धयैव त्वयि पक्षपातो, न द्वेषमात्रादरुचि परेषु। यथावदाप्तत्वपरीक्षया तु, त्वामेव वीर! प्रभुमाश्रिता स्म. ॥१॥" इति यस्य कस्यापि कस्येत्युक्त जीवस्येति। न च नार्थोनेन, अजीवस्य तदभावादिति वाच्यम्, अनेन हि ये जीवस्य शुद्धत्वमभिधार्य रागद्वेषौ मायाप्रत्ययौ अविद्याप्रत्ययावनभिसन्धाय जीवसत्ता शुक्रहेतुको राग

पित्तहेतुको द्वेष इत्याद्याचख्यु:, तन्निरासायैतस्यावश्य वाच्यत्वात् । न चैवविधौ रागद्वेषौ स्यातामात्मापकारकौ, किन्तु यथोदितौ जीवेनासम्बन्धे कथ प्रतिनियतापकारकारित्वमनुभूयमान युज्येत ? कथञ्चनापि सम्बन्धे चात्मना तयो: स्वीक्रियमाणे स्पष्ट एव जीवेन सम्बन्धोऽनयो: । युक्तियुक्तश्चायमेव पक्षो, अन्यथा भिन्नस्य मुक्तस्येव कथमस्य ससार्यात्मनोऽपकारकौ स्यातामेताविति । शुक्राद्यतिरेकश्च कथ वैचित्र्येण सम्पद्येतेति सिद्ध्येदेवार्थापत्त्या जीव:, तद्विचित्रतया च कर्म, तद्धेतुकौ च रागद्वेषावित्यल प्रसङ्गेन । यद्वा-भावलोकतया व्याख्येयत्वेन स्पष्ट निर्दिष्टो 'जीवो' जन्तोरिति । असौ किमित्याहु:-"जाणाहि भावलोग"ति । जानीहीति शिष्यावधानाय क्रियानिर्देश: । यद्वा-हेयत्वेन निर्दिदिक्षवोऽपि रागद्वेषौ नैव निर्दिष्टौ, धर्मिणोऽहेयत्वात्, धर्मस्य हेयताऽपि च न ज्ञानमन्तरेति जानीहीत्यूचु । भावलोकमिति सञ्ज्ञानिर्देशो, जन्तुश्चात्र पूर्वप्रतिपादितावस्थ सञ्ज्ञितया ज्ञेय. । सञ्ज्ञा चेयमन्वर्था, न तु यादृच्छिकी गुणशून्या वेति तु स्वयमूह्यम् । भावलोकसञ्ज्ञाया: प्रामाण्यनिर्देशायाहु. "अणतजिणदेसिय"ति । तत्र रागद्वेषजेतारो जिना । अनन्तजिनदेशितमिति च जिनाना सर्वेषामविप्रतिपन्नतादर्शनाय, अन्यथा जिनदेशितत्वमात्रेणैव प्रामाण्यात् । न हि च्छद्मस्थानामिव जिना. परत: प्रामाण्यभावमापन्नवचनवादिन:, अप्रामाण्यहेतुरागद्वेषविलयात् । तयोरसत्यवचोहेतुत्वनियमस्तु 'रागाद्वा द्वेषाद्वे'त्यादिना स्पष्ट एव । केचित्त्वनन्तेत्यत्र लुप्तविभक्तिकनिर्देशमाख्याय भावलोकमित्यनेनैवानन्तमिति योजयन्ति । व्याख्यान्ति च तादृशरागद्वेषपरिकलितजन्तूनामानन्त्यादनन्तो हि भावलोक इति । अनन्तसङ्ख्या च यद्यपि च्छद्मस्थसातिशयज्ञानिज्ञानवेद्या, तथापि जन्तूनामरूपित्वाद् विना केवल प्रत्यक्षाभा-

वाद्रागाद्युदयोऽपि न यथावदितरज्ञेय इत्युक्त 'जिनदेशित'मिति। एतच्च भावलोकस्य प्रामाण्यज्ञापनायैव, न चैव यथाकथञ्चिद् ग्राह्यम्, तथाग्रहणे हि द्रव्यसम्यक्त्वस्यैव भावात्। भावसम्यक्त्व तु प्रमाणनयनिक्षेपनिर्देशसदादिद्वारैरेव पदार्थानामवगमे इत्याहुः- "सम्म"ति। न च वाच्य कथ तर्हि "तमेव सच्च नीसक ज जिणेहि पवेइय"ति। तद्वचनस्यासद्बाधकासत्साधनसूक्ष्मयुक्ति-गम्यपदार्थस्थलीयत्वात्। तदुक्त "परीक्ष्य भिक्षवो! ग्राह्य मद्वचो न तु गौरवात्"। तथा-" ते पश्चात्परितप्यन्ते ये गृह्णन्त्यवि-चारितम्" इति। ननु कथ तर्हि सम्यक्त्वस्य श्रद्धानात्मकतेति चेत्। दृष्टेष्टाविरुद्धतया यथार्थवादित्वनिर्णयेन दृश्यमानेषु चाविरुद्धतया निर्णीतेषु, न तु यथाकथञ्चिदिति। यद्वा-जिनप्रणीताना सत्यत्व-मवधार्य शास्त्रकर्त्तारो लक्षयन्ति सम्यक्त्व-यद्यथा जिनैरभिहिता-स्तथा चेच्छ्रद्दधाति जीवादि देवादि वा तदा सम्यक्त्वमिति। तथा च नासदभिनिवेशस्तद्वताम्। अनेन य आहु -पुराण मानवो धर्मःसाङ्गो वेदश्चिकित्सितम्। आज्ञासिद्धानि चत्वारि न हन्तव्यानि हेतुभिः ॥१॥" इत्यादि, (ते) निरस्ताः। यत उच्यत एव तत्र- "निर्दोष काञ्चन चेत् स्यात्परीक्षाया विभेति किम्। सदोष काञ्चनं चेत्स्यान्न परीक्ष्य(क्षा)प्रयोजनम् ॥१॥" इत्यादि। न च वाच्य हन्तव्यानीत्यस्य हेतुभिर्गम्यानीत्येवार्थ, तथा च तद्वर्क्तृणा सामर्थ्यं द्योत्यते इति। प्रथम तावदत्र हन्तेर्गमनार्थताया एव काव्यकल्पसमयविरुद्धतासङ्गते। अन्यच्च-न प्रयोजन हेतुपरीक्षा-निषेधेन। न हि मुद्रान्वितं सुवर्णमिति निषिध्यन्ते परीक्षका व्यवहारिभिः। न चोशन्ति कदाचिदप्येव-यन्नास्य कषो देय इति। न चैद वचन साक्षरससदि शोभा काञ्चनाऽऽसादयति प्रयोक्तुस्तन्नेद योग्यमुक्तिसु मनीषिणाम्। जैनेन्द्र वच एवमुद्घुष्यते-

"इमा समक्ष प्रतिपक्षसाक्षिणा–मुदारघोपामवघोपणा ब्रुवे। न वीतरागात् परमस्ति दैवत, न चाप्यनेकान्तमृते नयस्थिति ॥१॥" तथा–"पक्षपातो न मे वीरे न द्वेष कपिलादिषु। युक्तिमद्वचन यस्य तस्य कार्य परिग्रह ॥१॥" इति। भावलोकस्य प्रकारान्तरताख्यान च 'विवक्षाधीनानि कारकाणी'तिवद्विवक्षाधीनैव वाक्पद्धतिरिति सूचनाय, प्रतिपादितेष्वौदयिकादिषु भावेषु षट्सु ग्राह्यौपशमिकक्षायिकक्षायोपशमिकभावत्रयप्रतिबन्धकमूलज्ञापनेन सम्यक्सिद्धिपुरपथप्रवृत्ताना रागद्वेषह्रासस्यावश्य विधेयताज्ञापनायेति वा ॥८॥ इत्येवमाख्याय द्रव्यक्षेत्रकालभवभावलोकान् व्याख्येयान्, शेष क्रमप्राप्त पर्यायलोक व्याचिख्यासयाऽऽहु –

**दव्वगुणखित्तपज्जवभवाणुभावे अ भावपरिणामे।**
**जाण चउव्विहमेअं पज्जवलोग समासेण ॥९॥**

व्याख्या–तत्र द्रवति ताँस्तान् पर्यायानिति द्रव्य, गुणपर्यायवद्द्रव्यमित्यर्थ। द्रव्य हि पुरातनान् विहाय पर्यायानवाप्नोति नूतनान्, स्थिरत्वात्तस्य। स्थिरत्वमपि द्रव्यपर्यायोभयात्मकत्वेऽपि वस्तुनो द्रव्यत्वापेक्षयैव। सापि अर्पितानर्पितसिद्धेरिति। यद्वा–द्रूयते–स्ववृत्तिगुणपर्यायैर्मुच्यते नवीनैश्चाश्रीयते, व्याप्यते वा स्ववृत्तिगुणपर्यायैरिति द्रव्य गुणपर्यायाश्रयतया। यदाहु –

"गुणाणमासओ दव्व एगदव्वस्सिआ गुणा। लक्खण पज्जवाण तु उभओ अस्सिआ भवे ॥१॥" इति। न च सयोगादीना द्व्याश्रितत्व यतो, न तत एकद्रव्यनिश्रितता युक्ता गुणानामिति। तेपा पर्यायात्मकत्वात्। यद्वा–द्रो महासत्ताया भव्य योग्य द्रव्य "द्रोर्भव्ये" इतिवचनात्। यत सद्द्रव्यमिति पठ्यतेऽपि, द्रोरवयवो वा द्रव्य, सदभिधेय पदार्थव्रजो हि महासत्तावानुच्यते, द्रव्य च तदेकदेशत्वादवयव एवेति, विकारो वा द्रोर्गुणवत्तान्वित एव

शिक्षितो भरतो युगादिदेवेन । तदेतत् सर्वं द्रव्यलक्षणमभिप्रेत्योदाहृत महाभाष्यकारैः—

"दवइ दुयए दोरवयवो विगारो गुणाण सदावो । दव्व भव्व भावस्स भूयभाव च ज जोग्ग ॥१॥" इति । तदेवविधस्य द्रव्यस्य द्रव्यशब्दवाच्यस्य वा धर्माधर्माकाशपुद्गलकालजीवलक्षणस्य गुणा—सहभाविनो धर्माः । एष गुणपर्याययोर्विशेषो यदुत—सहभाविनो गुणा, क्रमभाविन पर्याया इति । द्रव्याविष्वग्भावेनेति तु प्रकृतमध्याहार्य वा । तथा च यत्र गुणपर्यायरूपेण निर्देशो धर्माणा तत्र गोबलीवर्दन्यायेन गुणव्यतिरिक्ता धर्मा पर्यायतया ग्राह्या । यत्र च केवला. पर्याया एव व्यपदिश्येरँस्तत्र तु यावद्धर्मा अपि पर्यायशब्देन गृह्यन्ते । तथा च यथा द्रव्यार्थिकपर्यायार्थिकभेदेन नययुगल वर्ण्यते, तथा कथ न तृतीयो वर्ण्यते गुणार्थिक इति, तन्निरस्तम् । यदाहुर्दिवाकरपादा —

रूवरसगंधफासा असमाणग्गहणलक्खणा जम्हा । तम्हा दव्वाणुगया गुणत्ति ते केइ इच्छंति ॥१॥ दूरे ता अन्नत्त गुणसद्दे चेव तावपारिच्छ । ज पज्जवाहिओ होज्ज पज्जवे चेव गुणसण्णा ॥२॥ दो पुण नया भगवया दव्वट्ठियपज्जवट्ठिया नियया । एत्तो वि गुणविसेसे गुणट्ठिअनओ वि जुज्जतो ॥३॥ ज च पुण अरहयातेसु तेसु सुत्तेसु गोयमाईण । पज्जवसण्णा नियया वागरिया तेण पज्जाया ॥४॥ परिगमण पज्जाओ अणेगकरण गुणो त्ति एगन्था । तह वि न गुणो त्ति भण्णइ पज्जवनयदेसण जम्हा ॥५॥" इत्यादि । गुणाश्च सामान्यविशेषभेदेन द्विविधा । तत्र आद्या अस्तित्व वस्तुत्व सामान्यविशेषात्मकत्व द्रव्यत्व प्रमेयत्व प्रदेशत्व चेतनाचेतनत्व मूर्त्तत्वममूर्त्तत्व चेति दश,प्रत्येकमष्टाष्टौ,चेतनाचेतनत्वयोर्मूर्त्तत्वामूर्त्तत्वयोश्च परस्परपरिहारेणावस्थानात् । अन्त्यास्तु ज्ञानदर्शनसुखवीर्यस्पर्श-

रसगन्धवर्णा गतिहेतुत्व स्थितिहेतुत्वमवगाहनहेतुत्व वर्त्तमानहेतुत्व चेतनत्वमचेतनत्व मूर्त्तत्वममूर्त्तत्व चेति षोडश। तत्र धर्माधर्माकाशेषु गतिहेतुत्वाचेतनत्वामूर्त्तत्वानि स्थितिहेतुत्वाचेतनत्वामूर्त्तत्वानि अवगाहनहेतुत्वाचेतनत्वामूर्त्तत्वानि च क्रमेण पुद्गले स्पर्शरसगन्धवर्णाचेतनत्वमूर्त्तत्वरूपाः षट्, काले वर्त्तमानहेतुत्वाचेतनामूर्त्तत्वरूपास्त्रय, जीवे च ज्ञानदर्शनसुखवीर्यचेतनत्वामूर्त्तत्वानीति षट्। अत्रेदमवधेयम्–चेतनाचेतनत्वमूर्त्तत्वामूर्त्तत्वानि स्वजातिविजातिभ्या सामान्यविशेषरूपाणीति सामान्यगुणेषु विशेषगुणेषु चाख्यातानीति षड्विंशतिरप्येते गुणा द्रव्याणामेवेति द्रव्यगुणा इति कथ्यन्ते। द्रव्याणि च धर्मादीनि प्राग् व्याख्यातान्येव "जीवमजीवे०" इत्यादिगाथाया समासत। व्यासतस्तु–"पचत्थिकायमइओ" इतिगाथाप्रथमदलव्याख्याने व्याख्यास्यते इति नात्र तन्निरूपणम्। तथा "खित्तपज्जव"त्ति। तत्र "क्षि निवासगत्यो" इति तुदादि, ततो "हुयामाश्रुवसिभसिगुवीपचिवचिधृयम्यमिमनितनिसदिच्छादिक्षी" त्यादिनौणादिके त्रे क्षेत्रमिति। तथा च क्षियन्ति–वसन्ति धर्माधर्मासुमत्पुद्‌लादयोऽस्मिन्निति क्षेत्रमाकाशलक्षण, "क्षेत्र सकर्षणभूमि शरीरमाकाश च" इत्युणादिवृत्तिः। तस्य क्षेत्रस्य पर्याया स्वभावविभावलक्षणा गुणविकाररूपा वा, उभयाश्रितत्वात् पर्यायाणाम्। तत्रागुरुलघुत्वाद्या स्वभावपर्याया। गुणविकाररूपास्तु अनन्तासङ्ख्यातसङ्ख्यातभागगुणवृद्धिभागगुणहानिभ्यो द्वादशधा। विभावपर्यायास्तु घटाद्यवगाहदानजन्या। एते च सर्वेऽपि क्षेत्रपर्याया, आकाशपर्यायत्वात्तेषाम्। यद्वा-क्षेत्राणि भरतादीनि, यदाहु - "क्षेत्र भरतादौ भगाङ्गयो" इत्यादिवचनाद् भरतादि तस्य पर्याया अवस्थितानवस्थितकालादिक स्वरूपम्। तच्च विस्तरतो जम्बूद्वीपप्रज्ञप्तेरवसेयम्। सङ्क्षेपतस्तु क्षेत्राणि तावद् भरतहिमवद्धरि-

महासत्तावान् द्रव्यमित्यभिधीयते, गुणसमूहो वा द्रव्यं, पर्यायार्थिको हि न द्रव्यं भेदेनाभिधत्ते, किन्तु गुणसमूहमेव । यतो व्याख्यायते–

"उप्पज्जंति वयंति य परिणामेंति अ गुणा न दव्वाइ । दव्व-प्पभवा य गुणा न गुणप्पभवाइं दव्वाइ ॥१॥"तिगाथा पर्यायार्थिकेनैव–यथोत्पादव्ययध्रौव्ययुक्त हि सदित्युच्यते, द्रव्यस्य च नोत्पादव्ययावभिमतौ द्रव्यार्थिकेन, न च विनोत्पादव्ययावस्ति पदार्थ इति न द्रव्य पदार्थ', किन्तु गुणा एव । कुत. ? इति चेदाह–उत्पद्यन्तेऽसन्तोऽपि सतया प्रादुर्भवन्ति, असत आविर्भावस्योत्पत्तिपदार्थत्वात् सतश्चोत्पादाभावात् । तथा व्ययन्ते–विनश्यन्ति सन्तोऽप्यभावतामापद्यन्ते, विवक्षितव्यतिक्रमस्यैव नाशपदार्थत्वात्, विवक्षितशब्दानभिधेयत्वस्य वा तथात्वात् । तथा परिणमन्ति–चैकगुणद्विगुणयावदनन्तगुणत्वादिनाऽवस्थान्तरमाप्नुवन्ति । के एवमित्याह–गुणा', अवधारणफलत्वाद्वाक्यस्य गुणा एव । लब्वेऽप्येवकारेण व्यवच्छेदे स्पष्टतार्थमाह–'न द्रव्याणी'ति । न द्रव्याण्युत्पद्यन्ते विनश्यन्ति परिणमन्ति वा, तेषामवस्थितैकरूपत्वेन द्रव्यार्थिकेन प्रतिज्ञानात् "दव्वट्ठिअस्स सव्व सया अणुप्पन्नमविणट्ठ ति" वचनात् । तथा त्रिलक्षणयुक्तत्वात् स्पष्टमेव द्रव्यमसदिति । ननु तर्हि किमिति द्रव्यमित्याह–'द्रव्यप्रभवा गुणा' इति द्रव्यस्य–द्रव्यशब्दस्य प्रभवो–व्यवहारो येभ्यस्ते द्रव्यप्रभवा–द्रव्यशब्दवाच्या' । के ? इत्याह–गुणा अवधारणयोजने गुणा एव । तथा च तथा तथा समुदितावस्थामापन्ना गुणा एव द्रव्यशब्देनोच्यन्ते, तेषामेव ,सल्लक्षणान्वितत्वात् । स्पष्टमेव व्यवच्छिनत्ति–'न गुणप्पभवाइ'ति । गुणाना प्रभवो येभ्यस्तानि गुणप्रभवानि–गुणाश्रयरूपाणीत्यर्थः । किमित्याह–'ने'ति । न सन्त्येवेत्यध्याहार्या क्रिया । कानि न सन्तीत्याह–द्रव्याणि-द्रव्यार्थि-

काभिप्रेतानि गुणपर्यायवद् द्रव्यमिति लक्षणलक्षितानि द्रव्याणि, त्रिलक्षणरहितत्वात् । यच्च स्यात् त्रिलक्षणयुक्त तदेव सदिति व्यवहार्यम् । न च द्रव्याणि तथेति न तानि सन्ति, द्रव्यशब्दाभिलाप्य तु पूर्ववदेवेति पर्यायार्थिकेन गुणसमूह एव द्रव्यतयाऽभिप्रेत इति नेदमयुक्तम् । यद्वा—भूतभविष्यत्पर्यययोग्य वा द्रव्यमिति, यदाश्रित्योच्यते—'भूतस्य भाविनो वा भावस्य हि कारण तु यल्लोके । तद् द्रव्य तत्त्वज्ञै. सचेतनाचेतन कथितम् ॥१॥ इति । योग्यताग्रहण च सर्वेषा पर्यायाणामनुभूतत्वादनुभविष्यमाणत्वाच्च, मा भूत् सर्वापेक्षया सर्वदा सर्वेषा द्रव्यतेति, तत एवोच्यते—"एगभवियबद्धाउअे य अभिमुहनामगोत्ते य । एए तिन्नि दव्वादेस"त्ति । न च वाच्य कथ तर्हि—

"त वयण सोऊण राया अचियतणुरुहसरीरो । अभिवदिऊण पियर मरीइ मभिवदिओ जाइ ॥१॥ सो विणएण उवगओ काऊण पयाहिण च तिक्खुत्तो । वदइ अभित्थुणतो इमाहि महुराहि वग्गूहि ॥२॥ लाभा हु ते सुलद्धा ज सि तुम धम्मचक्कवट्टीण । होहिसि दसचउदसमो अपच्छिमो वीरनामु त्ति ॥३॥ न वि तेह पारिवज्ज वदामि अह इम च ते जम्म । ज होहिसि तित्थयरो अपच्छिमो तेण वदामि ॥४॥" इतिवचनाद् वहुतमभवभावित्वेऽपि तीर्थकृत्त्वस्य, वन्दितो भरतेन विद्यमाने त्रिजगदीश्वरे मरीचिर्भक्त्या । न च नामस्थापनाभावापेक्षया तीर्थकृत्त्व तदा तस्य सम्भवति,यदपेक्ष्य वन्दित स्यात् इति चेत् । सत्य, सुदूरावधानवता लोकवसतिवादिना नैगमेन तथाविधानात्, तीर्थकरवचनाद्वोल्लसितभावेन वा तथाविहितमिति न व्यवहारानुगतम्, प्ररूप्यते च व्यवहारानुगतमेव । तत एव भविष्यन्त्या शासनवाधाविधायिब्राह्मणपूर्वजाता माहननामधेयाना स्तुतिपाठकाना वध निषिध्य

वर्षविदेहरम्यकहैरण्यवतैरावताख्यानि पूर्वापरायतहिमवन्महाहिम-
वन्निषधनीलरुक्मिशिखरिवर्षधरविभक्तानि क्रमेण चतुर्गुणवृद्धान्या-
विदेहेभ्य, परतो हीनानि च विष्कम्भात्। आद्य तु सपट्कलप-
ड्विंशयोजनपञ्चशतविष्कम्भम्, पर्वता अपि सद्विपञ्चाशं
सहस्र विस्तीर्ण आद्य द्वादश च कला। धातकीपुष्करार्द्धयोस्तु
द्विर्द्वि क्षेत्रपर्वता इपुकाराभ्यामुत्तरदक्षिणात्याभ्या विभक्तत्वात्।
वृत्तो जम्वूद्वीप आयामविष्कम्भयोर्लक्ष योजनाना, धातकीव-
लयाकारो योजनचतुर्लक्षविष्कम्भ, पुष्करार्द्धः षोडश।
(लक्षविष्कम्भ) परिक्षेपाद्यानयनोपायश्चैव–विष्कम्भकृतेर्दश
गुणाया मूल वृत्तपरिक्षेप। सविष्कम्भपादाभ्यस्तो गणितम्।
इष्वावगाहोनावगाहाभ्यस्तस्य विष्कम्भस्य चतुर्गुणस्य मूल ज्या।
ज्याविष्कम्भयोर्वर्गविशेषमूल विष्कम्भाच्छोध्य शेषार्धमिषु।
इषुवर्गस्य षड्गुणस्य ज्यावर्गयुतस्य मूल धनुःकाण्ठम्। ज्यावर्गचतु-
र्भागयुक्तमिषुवर्गमिषुविभक्त तत्प्रकृतिवृत्तविष्कम्भ। उदग्धनु-
काष्ठाद्दक्षिण शोध्य शेषार्धं वाहुरिति। एवमन्तरद्वीपा पूर्ववत्
षट्पञ्चाशत्। मेरुस्तु काञ्चनस्थालनाभिरिव वृत्तो योजनशत-
सहस्रमवो धरणितलमवगाढो नवनवत्युच्छ्रितो दशाधो विस्तृत.
सहस्रमुपरीति। त्रिकाण्डस्त्रिलोकप्रविभक्तमूर्तिश्चतुर्भिर्वनैर्भद्रशा-
लनन्दनसौमनसपाण्डकैः परिवृत.। तत्र शुद्धपृथिव्युपलवज्रशर्करा-
वहुल योजनसहस्रमेक प्रथम काण्ड, द्वितीय त्रिषष्टिसहस्राणि
रजतजातरूपाङ्कस्फटिकवहुल, तृतीय षट्त्रिंशत्सहस्राणि जाम्वूनद,
वैडूर्यवहुला चाऽस्य चूलिका चत्वारिंशद्योजनान्युच्छ्रायेण, मूले
द्वादश विष्कम्भेण, मध्येऽष्टावुपरि चत्वारीति। मूले वलयपरिक्षेपि
भद्रशालवनम्। भद्रशालवनात् पञ्चयोजनशतान्यारुह्य तावत्प्रति-
क्रान्तिविस्तृत नन्दनम्। ततोऽर्द्धत्रिषष्टिसहस्राण्यारुह्य पञ्चयोजन-

शतप्रतिक्रान्तिर्विस्तृतमेव सौमनसम् । ततोऽपि षट्त्रिंशत्सहस्राण्यारुह्य चतुर्नवतिचतु.शतप्रतिक्रान्तिर्विस्तृत पाण्डकवनमिति । नन्दनसौमनसाभ्यामेकादशैकादशसहस्राण्यारुह्य प्रदेशपरिहाणिर्विष्कम्भस्येति । अत्र चानवबुद्धभाष्यकाराभिप्राया केचन व्याख्याकारा विप्रतिपद्यन्ते, व्याख्यान्ति चैव—नन्दनादूर्ध्वं सौमनसान्चाध· किल मध्ये एकादशैकादशयोजनसहस्राण्यारुह्य योजनसहस्रं परिहीयते विष्कम्भस्येति, ऊर्ध्वं सौमनसाच्चाधो नन्दनवनान्न सूरिणा परिहाणिरुक्ता, यावदेषा च परिहाणिराचार्योक्ता न मनागपि गणितप्रत्यया सङ्गच्छते । अग्रतश्च व्याख्याकारापसदता ध्वनयद्भिरुदित स्वस्य—तत्राचार्योक्तपरिहाण्या नैकोऽपि विष्कम्भ आगच्छति । न चैतावसत्यावागमेऽधीतत्वात् शृङ्गग्राहिकयेति, गणितशास्त्रविदो हि परिहाणिमन्यथा वर्णयन्त्यार्षानुसारिण इत्यादि च । तत्सर्वमसमञ्जसमेव, यत सिद्धान्ततो विष्कम्भ उभयत्र क्रमेण व्याख्याकारैरेव सौमनसेऽन्तर्विष्कम्भ. सहस्रत्रय शतद्वय च द्विसप्तत्यधिकमष्टौ चैकादश भागा, बहिर्विष्कम्भ. पुनः सहस्रचतुष्टय शतद्वय च द्विसप्तत्यधिकमष्टौ चैकादश भागा योजनस्येत्यादि । न चैते विष्कम्भा सूरिव्याख्यानात्कथमपि दूरवर्त्तिन , यत सूरेर्हि सिद्धान्तोऽय यदुत— योजनसहस्रस्य धरणितलावगाढस्य प्रदेशहानिरहितत्वान्नवनवतिः सहस्राणि हानिमन्ति योजनानि मूले, योजनदशसहस्रीविस्तृतेरुपरि च योजनसहस्रविस्तृतेर्हेया नवयोजनसहस्री । तथा च प्रतियोजनमेकादशो भागो हीयते योजनस्य, पर तथागणने नन्दनसौमनसयो प्रत्येक पञ्चशतविष्कम्भत्वात्पूर्वानुसृतपरिमाणाद्विशेषेण योजनसहस्रद्वय पात्यम्, तच्च न केनाप्युपायेनैकादशसहस्रपातापत्ते· । ततश्चैकादशसहस्रयोजनान्यारुह्य नन्दनसौमनसाभ्या प्रदेशहानि.

प्रतिपादिता पूज्यपादैः । तथा च न कोऽपि विरोध आगमेन गणितपरिपाटचा वा, भ्रान्तिमूल त्ववयऊर्ध्वकल्पनमुभयत्र स्वकपोलकल्पनया । अत्र चैव विष्कम्भागति.—योजनपञ्चशतव्यतिक्रमे पञ्चचत्वारिंशद्योजनाना पञ्च चैकादश भागा हीयन्ते दशमाहृत्या., आगच्छति चैव चतु.पञ्चाशदधिकनवनवतिशतानि षड्भागाधिकानि वाह्यो विष्कम्भः, आभ्यन्तरश्च सहस्रोनस्तदेव, उच्यतेऽपि—

"नवसहस नवसयाइ चउपण्णा छच्चिगारभागा य । नंदणवहिविक्खभो सहसूणो होइ मज्झम्मि ॥" इति । तथोपरि ततोऽर्धत्रिषष्टियोजनानामतिलङ्घ्या, तत्र च यदि न सूरिमतमनुश्रीयते, पातव्या एकाशीत्यधिकपट्पञ्चाशच्छती नवभागाधिका योजनाना नन्दनवनाभ्यन्तरविष्कम्भश्च ८९५४—६ एतस्मात्पूर्वोक्तपाते सौमनसवाह्यविष्कम्भ.३२७२—८ भागा समागच्छति, आभ्यन्तरस्तु २२७२—८ इत्येतावानेव । न चैष आगमानुरोधीति स्वयमप्युच्यते, सूरिपादानुसरणे तु सार्धैकपञ्चाशत्येव हानिः, तथा च हीयते एकाशीत्यधिकषट्चत्वारिंशच्छतानि पूर्वोक्ताभ्यन्तराद्विष्कम्भात्, तथा च शेषमिद द्वासप्तत्यधिकद्वाचत्वारिंशच्छतानि योजनाना भागाश्चाष्टौ, शास्त्रानुरोधि चैतन्मान, यत उच्यतेऽपि—

"तव्वाहिरि विक्खभो वायालसयाहि दुसयरिजुयाइ । अट्ठेगारस भागा मज्झे त चेव सहसूणं ॥१॥" इति । एव तत ऊर्ध्वमपि विहायैवैकादशयोजनसहस्राणि प्रदेशहानिश्चेद्विवक्ष्यते तदैवाभ्यन्तराद्द्वात्रिंशच्छतादिरूपात् पञ्चविंशतियोजन इत्येवरूपो भाग. सहस्रसत्को द्वाविंशतिशतानि द्वासप्तत्यधिकानि भागाश्चाष्ट पात्यन्ते, शेष तिष्ठति सहस्रमेक योजनानाम्, तन्नैषा सूरिपद्धति-

रागमेन गणितपरिपाट्या वा विरोधमधिरोहति, विचार्यते यदि सम्यग् "विरुद्धमुक्त यदिहागमादे–र्विधाय शुद्धि विबुधा उशन्तु । पूज्या ममारं गणिराजपादा, सङ्ग्राहका शिष्टतराश्च वन्द्याः ॥१॥" इति । कालोऽपि खल्वुत्सर्पिण्यादिरूपोऽवबोध्यः यो यत्र भवति स तत्र सानुभावो जम्बूद्वीपप्रज्ञप्तेर्भगवत्या एव । तृतीयभेदं पर्यायलोकस्य निरूपयन्त आहुः–"भवाणुभावे अ"त्ति । तत्र भवन्ति प्राणिनः प्राग्बद्धनिधत्तनिकाचनोदीरणोदयनिर्जरापेक्षमस्मिन्निति भव । पूर्वोक्तचतुर्विधगतिभेदेन भिन्नत्वाच्चतुर्विध एवासौ, तस्यानुभाव –प्रभावो मर्यादा, यथोच्यते गतिचतुष्टयमाश्रित्य–

"नरएसु जाइं अइक्कक्खडाइ दुक्खाइ परमतिक्खाइ । को वण्णेही ताइ जीवतो वासकोडी वि ॥१॥ कक्खडदाह सामलि–असिवण–वेयरणि–पहरणसएहि । जा जायणा उ पावतिं नारया त अहम्मफल ॥२॥ अछड्डियविसयमुहो पडइ अविज्झायसिहि–सिहानिवहे । समारोदहिवलयामुहम्मि दुक्खागरे निरए ॥३॥ पायक्कतोरत्थलमुहकुहरुच्छलियरुहिरगडूसे । करवत्तुक्कत्तदुहाविरिक्कविविइन्नदेहद्धे ॥४॥ जततर–भिज्जतुच्छलतससद्दभरियदिसि वित्तरे । डज्झतुप्फिडिय–समुच्छलत–सीसट्ठि–सघाए ॥५॥ मुक्ककंद–कटाहुक्कटतदुक्कयकयंतकम्मते । सूल–विभिन्नुक्खित्तुद्धदेहणिट्ठत्तपब्भारे ॥६॥ सद्दधयारदुग्गधवधणायारदुद्धरकिलेसे । भिन्न–करचरणसकररुहिरवसा–दुग्गमप्पवहे ॥७॥ गिद्धमुहणिद्दडक्खित्तवधणोमुद्धकदिरकवधे । दढगहियततसडासयग्गविसमुक्खुडियजीहे ॥८॥ तिक्खकुसग्गाकड्ढियकटयरुक्खग्गजज्जरसरीरे । निमिसतर पि दुल्लहसुक्खेवक्खेवदुक्खम्मि ॥९॥ इय भीसणम्मि निरए पडति जे विविहसत्तवहनिरया । सच्चब्भट्ठा य नरा जयमि कयपावसघाया ॥१०॥ जहा इह अगणी उण्हो इत्तो णतगुणो

तहिं। नरएसु वेयणा उण्हा असाता वेइआ मए ॥११॥ जहा इह इम सीय एत्तोऽणतगुण तहिं। नरएसु वेयणा सीया असाया वेइया मए ॥१२॥ कदतो कदुकुभीसु *उड्ढपाओ अहोसिरो। हुयासणे जलतम्मि पक्कपुव्वो अणतसो ॥१३॥ महादवग्गिसकासे मरुम्मि वइरवालुए। कलववालुयाए य दड्ढपुव्वो अणतसो ॥१४॥ रसतो कदुकुभीसु उड्ढ वद्धो अवधवो। करवत्तकरकया हि छिन्नपुव्वो अणेगसो ॥१५॥ अतितिक्खकटकाइण्णे तुगे सिवलिपायवे। खेवित पासवद्धेण कड्ढोकड्ढाहि दुक्कर ॥१६॥ महाजतेसु उच्छू वा आरसतो सुभेरव। पीलिओमि सकम्मेहि पावकम्मो अणतसो॥१७॥ कूवतो कोलसुणएहि सामेहिं सबलेहि य। पाडिओ फालिओ छिन्नो विप्फुरतो अणेगसो ॥१८॥ असीहि अयसिवण्णाहि भल्लीहिं पट्टिसेहि य। छिन्नो भिन्नो विभिन्नो य ओइण्णो पावकम्मुणा ॥१९॥ अवसो लोहरहे जुत्तो जलते समिलाजुए। चोइतो तोत्तजुत्तेहि रोज्झो वा जह पाडिओ ॥२०॥ हुयासणे जलतम्मि चियासु महि-सो विव। दड्ढो पक्को अ अवसो पावकम्मेहिं पाविओ ॥२१॥ बला सडासतुडेहिं लोहतुडेहि पक्खिहि। विलुत्तो विलवतो ह ढकगिद्धेहिं णतसो ॥२२॥ तण्हाकिलतो धावतो पत्तो वेयरणिं नइ। जल पाहति चितती खुरधाराहि विवाइओ ॥२३॥ उण्हाभिभूओ धावतो असिपत्तं महावण। असिपत्तेहि पडतेहि छिण्णपुव्वो अणेगसो ॥२४॥ मोग्गरेहि मुसढीहि सूलेहिं मुसलेहि य। गयास भग्गगत्तेण पत्तो दुक्ख अणतसो ॥२५॥ खुरेहि तिक्खधारेहि छुरियाहि कप्पणीहि य। कप्पिओ फालिओ छिण्णो उक्कत्तिओ अणेगसो ॥२६॥ पासेहि कूडजालेहि मिओ वा अवसो अह। वाहिओ वद्धरुद्धो अ वहुसो चेव विवाइओ ॥२७॥ गलेहिं मगर-जालेहि मच्छो वा अवसो अह। उल्लितो फालिओ गहिओ मारिओ

य अणतसो ॥२८॥ विदसएहि जालेहि लेप्पाहि सउणो विव। गहिओ लग्गो य बद्धो य मारिओ य अणतसो ॥२९॥ कुहाड परसुमाइहि वड्ढइहि दुमो विव। कुट्टिओ फाडिओ छिण्णो तच्छिओ य अणतसो ॥३०॥ चवेड-मुट्ठिमाइहि कुमारेहि अय पिव। ताडिओ कुट्टिओ भिन्नो चुण्णिओ य अणतसो ॥३१॥ तत्ताइ तबलोहाइ तउयाइ सीसगाणि य। पाइओ कलकलताइ आरसतो सुभेरव ॥३२॥ तुहप्पियाइ मसाइ खडाइ सोल्लगाणि य। खाविओमि समंसाइ अग्गिवण्णाइ णेगसो ॥३३॥ तुहं पिया सुरा सीहू मेरओ य महूणि य। पज्जिओमि जलतीओ वसाओ रुहिराणि य ॥३४॥ निच्च भीतेण तत्थेण दुहिएण वहिएण य। परमा दुहसवद्धा वेयणा वेइया मए ॥३५॥ तिव्व-चडप्पगाढाओ घोराओ अतिदुस्सहा। महब्भयाओ भीमाओ निरएमु वेइया मए ॥३६॥ जारिसा माणुसे लोए ताया! दीसति वेयणा। इत्तो अणतगुणिया नरएसु दुक्खवेयणा ॥३७॥ सव्वभवेसु अस्साया वेयणा वेइया मए। निमिसतरमित्त पि ज साया नत्थि वेयणा ॥३८॥" [उत्तरा०]
वेदनोदीरकाश्च नारकाणा परमाधार्मिका, ते च पञ्चदश। न च वाच्य तेषां ततो भवति न वा वन्ध ?, आद्ये, कथ न नारकत्वेन तेषामुत्पादो, न चायमभिमतोऽभियुक्तैः, अन्त्ये च, कैव हानिरीश्वरस्य कर्त्तृत्वे जगतामिति। क्रीडाप्रियतयैव तथाविधो यद्यपि न कर्मवन्धस्तेषा, येन भवेन्नारकतयोत्पाद.। "मन एव मनुष्याणा कारणं वन्धमोक्षयो" इति विगतविसवादवाक्यप्रामाण्यात्। तथापि तथाऽनर्थकरक्रीडाकारित्वेनास्त्येव तेषामपि तीव्रतम कर्मवन्धो, यदुदयादण्डगोलिकादित्वेनोत्पद्य नारकदु.खातिक्रान्तदु खा वेदना वेदयन्ति। स्पष्टश्चायमधिकार' सविशेष महानिशीथे स्पष्टित स्पष्टपदार्थस्पष्टनसौष्ठवविदितजन्मभिर्गणभृदादिभि.। तत्रान्

कार्यं कोऽपि कुविकल्प । न चैवं जगतामीश्वरकर्तृत्वमनघ सम्पद्येतेत्यलमप्रस्तुतेन । परमाधार्मिकाश्चेमे–

"अबे अबरिसी चेव सामे य सवले वि य । रुद्देतरुद्दकाले य महाकाले त्ति आवरे ॥१॥ असिपत्ते धणु कुभे वालु वेयरणी वि य । खरस्सरे महाघोसे एव पण्णरसाहिया ॥२॥" तत्र क्रमेण यादृशी वेदनामुदीरयन्ति ते तद्दर्शयितुमाह –

"धाडेति य हाडेति य हणति विधति तह णिसुभति । मुचति अवरतले अवा खलु तत्थ णेरइए ॥१॥ ओहयहए य तहिय णिस्सन्ने कप्पणीहिं कप्पति । विदलगचडुलगछिन्ने अवरिसी तत्थ णेरइए ॥२॥ साडणपाडणतोडनबवणरज्जुल्लयप्पहारेहिं । सामा णेरइयाण पवत्तयति अपुन्नाण ॥३॥ अतगयफिप्फिसाणि य हियय कालेज्ज फुप्फुसे वक्के । सवला णेरइयाण कड्ढेति तह अपुण्णाण ॥४॥ असिसत्तिकुनतोमरमूलतिसूलेसु सूलिच्चियगासु । पोएति रुद्दकम्माउ णरगपाला तहि रुद्दा ॥५॥ भजति अगमगाणि ऊरू-बाहू-सिराणि करचरणे । कप्पेति कप्पणीहि उवरुद्दा पावकम्मरया ॥६॥" रुद्रकर्म–पापकर्मरतेत्यादिविशेषणैर्निर्युक्तिकारचरणा द्योतयन्ति तेषामपि स्वकृताशुभकर्मफलभोगावश्यकताम् । एवमग्रेऽपि ।

"मीरासु सुठएसु य कडूसु य पययडेसु य पयति । कुभीसु य लोहिएसु य पयति काला उ णेरइए ॥७॥ कप्पति कागिणीमसगाणि छिदति सीहपुच्छाणि । खावेति य णेरइए महकाला पावकम्मरए ॥८॥ हत्थे पाए ऊरू बाहुसिर–पाय–अगमगाणि । छिदति पगाम तु असि णेरइए णिरयपाला ॥९॥ कण्णोट्ठणासकरचरणदसणट्ठणफुग्गऊरुबाहूण । छेयण-भेयण-साडण-असिपत्तधणूहि पाडन्ति ॥१०॥ कुभीसु य पयणेसु य लोहियसु कदुलोहिकुभीसु । कुभी य णरयपाला हणति पाडति णरएसु ॥११॥ तडतडतडित्ति

भज्जति भज्जणे कलवुवालुगा–पट्ठे। वालूगा णेरइए लोलंति अवरतलम्मि ॥१२॥ पूय–रुहिर–केसट्ठिवाहिणी कलकलत–जल-सोया। वेयरणी–णिरयपाला णेरइए ऊ पवाहंति ॥१३॥ कप्पेति करकरएहिं तच्छिति परुप्पर परसुएहि। सिवलितरुमारुहति खर-स्सरा तत्थ णेरइए ॥१४॥ भीए य पलायते समततो तत्थ ते णिरु-भति। पसुणो जहा पसुवहे महघोसा तत्थ णेरइए ॥१५॥ छिन्न-पादभुजस्कन्धाश्छिन्न–कर्णौष्ठनासिका। भिन्नतालु–शिरोमेण्ढ्रा भिन्नाक्षि–हृदयोदरा ॥१६॥" तथा–"अच्छिनिमीलणमित्त णत्थि मुह दुक्खमेव पडिवद्ध। नरए नेरइयाण अहोनिस पच्चमाणाण ॥१॥ असुभा उव्विग्गणिज्जा सद्दरसा रूवगधफासा य। नरए नेरइयाण दुक्कयकम्मोवलित्ताण ॥२॥" इति। यद्यप्येतद् गाथायुगल वहुपु -निर्युक्तिपुस्तकेपु दृश्यते, तथापि प्रक्षिप्तमेवेदमित्यवगन्तव्यम्, यतो व्याख्या नास्य विहिता, उक्त च यथोक्तमिति कृत्वा साक्षि-विधिनेति। न चैतद् यावद्भवानुभावनिवेदक येन निर्युक्तिकारै श्रीभद्रवाहुचरणैर्व्याख्यारूपेण निवद्ध भवेत्। यथा "वण्णरसेति" गाथा"दव्वगुणे"त्यस्य "परिणामे अ"त्ति अस्य च सुगमतायै दृब्धा। न चादो गभीरार्थमपि येन पूज्यपादकृत सम्भावयेत् कोऽपि। सङ्ग्रहकारपादैरपि व्याकृतैव नरकवेदना–"नित्याशुभतरलेश्या-परिणामदेहवेदना विक्रिया" इत्यत्राशुभतरपरिणामो यथा–तिर्यगू-र्ध्वमधश्च सर्वतोऽनन्तेन भयानकेन नित्योत्तमकेन तमसा नित्यान्ध-कारा श्लेष्म-मूत्र-पुरीषस्रोतोमल-रुधिर-वसा-मेदपूयानुलेपनतला श्मशानमिव पूतिमासकेशास्थिचर्मदन्तनखास्तीर्णभूमय. श्वशृगाल-मार्जारनकुलसर्पमूपकहस्त्यश्वगोमानुषशवकोष्ठाशुभतरगन्धा। हा मातर्धिगहो! कष्टं वत मुञ्च तावद् धावत प्रसीद भर्त्तर्मा वधी-कृपणकमित्यनुबद्धरुदितैस्तीव्रकरुणैर्दीनविक्लवैर्विलापैरार्त्तस्वनैर्नि-

नादैर्दीनकृपणकरुणैर्याचितैर्वाष्पसन्निरुद्धैर्निस्तनितैर्गाढवेदनैः कूजितैः सन्तापोष्णैश्च निःश्वासैरनुपरतभयस्वनाः । अशुभतरवेदना तद्यथा-उष्णवेदनास्तीव्रास्तीव्रतरास्तीव्रतमाश्चाऽऽतृतीयायाः, उष्णाशीते चतुर्थ्यां, शीतोष्णे पञ्चम्यां, परयोः शीताः शीततराश्चेति । तद्यथा—प्रथमशरत्काले चरमनिदाघे वा पित्तव्याधिप्रकोपाभिभूतशरीरस्य सर्वतो दीप्ताग्निराशिपरिवृतस्य व्यभ्रे नभसि मध्याह्ने निवातेऽतिरस्कृतातपस्य यादृगुष्णज दुःख भवति, ततोऽनन्तगुण प्रकृष्टकष्टमुष्णवेदनेषु नरकेषु भवति । पौषमाघयोश्च मासयोस्तुषारलिप्तगात्रस्य रात्रौ हृदय-कर-चरणाधरोष्ठ-दशनायासिनि प्रतिसमयप्रवृद्धे शीतमारुते निरग्न्याश्रयप्रावरणस्य यादृक् शीतसमुद्भव दुःखमशुभ भवति, ततोऽनन्तगुण प्रकृष्ट कष्ट शीतवेदनेषु नरकेषु भवति । यदि किलोष्णवेदनान्नरकादुत्क्षिप्य नारकः सुमहत्यङ्गारराशौ उद्दीप्ते प्रक्षिप्येत, स किल सुशीतां मृदुमारुतां शीतलां छायामिव प्राप्तः सुखमनुपम विन्द्यान्निद्रां चोपलभेत । एव कष्टतर नारकमुष्णमाचक्षते । तथा किल यदि शीतवेदनान्नरकादुत्क्षिप्य नारकः कश्चिदाकाशे माघमासे निशि प्रवाते महति तुषारराशौ प्रक्षिप्येत सदन्तशब्दोत्तमकरप्रकम्पायासकरेऽपि तत्र सुख विन्द्यादनुपमां निद्रां चोपलभेत । एव कष्टतर नारकं शीतदुःखमाचक्षत इति । तथा 'परस्परोदीरितदुःखा' इत्यत्रापि अनुपरतशुष्केन्धनोपादानेनैवाग्निना तीक्ष्णेन प्रततेन क्षुदग्निना दन्दह्यमानशरीरा अनुसमयमाहारयन्ति ते सर्वे पुद्गलानप्यद्युर्न च तृप्तिमाप्नुयुस्तीव्रया च नित्यानुषक्तया पिपासया शुष्ककण्ठोष्ठतालुजिह्वाः सर्वोदधीनपि पिबेयुर्न च तृप्ति समाप्नुयुः, वर्धयातामेव चैषां क्षुत्तृष्णे इत्येवमादीनि क्षेत्रप्रत्ययानि । अपि चोक्त 'भवप्रत्ययोऽवधिर्नारकदेवाना'मिति, तन्नारकेष्ववधिज्ञानमशुभभव-

हेतुक मिथ्यादर्शनयोगाच्च विभङ्गज्ञान भवति। भावदोपोपघातात्तु तेषा दुःखकारणमेव भवति। तेन हि ते सर्वतस्तिर्यगूर्ध्वमधश्च दूरत एवाजस्र दुःखहेतून् पश्यन्ति। यथा काकोलूकमहिनकुल चोत्पत्त्यैव बद्धवैर तथा परस्पर प्रति नारकाः, यथा वा अपूर्वाञ्छुनो दृष्ट्वा श्वानो निर्दय क्रुध्यन्त्यन्योऽन्य प्रहरन्ति च, तथा तेषा नारकाणामवधिविषयेण दूरत एवान्योऽन्यमालोक्य क्रोधस्तीव्रानुशयो जायते दुरन्तो भवहेतुक, तत प्रागेव दुःख-समुद्घातार्त्ता. क्रोधाग्न्यादीपितमनसोऽतर्किता इव श्वानः समुद्धता वैक्रिय भयानक रूपमास्थाय तत्रैव पृथिवीपरिणामजानि क्षेत्रा-नुभावजनितानि चाऽय.शूलशिलामुसलमुद्गरकुन्ततोमरासिपट्टि-शशक्त्ययोघनखड्गयष्टिपरशुभिण्डिमालादीन्यायुधान्यादाय करच-रणदशनैश्चान्योऽन्यमभिघ्नन्ति। तत. परस्पराभिहता विकृताङ्गा निस्तनन्तो गाढवेदना शूनाघातनप्रविष्टा इव महिषशूकरोरभ्रा. स्फुरन्तो रुधिरकर्दमे चेष्टन्ते इत्येवमादीनि परस्परोदीरितानि नरकेषु नारकाणा दुःखानि भवन्तीति। तथा 'सङ्क्लिष्टासुरोदी-रितदुःखाश्च प्राक् चतुर्थ्याः' इति। सङ्क्लिष्टासुरोदीरितदुःखाश्च नारका भवन्ति तिसृषु प्राक् चतुर्थ्या, तद्यथा-अम्बाम्बरीष-श्यामश-बल-रुद्रोपरुद्र-काल-महाकालाऽस्यसिपत्र-वन-कुम्भी-वालुका-वैतरणी खरस्वर-महाघोषा पञ्चदश परमाधार्मिका मिथ्यादृष्टय. पूर्वजन्मसु सङ्क्लिष्टकर्माण· पापाभिरतय आसुरी गतिमनुप्राप्ताः कर्मक्लेशजा एते ताच्छील्यान्नारकाणा वेदना समुदीरयन्ति चित्राभिरुपपत्तिभि। तद्यथा— तप्तायोरसपायननिष्टप्तायः स्त-म्भालिङ्गनकूटशाल्मल्यग्रारोपणावतारणायोघनाभिघातवासीक्षुरत-क्षणक्षारतप्ततैलाय सेचनाय कुम्भपाकाम्बरीषतर्जनयन्त्रपीडनाय -शूलशलाकाभेदनक्रकचपाटनाङ्गारदहनवाहनाशुचिशाड्वलापकर्षणैः

तथा सिंहव्याघ्रद्वीपिश्वश्वृगालवृककोकमार्जारनकुलसर्पवायसगृध्र-काकोलूकश्येनादिखादनैः तथा तप्तवालुकावतारणासिवनप्रवेशन-वैतरण्यवतारणपरस्परयोधनादिभिरिति। स्यादेतत् किमर्थं त एव कुर्वन्तीति ?। अत्रोच्यते पापकर्माभिरतय इत्युक्तम्। तद्यथा—गो-वृषभ-महिष-वराह मेष-कुक्कुट—वार्त्तक—लावकान्मुष्टिमल्लांश्च युध्यमानान् परस्पर चाभिघ्नतः पश्यतां रागद्वेषाभिभूतानामकुशलानुबन्धिपुण्यानां नराणां परा प्रीतिरुत्पद्यते। तथा तेषामसुराणां नारकांस्तथा तानि कारयतामन्योऽन्यं घ्नतश्च पश्यतां परा प्रीतिरुत्पद्यते। ते हि दुष्टकन्दर्पास्तथाभूतान् दृष्ट्वाऽट्टहासं मुञ्चन्ति चेलोत्क्षेपान्क्ष्वेडितास्फोटितावल्गिततलतालनिपातनांश्च कुर्वन्ति महतश्च सिंहनादान्नदन्ति। तच्च तेषां सत्यपि देवत्वे सत्सु च कामिकेष्वन्येषु प्रीतिकारणेषु मायानिदानमिथ्यादर्शनशल्यतीव्रकषायोपहतस्याऽनालोचितभावदोषस्याऽप्रत्यवमर्षस्याऽकुशलानुबन्धिपुण्यकर्मणो बालतपसश्च भावदोषानुकर्षिणः फलं यत् सत्स्वप्यन्येषु प्रीतिहेतुष्वशुभा एव प्रीतिहेतवः समुत्पद्यन्ते। इत्येवमप्रीतिकरं निरन्तरं सुतीव्रं दुःखमनुभवतां मरणमेव काङ्क्षतां तेषां न विपत्तिरकाले विद्यते कर्मनिर्धारितायुषाम्। उक्तं हि—'औपपातिक-चरमदेहोत्तमपुरुषासङ्ख्येयवर्षायुषोऽनपवर्त्त्यायुषः" [तत्त्वार्थ०] इति। नैव तत्र शरणं विद्यते। नाप्यपक्रमणम्। ततः कर्मवशादेव दग्धपाटितभिन्नच्छिन्नक्षतानि च तेषां सद्य एव संरोहन्ति शरीराणि दण्डराजिरिवाम्भसीति। एवमेतानि त्रिविधानि दुःखानि नरकेषु नारकाणां भवन्तीति। विशेषार्थिना तु जीवाभिगमादिकः समय-सागरोऽवगाहनीयः। अत्र च भिन्नभिन्नग्रन्थग्रथितपाठानामुल्लेखाद्विशेषतोऽवभासिष्यते पौनरुक्त्यम्, तथापि नानुशयोऽनुशयवद्भिर्विधेयोऽस्मासु कथञ्चिद्विशेषदर्शनाभिप्रायेण पुनः पुनरावर्त्तनेन

भवनिर्वेदकारणता च विभावयद्भिरस्माभिस्तथाकृतत्वात् । उच्यते च—"वक्ता हर्षभयादिभिराक्षिप्तमना. स्तुवँस्तथा निन्दन् । यत्पदमसकृद् ब्रूयात्तत्पुनरुक्तं न दोषाय ॥१॥" यद्वा—"वृत्त्यर्थं कर्म यथा तदेव लोक: पुन. पुन: कुरुते । एव विरागवार्त्ताहेतुरपि पुन: पुनश्चिन्त्य: ॥१॥" [प्रशम०] इतिवचनात् तिर्यक्ष्वपि च भवानुभाव एवं विभावनीयो विभावद्भि:, प्रत्यक्षत्वाच्च यद्यपि न तत्प्रतिपादनं तथारुचिकरं सम्पत्स्यते तथापि स्थानाऽशून्यार्थं लेशमात्रमुच्यते । प्रत्यक्षदृष्टस्यापि विभावनेऽक्षरानुसारेण विचित्रभावोत्पत्तेरनुभवसिद्धत्वात् । तद्यथा—तिरिया कसकुसारानिवायवह-बध-मारणसयाइं । न वि इहियं पाविंता परत्थ जइ नियमिया हुता ॥१॥" तथा—"क्षुत्तृड्धिमान्युष्णभयार्दितानां ००० मायार्त्यादिनिवन्धनैर्बहुविधै: प्राप्तस्तिरश्चा गति, सिंह-व्याघ्र-मतङ्गजैणवृषभच्छागादिरूपस्पृशाम् । क्षुत्तृष्णा-वध-बन्ध-ताडन-रुजावाहादिदु:खं महद्, यज्जीव. सहते न तत्कथयितु केनाप्यहो ! शक्यते ॥ दृश्यते षण्ढीकरणवाहनक्षुत्तृष्णाव्यापकतायोधनविविधरोगेष्टवियोगानिष्टसयोगगर्भग्राहणपञ्जरावस्थापनविविधबन्धनक्रीडाहेतुमात्रकलाशिक्षणाङ्कुशप्राजनककशारायष्टिसहनातिक्रान्तशक्तिकभाराधिरोहपरवत्ताधूर्वहनहलयोजनोत्प्लवनगोपुरकीलकाघातवालुकाप्रसरप्रसरणोर्णादिकर्त्तनाद्यधिसोढव्यातिक्रान्तसामर्थ्यजाड्यातिक्रान्ताग्निस्पर्शातपविविधप्रचण्डवायुवेगविधूतवृक्षविचयवेगशस्त्रघातायमानासारकृच्छ्रसहनयथाक्षुत्पिपासमप्राप्ततृणपानीयादिकर्कशतरमार्गभारभरवहनाकस्मिकागतपय पूरपरिप्लवप्रचुरपापकर्मकचवरपरिपूरितान्त करणम्लेच्छजनभक्षणविधिविदारितगात्रनिचयपरमाधार्मिककल्पानार्यतमजनविविधक्रीडाहेतुकविधापितानेकयोधनानार्यतमजनोचितगोभालुब्धचित्तविहितपिच्छाद्युत्पाटनविविधानार्यजनप्रवर्त्तित-

तैलादिहेतुकोत्पीलनौषधपरीक्षाहेतुकतद्भक्षणकरणविसृष्टप्राणाधम-तमयवनजनातिगाचारधरद्विजविहितयज्ञविधिनिमेषसञ्ज्ञपितकर-णावरुद्धश्वासविधृतबन्धनविविधपदार्थपिष्टपरिपूरिताक्षियुगलाति-कृशानुतापतप्तायोदीर्घतरसूचिनिचयविद्धभूघनविहितविविधानार्य-जनोजितभक्षणार्हखण्डकरणादित्वविगतमानोदकपूरावतारप्रचुरपा-पपटलपरिष्कृतान्त.करणप्रवर्त्तितप्रदीपनान्तर्दहनादिविविधरोगात-ङ्कक्रीडामात्रहेतुकपाशलम्बनभक्षणादिप्रवर्त्तनजातक्रोधसमूहजातवे-दोदग्धहृदयदारितदग्धच्छिन्नभिन्नसोल्लितभर्जितगर्त्तावपातघासा-र्णोनिरोधादिश्रवणमात्रजनितहृदयप्रकम्प्रमतीतमतिवचनगोचरमस-ह्यतर दु.खं तिरश्चा परमयमेव तेषामनुभावो यत्तथापि यावदायुर्जीवन्ति दुःखभराक्रान्ता., विजहति च प्राणानकृतपुण्यतया प्राग्भवाऽविहितधर्मलेशतयाऽकामनिर्जरया च दु.खमनुभवन्त. । एवमेव च मनुष्याणामप्यनुसन्धेयोऽनुभाव । यद्यप्यसावपि प्रत्यक्ष एव तथापि तेषामेवोपदेशार्हतया, निर्वेदनिबन्धनतया चैतद्दर्शनस्य दर्श्यते पूर्ववत् स्थानाङ्गून्यार्थं–

"आजीवसकिलेसो सोक्खं तुच्छ उवद्दवा बहुआ । नीयजण-सिट्ठणा वि अ अणिट्ठवासो अ माणुस्से ॥१॥ चारगनिरोधवह-बधरोगधणहरणमरणवसणाइ । मणसतावो अयसो विग्गोवणयाय माणुस्से ॥२॥ चितासंतावेहि अ दरिद्दरूवाहि दु प्पउत्ताहि । लद्धूण वि माणुसत्त मरेति केइ सुनिव्विण्णा ॥३॥

खाद्याखाद्यविवेकशून्यमनसो निर्ह्रीकतालिङ्गिताः,
सेव्याऽसेव्यविधौ समीकृतधियो नि.शूकतावल्लभा ।
तत्रानार्यनरा निरन्तरमहारम्भादिभि कारणै ,
क्लेशं सङ्कलयन्ति कर्म च महादु खप्रदं चिन्वते ॥४॥
मर्त्त्या. क्षत्रिय–वाडवप्रभृतयो येऽप्यार्यदेशोद्भवा–

स्तेऽप्यज्ञान–दरिद्रता–व्यसनिता–दौर्भाग्य–रोगादिभि: ।
अन्यप्रेषण–मानभञ्जन–जनावज्ञादिभिश्चानिशं,
दु:ख तद्विषहन्ति यत्कथयितु शक्य न कल्पैरपि ॥५॥
रंभागर्भसम सुखी शिखिशिखावर्णाभिरुच्चैरय:–
सूचीभि' प्रतिरोमभेदितवपुस्तारुण्यपुण्य पुमान् ।
दु·खं यल्लभते तदष्टगुणित स्त्रीकुक्षिमध्यस्थितौ,
सम्पद्येत ततोऽप्यनन्तगुणित जन्मक्षणे प्राणिनाम् ॥६॥

जायमाणस्स ज दुक्ख मरमाणस्स जंतुणो । तेण दुक्खेण संतत्तो न सरई जाइमप्पणो ॥७॥ विरसरसिय रसंतो तो सो जोणीमुहा न निप्फडइ । मायाए अप्पणो वि य वेयणमउलं जणेमाणो ॥८॥ हीणभिण्णस्सरो दीणो विवरीओ विचित्तओ ' दुव्बलो दुक्खिओ वसइ सपत्तो चरम दस ॥९॥

वाल्ये मूत्रपुरीषधूलिलुठनाज्ञानादिभिर्नन्दिता,
तारुण्ये विभवार्जनेष्टविरहानिष्टागमादिर्व्यथा ।
वृद्धत्वे तनुकम्प–दृष्टचपटुता–श्वासाद्यतुच्छात्मता,
तत्का नाम दशाऽस्ति सा सुखमिह प्राप्नोति यस्या जन ॥१०॥ खुहिअ पि वासिअ वा वाहिग्घत्थ च अत्तय कहिउ । वालत्तम्मि न तरइ गमइ रुअतु च्चिय वराओ ॥११॥ खेल–खल-टियवयणो मुत्त–पुरिसाणुलित्त–सव्वंगो । धूलि–भरुडियदेहो किं सुहमणुहवइ किर वालो ॥१२॥ खिवइ कर जलणम्मि पक्खिवइ मुहम्मि कसिणभुयग पि । भुज्जइ अभुज्जपिज्ज वालो अन्नाण-दोसेण ॥१३॥ उल्ललइ भमइ कुक्कइ कीलए जपए असबद्धं । धावइ निरत्थय पि हु निहणतो भूयसघाय ॥१४॥ इअ असमज-सचिट्ठिअ अन्नाणविवेअकुलहरं गमिअं । जीवेण वालत्त पावसयाइं कुणतेणं ॥१५॥ बालस्स वि तिव्वाइ दुहाइ दट्ठूण निययतणयस्स ।

बलसारपुहइपालो निव्विन्नो भवनिवासस्स ॥१६॥ तरुणत्तणम्मि पत्तस्स धावए दविणमेलणपिवासा। सा काइ जीइ न गणइ देव धम्मं गुरु तत्तं ॥१७॥ तो मीलइ कह वि अत्थो जइ तो मुज्झइ तयपि पालतो। बीहेइ रायतक्करअसहराईण निच्च पि ॥१८॥ वड्ढते पुण अत्थे वड्ढइ इच्छा वि कह वि पुण दूरे। जह मम्मण-वणिओ इव सते वि धणे दुही होइ ॥१९॥ लद्धं पि धणं भोत्तु पावए वाहिविहुरिओ अन्नो। पत्थोसहादिनिरओ त्ति केवल नियइ नयणेहिं ॥२०॥ जइ पुण न होइ पुत्तो अहवा जाओ वि दुस्सीलो होइ। तो तह जूरइ अगे जइ कहिउ केवली तरइ ॥२१॥ पाणितलाइसु ससिसूरचक्कसंखाइलक्खणोवेआ। वज्जरिसहसघयणा समचउरसा य सठाणा ॥२२॥ तह वि हु रज्जति खणेण कुट्ठख-यपमुहभीमरोगेहिं। जह हुति सोयणिज्जा निवविक्कमरायतणउ व्व ॥२३॥ अन्ने उण सव्वंग गसिआ जररक्खसीइ जायति। रमणीण सज्जणाण य हसणिज्जा सोयणिज्जा य ॥२४॥ इअ विहवनयपराण वि तारुण्ण पि हु विडबणाठाणं। जे पुण दारिद्दहया अनीइमताइं ताणं तु ॥२५॥ परजुवइरमण-परदव्वहरण-वहुवेरक-लहनिरयाणं। दुन्नयधणाण निच्च दुहाइ को वन्निउं तरइ ॥२६॥ नत्थि घरे मह दव्व विलसइ पयट्टइ बणुत्ति। डिभा रुअति घरे हद्धी किं देमि घरणीए ॥२७॥ दिति न मह ढोयं पि हु अत्तसमि-द्धिइ गव्विआ सयणा। सेसा वि हु धणिणो परिहवति न य दिति अवयास ॥२॥ अज्ज घरे नत्थि घय तेल्ल लोण च इधण वत्थ। जाया य अज्ज तउणी कल्ले होही किहु कुडुवं ॥२९॥ वड्ढइ घरे कुमारी वालो तणओ न अत्थो। रोगवहुलं कुडुव ओसहमु-ल्लाइय नत्थि ॥३०॥ उज्जीआ मह घरणी समागया पाहुणा वहू अज्ज। जिन्नं घर च हट्ट झरइ जलं गलइ सयल पि ॥३१॥

कलहकरी मह भज्जा असंवुडो परियणो पहू विसमो । देसो अधारणिज्जो एसो वच्चामि अन्नत्थ ॥३२॥ जलहिं पविसेमि महिं तरेमि धाउ धमेमि अहवा वि । विज्ज मत साहेमि देवय वा वि अच्चेमि ॥३३॥ जीवइ अज्ज वि सत्तू मओ य इट्ठो पहू य मह रुट्ठो । दाणिं गहण मग्गं तिविह वि णो कत्थ वच्चामि ॥३४॥ इच्चाइ—महाचिंता—जरगहिया निच्चमेव दरिद्दा । कि अणुहवंति सुक्ख कोसविनयरिविप्पु व्व ॥३५॥ इय विहवीण दरिद्दाण वा वि तरुणत्तणे वि किं सुक्ख । दुहकोडिकुलहर चिय वुड्ढत्त नूण सव्वेसिं ॥३६॥ थरहरइ जघजुयल जिज्झइ दिट्ठी पणस्सइ सुई वि । भज्जइ अग पाएण होइ सि भोअइ पउरो ॥३७॥ लोगम्मि अणाइज्जो हसणिज्जो तह सोयणिज्जो अ । अच्छइ घरस्स कोणे पडिओ मंचम्मि कासतो ॥३८॥ वुड्ढत्तणम्मि भज्जा पुत्ता धूआ वहूजणो वा वि । जिणदत्तसावगस्स व पराभवं कुणइ अइदुसह ॥३९॥ चउसु पि अवत्थासु इअ मणुएसु वि विचिंतयंताणं । नत्थि सुह मुत्तूण केवलमभिमाणसजणिय ॥४०॥ वाला किड्डा मंदा बला य पन्ना य हायणि पवचा । पब्भार-मुम्मुही-सायणी य दसमी अ कालदसा ॥४१॥ दसवरिसपमाणाउ पत्तेयमिमाउ तत्थ बालस्स । पढमदसा बीया पुण जाणिज्ज सुकीलमाणस्स ॥४२॥ तइया भोगसमत्था होइ चउत्थी उ पुण बल विउल । पचमीआए पन्ना इंदियहाणी य छट्ठीए ॥४३॥ सत्तमीआइ दसाएकासइ निज्जुहइ चिक्कण खेल । सकुयइ वली पुण अट्ठमीइ जुवईण य अणिट्ठो ॥४४॥ नवमी अ नमइ सरीर वसइ य देहे अकामओ जीवो । दसमीइ मुयइ वियलो दीणभिण्णस्सरो खीणो ॥४५॥ धावेइ रोहण तरइ सायर भमइ गिरिणिउजेसु । मारेइ बधव पि हु पुरिसो जो होइ धणलुद्धो ॥४६॥ अडइ बहु सहइ

छुहं वहइ भर पावमायरइ। दिट्ठो कुलसीलजाइपच्चयघीर च लोभद्दुओ चयइ ॥४७॥ कइया वच्चइ सत्थो किं भड कत्थ कत्तिया भूमी। को कय–विक्कयकालो विक्किस्सइ किं कहिं केण ॥४८॥ उक्खणइक्खणइ निहणइ रत्ति न सुयइ दिया विय ससको। लिपइ ठइज्ज सयय लछियपडिलछियं कुणइ ॥४९॥ भुजसु न ताव रिक्को जेमेउ न वि य अज्ज मज्जीह। न विय वसीहामि घरे कायव्वमिण वहु अज्ज ।५०॥ किं किं न कय किं किं न कारिय कह कह न नामिय सीस। दुब्भर–उयरस्स कए किं न कय किं न कायव्व ॥५१॥ जिज्झइ मुहलायण्ण दाया घोलेति कठमज्झंमि। कह कह कहेइ हियय देहि त्ति पर भणतस्स ॥५२॥ न च निरूप्यमन्त करणे साक्षरैरिद, यदुत–भवन्तु नरकादिगति-त्रयीत्रिशङ्कुभिन्नभावितभावाना दुस्तराणि दु खवृन्दानि, न यानि वर्णयितुमाकर्णयितु वा पार्यन्तेऽपारसमयसागरपारङ्गमैरपि विद्वद्भि. प्रतिसमयाप्रतिहतप्रज्ञानपटुत्वविद्रितविश्वविश्वचराचराचारवाङ्मन कर्मतात्पर्यै केवलिभिरपि क्षुत्क्षामकुक्षिद्विजघृतपूरवाञ्छातिगवाञ्छापूरै श्रोतृभिश्च, पर विवुधालयविवर्त्ति–प्राग्भवविहितातुल-धर्मविधानजनितानन्यसाधारणसातादिकर्मोदयसम्पादितपरमप्रकृष्ट-पञ्चेन्द्रियभोगभ्राजिष्णुस्वावतारपरिहृतव्रतादिप्रतिपत्तिदिव्यप्रेम-भाजनसुराङ्गनाहावभावोत्पादिताख्यातिक्रान्तप्रमोदपूरमनोमात्रसा-श्रिताशेषकार्यपरानधीनकार्यलेशामयस्वेदजराकृतजर्जरशरीरत्वेन्द्रि-यहानिदृष्ट्यपटुत्वादिरहित–यथेच्छगमनागमनविधानविज्ञाप्रतिपा-तिज्ञानत्रयीधारणज्ञापितसदातनात्मनैर्मल्याना सुराणा तु कथङ्कारं दु खनामापि भविष्यतीति चेत्? मा भ्रातरस्त्वरिद्व कर्मजन्यसु-खमात्रस्य क्षीयमाणत्वेन प्रतिक्षण नामशेषतोहनीयैवोहावद्भि, यदाहुरन्येऽपि–“पुण्यचितोऽपि क्षीयते लोक.” इत्यादि, धर्मप्राचु-

येऽपि न तेषा नाधर्मलेशो, येन निरुपमसुखास्पद ते स्यु । यन्न दुःखेन सम्भिन्न न च भ्रष्टमनन्तरम् । अभिलाषापनीतं च तज्ज्ञेयं स्व सदा पद ॥ मित्यादि त्वौपचारिकमेवावगन्तव्य, भ्रष्टताया. श्रुतिस्मृति-शतेन सिद्धत्वात् । अन्यच्च—यथा तेषा शारीरिक सुख वर्णातिगं तथा दु.खमपि मानसिकमपि "सर्व हि महता महत्" इतिलोकोक्तिसत्यीकरणायेव महत्तममेव । यदाहु.—

"सम्यग्दर्शनपालनादिभिरपि प्राप्ते भवे त्रैदगे,
जीवा. शोक–विपाद–मत्सर–तपस्वल्पर्द्धिकत्वादिभि ।
ईर्ष्या–काम–मद–क्षुधाप्रभृतिभिश्चात्यन्तपीडार्दिता ,
क्लेशेन क्षपयन्ति दीनमनसो दीर्घं निजं जीवितम् ॥१॥

देवा वि देवलोए दिव्वाभरणाणुरंजियसरीरा । ज परिवडंति तत्तो तं दुक्खं दारुण तेसिं ॥२॥ त सुरविमाणविभव चिंतिय चवणं च देवलोगाओ । अइवलिय च्चिय ज न वि फुट्टइ सयसक्कर हियय ॥३॥ ईसा-विसाय-कोह-मय-माय-लोभेहि एवमाइहिं । देवा वि समभिभूआ तेसिं कत्तो सुह नाम ॥४॥ रिद्धिभरसजुआण वि अमराण नियसमिद्धिमासज्ज । पररिद्धि अहिअ पिच्छिऊण डज्झति अगाइं ॥५॥ उण्णयपीणपओहर–नीलुप्पलनयण–चदवयणाइं । अन्नस्स कलत्ताणि य दट्ठूण वि अंभइ विसाओ ॥६॥ एगगुरुणो सगासे तवमणुचिन्न मए विमणेणावि । हद्धी मज्झ पमाओ फलिओ एयस्स अपमाओ ॥७॥ इय ज्झूरिऊण वहुसो अइ कोइ सुरो महिड्ढियसुरस्स । भज्जं रयणाणि अ अवहिऊण मूढो पलाएइ ॥८॥ तत्तो वज्जेण सिरम्मि ताडिओ विलवमाणओ दीणो । उक्कोसेण वि य ण अणुभुजइ जाव छम्मासं ॥९॥ ईसाइदुहीअण्णो अण्णो वेरि जणकोवसतत्तो । अण्णो मच्छरदुहिओ नियडीइ विडविओ अण्णो ॥१०॥ अण्णो लुद्धो गिद्धो पमुच्छिओ रयणदारभवणेसु । अभिओ-

गजणियपेसत्तणेण अइदुक्खिओ अन्नो ॥११॥ पज्जते उण झीणम्मि आउए निव्वडततणुकपे । तेयम्मि हीयमाणे जायते तह विवज्जासो ॥१२॥ आणे वि लघमाणे अणायरे सयलपरिअणजणम्मि । त र्रिद्धि पुरओ उण दारिद्दभय नियताणं ॥१३॥ रयणमयपुत्तियाओ सुवण्णकंतीउ तत्थ भज्जाओ । पुरओ उण काण कुज्जिअ च असुइ च वीभच्छ ॥१४॥ तत्थ वि य दुव्विणीय कलेसलभं पिय मुणताणं । तत्थ मणिच्छिय-आहारविसयवत्थाइसुहियाण ॥१५॥ पुरओ परघरपेसत्तणेण विण्णायउयरभरणाणं। रमियाइ तत्थ रमणिज्जकप्पतरुगहणदेसेसु ॥१६॥ पुरओ गब्भे वसहि दट्ठु डुब्बीइ रासभीए वा । सा उप्पज्जइ अरइ सुराण ज मुणइ सव्वन्नू ॥१७॥ अज्ज वि अ सरागाण मोहविमूढाण कम्मवसगाण । अन्नाणोवहयाण देवाण दुहम्मि का सका ॥१८॥ सम्मद्दिट्ठीण वि गब्भवासपमुह दुह धुव चेव । हिंडति भवमणतं केई गोसालयसरिच्छा ॥१९॥" अत एव पठ्यते—"जइ ता-लवसत्तमसुरविमाणवासी वि परिवडति सुरा । चिंतिज्जंत सेसं ससारे सासय कयर ॥१॥ कह त भण्णइ सुक्खं सुचिरेण वि जस्स दुक्खमल्लियइ । ज च मरणावसाण भवससाराणुबंधि च ॥२॥" तत्त्वतस्तु तेषां वैषयिकसौख्यसमालिङ्गिततनूना प्रकर्षवत्पुण्यकर्ममात्रफलभोगभुजगाना न सुखलेशोऽपि परमार्थदृशाम् । यदाहुः—

"फलाभ्या सुखदु खाभ्या न भेद. पुण्यपापयो. । दुःखान्न भिद्यते हन्त यत. पुण्यफल सुखम् ॥१॥ सर्वं पुण्यफल दु.खं कर्मोदयकृतत्वत. । तत्र दु.खप्रतीकारे विमूढानां सुखत्वधी· ॥२॥ परिणामाच्च तापाच्च सस्काराच्च वुधैर्मतम् । गुणवृत्तिविरोधाच्च दु ख पुण्यभव सुखम् ॥३॥ देहपुष्टेर्नरामर्त्यनायकानामपि स्फुटम् । महाजपोपणस्येव परिणामोऽतिदारुण· ॥४॥ जलोका. सुखमानिन्य.

पिवन्ति रुधिर यथा । भुञ्जाना विषयान् यान्ति दशामन्ते सुदारुणाम् ।।५।। तीव्राग्निसङ्गसशुष्यत्पयसामयसामिव । यत्रौत्सुक्यात्सदाक्षाणा तप्तता तत्र किं सुखम् ।।६।। प्राक् पश्चाच्चारतिस्पर्शात्पुटपाकमुपेयुषि । इन्द्रियाणां गणे तापव्याप एव न निर्वृतिः ।।७।। सदा यत्र स्थितो द्वेषोल्लेख स्वप्रतिपन्थिषु । सुखानुभवकालेऽपि तत्र तापहत मन ।।८।। स्कन्धात् स्कन्धान्तरारोपे भारस्येव न तत्त्वत । अक्षाह्लादेऽपि दु.खस्य सस्कारो विनिवर्त्तते ।।९।। सुख दु ख च मोहश्च तिस्रोऽपि गुणवृत्तय । विरुद्धा अपि वर्त्तन्ते दु खजात्यनतिक्रमात् ।।१०।। क्रुद्धनागफणाभोगोपमो भोगोद्भवोऽखिल' । विलासश्चित्ररूपोऽपि भयहेतुर्विवेकिनाम्' ।।११।। एतेन 'नरविबुहेसरसुक्ख मन्नइ दुक्ख सतत्तपडिवद्ध" इत्यादौ सुरसुखाना कथकार दुःखरूपत्वेन विपरीतरूपतया श्रद्धान परमसम्यक्त्वनिमित्त,तस्य पदार्थयथार्थश्रद्धानात्मकत्वात्तस्य दु खरूपत्वे वा धर्मादेस्तन्निमित्तस्य "पुव्वि तवसजमेण देवा देवलोएसु उववज्जति"त्ति वचनाद्दु खहेतुत्वापत्ते स्पष्टैवाशुभकर्मपटलोपादानता। न चैतदपि परमागमानुरोधीति निखिल निरस्तम् सातवेदनीयोद्भवसुखस्यापातसुखत्वेनाऽऽपाताशुभाद्दुःखादशुभाश्रवोपात्ताऽसातवेदनीयोद्भवाद्भिन्नत्व यद्यपि, तथाप्यत्र सम्यग्दृष्टचसुमता परिणामानुधावित्वेन परिणामदु खत्वात् पारमार्थिकाविचलात्मानन्दानापादकत्वेन च दु खरूपताश्रद्धान न कथमपि युक्त्यतिरिक्तता दधाति । न हि विदितयथार्थाखिलेन्द्रियभोगसाधनसम्पादनपरायणचिन्तारत्नप्रभावस्य नुरन्येषु नातथाविधेषु रत्नेषु रतिर्भवति परमार्थसुखकाङ्क्षित्वादेव । न चैव पराणि रत्नानि न जेगीयन्ते, तथाऽत्रापि भावात् । यद्वा– न पूर्वभवीयौ तप सयमौ देवत्वावाप्तिकारणे, किन्तु प्रतिबध्यमानकर्मवर्गणान-

न्तानन्तप्रदेशाना जीवानाम् अध्यवसायशुद्ध्यापादकत्वान्नागच्छन्ति विरसानि कर्माणीत्येव प्रोच्यते सरागधर्मस्यैव तद्धेतुत्वादिति न धर्मजन्यमेव देवसौख्यम् । अत एव च–

"यस्तु यतिर्घटमान सम्यक्त्वज्ञानशीलसम्पन्न. । वीर्यमनिगूहमान शक्त्यनुरूप प्रयत्नेन ॥१॥ सहननायुर्वलकालवीर्यसम्पत्समाधिवैकल्यात् । कर्मातिगौरवाद्वा स्वार्थमकृत्वोपरममेति ॥२॥ सौधर्मादिष्वन्यतमकेषु सर्वार्थसिद्धिचरमेषु । स भवति देवो वैमानिको महर्द्धिद्युतिवपुष्क. ॥३॥" इति 'परमार्थालाभे वा दोषेष्वारम्भकस्वभावे'ष्वित्यादि च युज्यते । तथा च "सञ्ज्ञानयोग एवैकस्तथान्य पुण्यलक्षण" इति 'सरागसयम–सयमासयमे'त्यादि 'भूतव्रत्यनुकम्पे'त्यादि सर्वं सङ्गच्छते । बन्धकारणत्व तत्र न सयमादे किन्तु सरागत्वादेरेव "विशिष्टे विधि प्रतिषेधो वा विशेषण प्रति सङ्क्रामेते" इतिन्यायात् "न्यायसम्पन्नविभव" इत्यत्र न्यायसम्पन्नताया विधेरिव । इत्येव नारकादिभवानामनुभावो यथा शुभप्राधान्येन दर्शितस्तथा तद्वृत्तीना शुभप्राधान्येन ज्ञानन-यान्वितनभोगमनमोक्षगमनार्हत्वादितत्तच्छक्तिप्राधान्येन वर्णनीय । विस्तरभयाच्च नात्र प्रदर्श्यते । तृतीय पर्यायलोकस्य भेदमाहु.– "भावपरिणामे"त्ति । तत्र भवन्ति भविष्यन्ति अभूवन्निति भावा– जीवपुद्गलाद्यास्तेषा परिणामोऽवस्थान्तरगमनम् । यदाह–"परिणामो वत्थतरगमण न य सव्वहा विणासु"त्ति । स च वर्णभेदादिभेदेना नेकधा । तदाहु –

जइ कालगमेगगुण सुक्किकल्ल पि य हविज्ज वहुयगुण । परिणामिज्जइ काल सुक्केण गुणाहियगुणेण ॥१॥ जइ सुक्किकलमेगगुण कालगदव्व तु वहुगुण जइ य । परिणामिज्जइ सुक्क कालेण गुणाहियगुणेण ॥२॥ जइ सुक्क एक्कगुण कालयदव्व पि

एक्कगुणमेव । कावीय परिणाम तुल्लगुणत्तेण सभवइ ॥३॥ एव पच वि वण्णा सजोएण नु वण्णपरिणामो । एकत्तीस भगा सव्वे वि य ते मुणेयव्वा ॥४॥ एमेव य परिणामो गधाण रसाण तह य फासाण । सठाणाण य भणिओ सजोएण वहुवियप्पो ॥५॥ छाया य आयवो वा उज्जोओ तह य अधयारो य । एसो उ पुग्गलाण परिणामो फदणा चेव ॥६॥" छायादीना लक्षणान्याहु –

"सीया णाइपगासा छाया णाइच्चिया वहुवियप्पा । उण्हो पुण प्पगासो णायव्वो आयवो णाम ॥७॥ न वि सीओ न वि उण्हो समो पगासो य होइ उज्जोओ । काल मइल तम पि य त्रियाण त अधयार ति ॥८॥ दव्वस्स चलणपप्फदणा उ सा उण गईउ निद्दिट्ठा । वीसस–पओग–मीसा अत्तपरेण तु उभओ वि ॥९॥" इति । भवति द्रव्यगुणपर्यायाणा प्रागवस्थाया सर्वथाऽपरिहरणेऽप्यन्यदवस्थान्तर यत् परिणामशब्देनोच्यते । न च वाच्य कथ नाम पर्यायेपु परावृत्तिस्तेपामेव परावृत्तिरूपत्वादिति । मनुष्यत्वादे· पर्यायत्वेऽपि वालत्वादीना तदवान्तरभाविना परिणामत्वात् । अत एव च च्छिद्रघटत्वोपपत्तिर्घटाविनाशेऽपि, विभागविशेपस्यैव पदार्थनाशकत्वात् । न हि सयोगमात्रस्य पदार्थोत्पादकता, अन्यथा प्रत्यभिज्ञानादिप्रवलदोषोत्पत्तेः । न हि तन्तुमात्रेऽपकर्पिते न स पटो देवदत्तादिभि स्वकीयतया प्रत्यभिज्ञायेतोच्छिद्येत च एव सति सर्वोऽपि व्यवहार । आपत्तिश्च क्षणिकसिद्धान्ताभ्युपगमस्य । परिणामवादे तु न किञ्चनापि दूपणम् । न चान्यादृशाऽन्यघटाद्युत्पत्तौ भोक्तृजीवादृष्टकारणात्वकल्पना । खण्डघटत्वपरिणामविधाने तु न किञ्चिदनिष्टम् । एव च खण्डघटोत्पत्तिनिमित्तकारणतयेश्वरसिद्धिरप्यतर्कपचेलिमप्रारब्धोत्सारिता ज्ञेया, कर्करादेरेव तथा परिणामोपलम्भात्,

अन्यथा दण्डादेर्घटादिहेतुतैव पलायेत योजनाना शतम् । अन्यादृशे तद्धेतुताया तु महीयस्यभिनिवेशिता—यदसिद्धसाधनाय सिद्धस्य जर्जरीकरणं, पलायित च विजातीयकृत्यादिना विजातीयकार्योत्पत्तिकक्षीकारात् सामान्य कार्यस्य कृतिजन्यत्वमित्यनेनेश्वरसिद्ध्यै साध्यमानेनानुमानेन ।इदमेव च परिणामसाम्राज्य-यज्जातोऽप्यन्यथात्वेन यथार्थतया प्रामाणिकैः प्रत्यभिज्ञायते घटादिः । न चेदमेकान्तेन नित्येऽनित्ये वा पदार्थेऽभ्युपगम्यमाने घटाकोटिमाटीकते, आद्यस्य परिणामस्यैवाभावात्, अन्त्यस्य परिणामाधारस्यैवाभावाच्च । उपालभ्यते च विष्णुमित्रादिर्देवदत्तादिना—यदसौ मे घटस्त्वयैव छिद्रित इति । एवमेव भग्न—खण्डित—ध्वस्तेत्यादिनानात्वसाधनमपि विहायादृष्टान्याय्यकल्पनाकल्पनग्रहिलता यथार्थतया भावनीयम् । नन्वस्तु परिणामवाद प्रमासिद्ध., पर प्राक् प्रतिपादितकापोतादि· वर्णपरिणामश्छायान्धकारादीना च परिणामता न कथञ्चनापि प्रमाणसङ्गतिमञ्चेत् इति चेत्, न तावच्चित्ररूपसत्त्वे विवाद प्रामाणिकानाम्, अवयवभेदेन भिन्नभिन्नरूपवत्यप्यवयविनि चित्ररूपत्वाङ्गीकारात् । येऽपि चावयविनो नीरूपत्वमुररीचक्रु तेऽप्यवयवरूपस्य समुदायेनावयविनि भानमभ्युपगतवन्त एव, अन्यथा चाक्षुषप्रत्यक्षविरोधापातात् । न ह्यरूप वाय्वादिवत् चाक्षुषतामापद्यते । न च रूपवदवयवारब्धोऽवयवी नीरूपो भवितुमर्हति, नीलघटादेरप्यरूपत्वप्रसङ्गात् । न च नैकोऽप्यणुस्तत्र नानील·, स्पष्टतापि न तस्यासम्भविनी । अन्यच्च—न कथञ्चिदेकत्वाभावेऽनेकानामवयविरूपाणा स्वीकाराभावे चित्रमिदमिति भवेत् प्रत्यय । धान्यराशिरपि सर्वथा भिन्नभिन्नस्थलीयविप्रकीर्णधान्याना तथाप्रत्ययाभावात् भेदाभेदे भवतीति । न चावयव्यपेक्षयैकत्वस्यावयवापेक्षया नानात्वस्यानुभवोऽपि विरुध्ये-

तापेक्षिकवादे। इत्थं च "लोहितो यस्तु वर्णेन मुखे पुच्छे तु पाण्डुरः। श्वेतः खुरविषाणाभ्यां स नीलो वृष उच्यते ॥१॥" इत्यवयवभेदेन वर्णनमपि सङ्गच्छते। निरपेक्षे च नैकं रूपमिति प्रत्ययः। अन्यथा नीलं जगदित्याद्यापत्तेः। सर्वं चैतदपरिणते समाधिक्यभावेन वर्णे विचारितं, परं समाधिक्यादिना परिणतौ तु न केनाप्यपह्नोतुं शक्यं, चित्रं रूपं वर्णान्तरत्वादेव तस्याध्यक्षेणावलोक्यतेऽपि तत्तथा। न च संयोगजो वर्णपरिणाम एवमेवोत्पद्यते, प्रतिबध्यप्रतिबन्धकभावकल्पनायामपि कापोतादिपरिणामस्याध्यक्षसिद्धस्याकस्मिकत्वापत्तेः। न च चित्रताऽप्येकविधा कृष्णत्वादीनामपि, तथा सत्येकविधत्वापत्तेः। एकत्रिंशद्भङ्गा इत्यपि चोद्यंगमात्रं, सामान्येन गुणशब्दोल्लेखोऽप्यत एव। तथा च कापोतादीनामपि जघन्यगुणत्वादिसद्भावे न विरोधः। छायाया द्रव्यत्वमपि साध्यमानान्धकारवत् प्रतिपत्तव्यम्। तमश्च द्रव्यम्। यदप्युच्यते–तेजोऽभावोऽयमिति। तत्र चिन्तनीयमेतत्, यदुत–तेजोऽपि द्रव्यं न वा?। आद्ये, तद्ध्वंसे घटध्वंसे कपालद्वन्द्वमिव अवश्यमङ्गीकार्यं तदुत्तरावस्थपरिणतं द्रव्यम्, न हि सर्वथोच्छिद्यते द्रव्यं, प्रदीपविनाशे तत्तेजोविनाशेऽवश्यमेवेत्थं स्वीकारप्रसङ्गात्, ध्वंसस्यात्यन्ताभावत्वावगाहेन भ्रान्तत्वाद् द्रव्यापलापिनाम्। न च वाच्यं द्रव्यत्वे नाऽऽलोकनिरपेक्षचक्षुर्ग्राह्यता स्याद्। घटादेस्तथापत्तेस्तेजस एवातथात्वात् द्रव्यत्वेऽपि तस्याऽऽलोकेन स्वकीयेनाऽऽलोकवत्त्वेऽपि न कथञ्चनाप्यालोकस्यालोकवत्ता। औपाधिकत्वं गमनागमनादिकमपि दीपगमनागमनादिनाऽऽलोकस्यापि तथात्वात्। यद्वा–रक्तादिकाचेनालोकेऽपि रक्तत्वाद्युपलब्धेर्न स्यादालोकस्यापि परकीयगुणानुसरणादौपाधिकगुणवत्ताया द्रव्यता,अनन्तोत्पादविनाशकल्पना च न युक्तिप्रभृतिसिद्धेऽर्थे बाधिका। वस्तुतस्तु भावाना

वैचित्र्यमेव शरणम् । यत्त सत्यपि समाने पार्थिवत्वे वज्रं न लोहलेख्य, काष्ठादीनि च तथेति नैव पर्यनुयोज्य तत् । दृश्यते च कौशिकादयो रात्रौ निरीक्षमाणा आलोकसहकारितामन्तरेणाञ्जनसस्कृतचक्षुष्का मनुजा अपि चेति । तत्त्वत तमोऽतिरिक्तद्रव्यचाक्षुष प्रति तमस प्रतिबन्धकत्वमेव न्याय्यम्, मन्दतेजसि व्युष्टे यथा यथान्धकारनिवृत्तिस्तथा तथा दृष्टिप्रसरोऽध्यक्षसिद्ध सङ्गच्छते । न च यावद्दृष्टिपथेऽभूदावश्यकतेजोऽभावस्तत्रस्थैस्तत्रावलोकनात्तदा । न चालोके उद्भूतरूपवत्त्वेऽप्यस्त्युद्भूतस्पर्शवत्ता, येनोद्भूतरूपमुद्भूतस्पर्शव्याप्यमिति नियमः स्यात् प्रामाणिक । तथा चोद्भूतस्पर्शवत्त्वेन धूमेऽपि स्पर्शोऽस्त्युद्भूत इत्यप्यप्रामाणिकमेव, आलोकतीव्रतायामपि वाष्पोद्भवस्यानुभवसिद्धत्वात् साम्प्रदायिकैश्चाभ्युपगम्यत एव तमसि समीरणाभिव्यज्यमान शीतस्पर्श, यतोऽनुभूयत एवासितपक्षीयवायुशीतताविशेष । न च वायवीयोऽसौ, सदा तथानुभवप्रसङ्गात् । अत एव च शीतबहुलप्रदेशवदन्धकारबहुलप्रदेशे शब्दपटुतोपलब्धिश्च तस्य पट्वी साक्षादनुभूयते । किञ्च—तमो नीलमिति प्रतीतेरपि तमसो द्रव्यत्वस्वीकार आवश्यक. । बाधितेयमिति चेत् । केन ? न प्रत्यक्षादिना, तस्य प्रत्यक्षत्वानङ्गीकारात्, अङ्गीकारे च सत्त्वेन प्रतीतेरनन्यवृत्तित्वाच्च स्पष्टैव द्रव्यता । अनुमानादिकं तु न तद्बाधकम् । अभावे च तमसो नीलत्वेऽन्तरीक्षीयो निशाया दृश्यमान. कापोतवर्ण आकस्मिकतामेवापद्येत । कुमुदिनीबान्धवादेस्तु श्वेतप्रभाविधायित्वात् दिवा तु सर्वथैव तत्रत्यतमोऽभिभवाद्भानवीयकरनिकरेण न तथोपलम्भ. । एव च न तस्य पृथ्वीताऽपि, तस्या अनुष्णशीतस्पर्शवत्त्वात् । नीलरूपे च न पृथिवीत्वेन हेतुता । अस्तु वा विशिष्टनीलरूप प्रति तत्त्वेन हेतुता । ननु च यदि तम आवश्य-

कतेजोऽभावरूप तर्हि न तदनुसन्धानाभावे प्रतीयेत । न ह्यत्य-न्ताभावेऽप्रतियोग्युल्लेखो बोध स्फुरति, अननुसन्धाने च प्रति-योगिनो घटादिवत् सत्त्वेन प्रतीयमानतायामन्धकारस्य कथ भाव-तापत्तिस्तेन शक्याऽपलपितु ? । किञ्च-आलोकाभावो यद्यन्धकार किं तर्हि यावदालोकाभावो यत्किञ्चिदालोकाभाव आलोकसामा-न्याभावो वा ?। आद्ये, दीपाद्यन्यतमालोके सत्यपि शेषालोका-भावात्तमस्त्वेन प्रतीतिप्रसङ्गात् । न चाभावस्यास्ति पराभवा-वस्था, भावत्वापत्ते । द्वितीयस्मिँस्तु सत्यपि प्रदीप्रदीपादिना भास्करेण वोद्योतितेऽपि भवने भुवने वाऽस्त्येव अन्यतेजस्विना तेजोभाव , तेन तमोवत्ताप्रतीतिप्रसङ्गस्य दुर्वारतैव । यदि च कक्षीक्रियते आलोकसामान्याभावस्य तमस्ताप्रतीतिरिति । तत्र विचारणीय तावदिद—यद्यथा घटादीनामत्यन्ताभावे यत्किञ्चिद्-घटप्रतियोगिकाभावोऽत्र तु न तथेति किं कारण? कथ च मन्दते-जोयुतः कोऽपि प्रदेश सम्भवेत् तत्रैव भावाभावयो साङ्कर्य-प्रसङ्गात्, मन्दस्य तेजस आगमन चेत् नालोकसामान्याभाव इति किं तत्रान्धकार प्रतीयते ? कथ वान्धकारवत्ताप्रतीति ? तथा च द्वयोर्भावत्वे न सत्त्वयोरेवैव सम्भव । न ह्यशेन घटाभावो घटसत्ता वा सम्भवेत् कक्षीकृता वा सम्पूर्णालोकस्वीकारे च कथमन्धकारो मन्दतेजस्कता वा प्रतीयेत, व्यपदिश्यते चामन्दैरपि मन्दं तेजो मन्द तमश्च । न चाभावत्वे युक्तमिदम् । यथा तीव्र-मुत्कट प्रचुरं वा तेज इति प्रतीति प्रतीतिमत्ता, तथैव तमस्यपीति कथ भवेदभावताऽस्य ? । न हि तारतम्यमस्त्यभावे । यदि चालो-भाव एव तमस्तदान्धाना स्याद्भान, चक्षुरभावश्चेत् चक्षुष्मतोऽप्य-क्षिनिमीलने न तद्भानम् सन्निकर्षो नेति चेत्, स्पष्ट सन्निकर्ष सम्बन्ध , स च तमसो द्रव्यत्वे सत्येव घटते । अन्यच्च-अधिकरण-

भानाभावे नात्यन्ताभावभानम्, तमसो भान तु तदधिकरणभाना-भावेऽपि आवालगोपालाङ्गनं प्रसिद्धमेव, न गृह्यतेऽपवरकाकारोऽन्धकारग्रहणेऽपि । न च वाच्य न तर्हि ज्ञाता तमस स्यादियत्तेति । अभीष्टापत्तेः । न हि पयोमुक्पटलज्ञानेऽपि तत्परभागवर्ति नभोमण्डल गृह्यते केनापि । न च प्रौढालोकाद् वहिर्भागादपवरकान्त प्रवेशे पूर्वमन्धकारभान पश्चाच्चालोकवत्तया भानमपवरकस्याध्यक्षसिद्धम्, न चैतत्तमसो द्रव्यत्वे युज्यते इति वाच्यम् । यथा ह्यालोकाभिभूतदृष्टेर्नरस्यालोक एव स्पष्टवर्णस्य वस्त्रस्य स्पष्टत्वे-नाभानेऽपि वस्त्रीयवर्णस्य वस्त्रस्यान्यवर्णत्वेन भान, श्वेतस्य वा कम्बुन कामलोपप्लुततया पीतिमत्तया भान च, नैतावता दुष्टदृष्टयवलोकनाऽसत्यत्वे पदार्थस्वरूप वर्णव्यवस्था वाऽन्यथाऽङ्गीकर्तु युज्यते समीक्षावताम्, तथाऽत्रापि समीक्षणीयम् । सर्वं हि ज्ञान धर्मिण्यभ्रान्तमिति नियमेनात्र वर्णविपर्यासेऽपि धर्मिभ्रान्तत्वानुपपत्ते. । महिकावद् दृष्टे प्रतिवन्धकत्वमप्यस्य द्रव्यत्वसाधकमेव । यथा च महिका वायुविशेपेण नश्यति द्राक्, तथा तमोऽपि तेजसा । किञ्च-यदि तम· स्यादभावरूप, न स्यात्तस्याभिधानादौ नामावली । विद्यते च सा "ध्वान्त भूच्छायाऽन्धकारे" त्यादिना प्रतिपादिता । न चान्धत्व यथा दृष्टयुपघाते वर्त्तमानमपि व्यपदिश्यतेऽन्धादिनामान्तरैस्तथेदमपि भविष्यतीति वाच्यम् । तस्यादर्शनादिना स्पष्टमेव तथाद्योतनात् । न चात्र द्योत्यते तथा । न च तत्त्वतो दृष्टयभावमात्रस्यान्धत्वेनाभिधानम्, अन्यथा काष्ठादेरपि तथाभिधानापत्तिरुद्भवन्त्यनिवार्यप्रसरैव, किन्तु दृष्टिविकलदृष्टियोग्यप्राणिविशेष एव । असुरादिव्यपदेशोऽपि तथैव, न केवलाभावमुख्यत्वेन, किन्तु तद्विशिष्टावस्थावोधकत्वेन । न चात्राप्यालोकाभावलक्षणतमोयुक्तापवरकादिवोधकत्व तम.शब्देनाभिप्रेयमाण स्याद्युक्ति-

युक्तम्, तस्य तमोयुक्त-गहनतमो-गूढतम इत्यादिव्यपदेशेनाभिधानानर्हत्वापातात्। न चाभावत्वे तमसो युज्यते क्षपायास्तमस्विन्यादिरभिधानश्रेणि, तका च स्याद्दर्शिता तकनास्पद "तमी तमा विभावरी। रजनी वसतिः श्यामा वासतेयी तमस्विनी"। इत्यादिना दर्शिता चाभिधानसङ्ग्रहकृद्भिराह्वयालिस्तस्या। यच्चोच्यते-तम शब्दो द्रव्यवाचको न भवति, आलोकशब्दान्यत्वे सति आलोकनिरपेक्षचक्षुर्ग्राह्यवाचित्वादालोकाभावशब्दवदिति। तत्र किं नैव वक्तु शक्येत-यदालोकशब्दो द्रव्यवाचको न भवति, तम शब्दान्यत्वे सति तमोनिरपेक्षचक्षुर्ग्राह्यवाचित्वात्, घटाभावादिशब्दवदिति। प्रत्यक्षविरोध उभयत्रापि तुल्य। अन्यच्च--तम पद साभिधेय शुद्धार्थवत्पदत्वात्, घटादिपदवदितिनियमसाम्राज्यात् सत्प्रतिपक्षितमिदम्। दृष्टान्तोऽप्ययुक्त एव शुद्धपदत्वाभावात्, नियमविरुद्ध चानुमानमिदम्। किञ्च-एव तेज शब्दस्यालोकान्यत्वादिमत्वात् कथ द्रव्यवाचकता। तदर्थवाचकशब्दान्यत्वे इति विशेषणेऽपि घटपटादयोऽपि द्रव्यवाचका। न च मनुष्यत्वेन विशेषणीयो हेतुर्द्रव्यस्वरूपावधारणे, तस्यानर्थक्यात्। विशेषणेऽपि अञ्जनसंस्कृतचक्षुष्केनावलोक्यन्त एव घटादयो विनाऽऽलोकमिति नेष्टसिद्धि। तत्त्वतस्तु नैवान्तर्व्याप्तेरन्तरेण यादृच्छिकानुमानमात्रेण पदार्थसिद्धिः। न चात्र कार्यकारणभावादिना कथञ्चनाप्यस्ति व्याप्तिसिद्धि। एवमारोपितनीलरूप आलोकाभावो यावत्यालोकसद्भावे न तमोव्यवहारस्तावदालोकाभाव आलोकससर्गाभावसमुदाय एवान्धकार इत्याद्यपि सतामपकर्णनीयमेव, पूर्वोक्तनीत्यैवालोकाभावत्वेनाघटमानत्वात्। एव छायापि नाभावरूपा तमोवत् समानसाधनेति च न पृथगनुक्रान्तेति। विशेषश्चानयो. परिणामप्रतिपादकगाथायामेव "सीया नाइपगासा" इत्यादिना

दर्शित एवेति । किञ्च—यदि च्छाया न स्यात् परमाणुपरिणता, किमिति रजस्वलाच्छायाया अनर्थकारी परिणामोऽनुभूयते साक्षात्, कथं चादर्शादौ दृश्यते यथाऽऽकार वस्तु । न ह्यभावे स्यादाकृति-राकृतेर्भाव एवावस्थाननियमात् । न च सा भ्रान्ता, यथापदार्थो-पलम्भात्, यद्धि पदार्थानुसारि ज्ञानं न तदप्रमाणम् । छायाज्ञानमपि शरीराद्याकृत्याद्यनुसारेणोपजायमानच्छायाया एव जायते । अन्य-च्च—अभावे वर्णादिर्नाभ्युपगम्यते, दृश्यन्ते तु च्छायाया यथाविधि रक्तादयो वर्णा अविगानेन । ननु पराधीनोत्पादा छाया, न चैव भावे घटपटादौ, तथा विनश्यति चेय तु व्यपगते विनष्टे वा पदार्थे घटादिके इति चेत् । सत्य, किमभावस्यानुमता भावानुकारिता । न हीदृशोऽभ्युपेतो नियमो—यत् सत्येव भावेऽभावो, विनष्टे व्यपगते च नाभाव इति । यदि चोद्योताभावस्य च्छायात्व स्वीक्रियते, स्यात्तदान्धतमसावृतेऽपवरकादौ छाया, तस्या भान च । न चैव भवति, किन्तु स्पष्टोद्योते स्पष्टावलोदयते, विलोक्यते दीपादेरपि प्रद्योतयन्ती सर्वतश्छायाऽऽदर्शादौ । नैतावन्मात्र, किन्तु वहिरप्यु-द्योतयन्ती दृश्यत एव तेजस्व्यर्थपतिता छाया दर्पणादौ । न चाभा-वस्य भ्रमस्य वाभ्युपगन्तु युक्तमुद्योतकत्वादि । ननु च कथ तर्हि ग्रन्थकर्तृभि परिणामदर्शनावसरे "सीया नाऽपगासेति" प्रतिपादित छायाया. स्वरूपम्, यतो दीपादेश्छायाया उद्योतकत्वाद्यनुभवसिद्ध-मिति चेत् । सत्य, भास्वराभास्वररूपतया द्वेधा पदार्थ , तत्र भास्वरच्छायाया: स्पष्टं गम्यमानत्वात् प्रतीतत्वेनाप्रतीतमिति वचनात्तच्छायाया अनुमानागोचरता विभाव्य तादृशोऽकदाग्रहान् प्रति तदन्यच्छायायाः साध्यत्वमभिप्रेत्येद व्याख्याञ्चकु. पूज्य-पादा. । कदाग्रहाविष्टश्च नोपदेशार्ह इति तु सर्ववादिसम्मतमेव, मध्यस्थस्यैव तदर्हत्वात् । छायाया अभावे भ्रान्तत्वे वा कथ च

प्रतिविम्बग्राहिणि काचतले स्पष्ट मुखादिप्रतिकृति स्यात्। पदार्थ-जन्यत्वाच्च च्छायाया, न तदाधीनोत्पादादौ युक्त्यतिरिक्त, याव-ज्जपाकुसुमसन्निधान स्फटिके रक्तता, तद्विनाशे व्यपगते वा नेति। नैतावता वर्णस्य भ्रान्तता। तत्र रक्तस्यारोपिता चेद्, अन्यत्र नारो-पस्तत्रैवारोप इति वैचित्र्येऽन्वेपणीय कारण विहाय कदाग्रहग्रहि-लताम्। भवति चोद्योतेऽप्यन्यान्यवस्तुप्रकरस्य च्छाया, कथ चाभावरूपत्वे तस्या उद्योतस्य युज्येत ? कथ चाभावत्वे तस्या. शीत स्पर्शः, आरोपित उष्णत्वाभावान्नासौ वास्तव इति चेत्, किमुष्णत्वाभावेन श्लेष्मादि कम्पादि वा क्रियते ?। तथा च शीत-स्पर्श एव किमिति स्पर्शतयाङ्गीक्रियते, उष्णत्वाभावरूपेणैव तस्य एव सति स्वीकारौचित्यात्। न च वाच्य विनाशे तस्या अवयवा नेक्ष्यन्ते, यदि च स्यात् सा भावरूपा, स्युरेवावयवास्तस्या, घटादे कपालादिवदिति। मृगमद-घनसार-कर्पूरादे स्पर्शरूपादिमत. समूल-मुच्छेदेऽपि न तस्योपलभ्यन्तेऽवयवा.। न चैतावता न मृगमदादयो भावरूपा, उद्योतस्य वा किं दृष्टा अवयवा ? कथ च तस्य स्वीक्रियते भावतेति विचिन्त्यमेव चेतसि। स्पर्शवत्त्वे स्खलनावि-धानविधुरता तस्या सम्भवेदित्यप्युद्योतेन वाय्वादिना च स्वीकृतेन भावत्वेन समानयोगक्षेममित्यनोद्यमेव। पदार्थस्वभाववैचित्र्यादेव च दूरस्थस्य घटपटादेश्छायाभावसम्भव। न च दूरस्थेऽपि द्वादशा-त्मनि निशीथिनीशे वा सूर्यकान्ताच्चन्द्रकान्ताद्वोपलात् प्रादुर्भवति कृशानुरापो वेति तत्रापि स्वीकर्तुमुचिता भ्रान्तिमत्ता। अन्यच्च-एतदेवादर्शादेर्महार्घताकारणमनुभूयते यद् दूरदूरतरदूरतमादिवस्तु-प्रतिविम्बन सामान्यकाचतलस्यापि सत्येव नैर्मल्यविशेषे दूरादि-स्थितवस्तुप्रतिबिम्बम्, न चैतद्युक्तमभावत्वे प्रतिविम्बच्छायाया। एव च वाच्या स्वयमेव मनुष्यत्वादेरपि परिणामा उपयुज्य

यथागम क्षुण्णत्वाच्च नाख्याताः । यद्वा– भवानुभावव्याख्यानेन जीवपरिणामा एव व्याख्याता इति भावपरिणाम इत्यत्र पुद्गल-परिणाममुखेन परिणाम प्रतिपादितो जीवस्य । तदेव प्रज्ञाप्य पर्याय-लोकरूपमष्टम लोकभेद निगमयन्त आहु –"त जाणे"त्यादि । तत्र जानीहीति शिष्याभिमुखीकरणपूर्वकोदितोपयुक्ततासूचनाय–अवबुध्यस्व, अनेनाववोधयोग्याय अवबोधयोग्यपदार्थप्ररूपणाया साफल्यं दर्शयन्तो वालादिव्यवस्थयोपदेशवितरण प्रत्यपादि, अन्यथा हि विराधनाप्रसङ्गस्तज्जनितभवाटवीपरिभ्रमणप्रसङ्गश्च दुर्वार. । यदाहु–"यद् भाषित मुनीन्द्रै पाप खलु देशना परस्थाने । उन्मार्गनयनमेतद् भवगहने दारुणविपाकम् ॥१॥" [षोडशके] इत्यादि । किमित्याह–चतुर्विधमिति । चतस्रो विधा –प्रकारा , परस्परविभिन्नधर्मोपेताः सन्तोऽपि सामान्यसमानधर्मवत्त्व हि प्रकारत्वम् । तच्चात्र गुणपर्यायानुभावपरिणामाना पर्यायत्वाव्यतिरेकाद्युक्तत्वम् । क्षेत्रपर्याय इत्यत्र पर्यायशब्दस्य विशिष्टावस्थावाचकता, पर्याय-लोक इत्यत्र च पर्यायशब्दस्य धर्मवाचकताऽवसेया । तेन नोभयोरैक्यम् । यद्वा–गुणव्यतिरिक्तधर्मवाचकतया क्षेत्रपर्याय इत्यत्र पर्यायशब्दोऽन्यत्र तु यावद्धर्मवाचकतयेति यथार्थता विभागस्य । भवानुभावभावपरिणामयोस्तु प्रथमस्य जीवाजीवोभयजनितयाऽन्त्यस्य गुणविकाररूपतया भिन्नत्वाद्धर्मत्वाच्च पर्यायत्वात् पर्याय-लोकता न कथञ्चनापि युक्त्यतिरेकिणीति यथार्थैव पर्यायलोकस्य चतुष्प्रकारता, अवान्तरभेदस्यैव प्रकारार्थत्वात् । क चतुर्विधतया विद्याद् ? इत्याहु –'एत'मिति । एत पूर्वमानन्तर्येण व्याख्यातत्वात् निर्दिष्टमेतदा, भिन्नवाक्याभावादन्वादेशत्व न, तेन नैनदिति । अनेन पूर्वोक्तपदयोरखण्डवाक्यस्य वा कर्तृकृतो न भेदो न चाभेद इति सूचितम् । भेदेऽभेदे वा समीपतरत्ववाचिनैतदा निर्देशायोगात्,

कथञ्चिद्भेदाभेद एव तद्योगात्। एतस्य चतुर्विधस्यापि का आख्या? इत्याह –"पज्जवलोग" इति। तत्र परि -सर्वतोभावेन अवन-पदार्थ-परिपालनं पर्यायापेक्षयोत्पादव्ययसद्भावेन द्रव्यस्य रक्षणात्। यत उच्यते–"उप्पायट्ठिइभंगाइ हंदि दवियलक्खण एय" इति। यद्वा–अतीतादिपर्यायप्रमाणत्वाद् द्रव्यस्य पर्यवता पर्यवाणाम्। यदाहु - "एगदवियम्मि जे अत्थपज्जवा वयणपज्जवा वा वि। तीयाणा-गयभूया तावइय त हवइ दव्व ॥१॥" इति। अत्राद्ययोरर्थपर्या-यत्वमन्त्ययोर्व्यञ्जनपर्यायित्व चेति विवेक स्वयमूह्यः। पर्ययन वा परावर्त्तन वा मर्यादया-पर्यया पर्याया वा, द्रव्यस्यावस्थितत्वात् पर्ययन पर्यायाणामेव "उप्पज्जति वयति अ भावा नियमेण पज्ज-वनयस्स" इतिवचनात्। त एव समुदिता लोकमानत्वाल्लोक पर्यवलोक पर्ययलोक· पर्यायिलोको वा, पर्यवाणामानन्त्यात्। "जीवा पोग्गलसमया दव्वपएसा य पज्जवा चेव। थोवा णता णता विसेस अहिया दुवे णता ॥१॥ इति वचनात्। कथमेव निर्देश ? इत्याह –"समासेण"ति। सम्यग्विरोधाभावरूपतयासन–स्थापन, सम्यगविरोधेन वासन–वस्तूना पर्यायलक्षणाना निक्षेपण समास। समसन वा परस्परबाधाभावेनैकीकरणम्। न हि गुडदध्नोरिवैकी-करणे स्वरूपपरावृत्ति पर्यायाणामुक्त्येति समास, तेन। हेतौ, चतुर्विधपर्यायलोकज्ञानापेक्षया करणे वा तृतीया। नैव व्यपदेश-मन्तरेण भवति पर्यवलोकज्ञानमिति तृतीयया करणाख्यायिन्या व्यपदेश ॥९॥

तदेवं पर्यवलोकव्याख्यानाद्यद्यपि व्याख्यातो व्याचिख्या-सितोऽष्टविधोऽपि लोको "णाम ठवणा" इत्यादिना प्रक्रान्त., पर पर्यवलोकस्य विशेपतस्तदवान्तरभेदयोर्द्रव्यगुणभावपरिणामयोश्च दुर्ज्ञेयत्वादवगमसौकर्याय विशेषव्याख्यानाय क्षेत्रपर्यायभवानुभा-

वयोभावपरिणामतामनुसन्धाय द्विविधतया वा पर्यायलोकताख्या-
नाय वाऽऽह –

**वण्ण-रस-गंध-संठाण-फासठाणगइवण्णभेए अ ।**

**परिणामे अ बहुविहे पज्जवलोग वियाणाहि ॥१०॥**

व्याख्या–अत्रावधेय तावदिदम्–जीवस्य द्र-यत्वेन भावत्वेन च तद्गुणाना तत्पर्यायाणा चाऽऽख्यान नोपेक्षणीयतामर्हति, तथापि भावलोकस्य जीवगुणप्राधान्येन भवलोकस्य च जीवपर्याय-प्राधान्येन व्याख्यानात् पर्ययाणा च परिणामत्वात् नात्रोल्लेख जीवगुणपर्यायाणा विशदीकृतवन्त । यद्यपि च धर्मादेरजीवस्यापि सतो न प्राक् न चात्रापि उल्लेखो वैशद्येन विहितस्तथापि नानाग्वाशो विरचनीयो, धर्मादिवैशद्यस्य विशेषत आगमज्ञेयत्वात् । सामान्यतस्तु "जीवमजीवे रूवमरूवि" इत्यत्र "दव्वगुण" इत्यत्र च विवृतस्वरूपत्वात्, पुद्गलास्तिकायस्य त्वजीवत्वादिना समान-स्यापि सुप्रज्ञाप्यत्वाद्विशेषेण व्याख्या विधीयत इति । तत्र वर्ण्यते–निरूप्यते ज्ञायते वा स्पष्टतयाऽर्थोऽनेनेति वर्ण शुक्लादिभेदेन पञ्चधा । न च वाच्य कथ पञ्चधेति, कपिशादिभावादिति । अनेके हि सयोगजा वर्णा यानुक्तवन्त परिणामव्याख्याने । अत्र तु मूलभे-दव्याख्यानमेव । ननु परिणामव्याख्यानेऽपि व्याख्याता एकत्रिंशदेव भङ्गा वर्णानां मूलभेदै सह, विधानानि च बहून्येव वर्णानां न च तानि तत्रात्र वा व्याख्यातानि, वर्णतारतम्यतादर्शनाच्चैकजातीयेऽपि वर्णे नैतत् स्वबुद्ध्युद्गीर्णमिति चेत् । सत्य, विभागो हि सामान्य-विशेषरूपेणाभिप्रेयते । तत्र वर्णत्वेन विभागाभाव: केवलेन विभा-गविस्तारव्याख्यान चैकगुणादानन्तगुण तारतम्यभावान्नैव शक्य निरूपयितुम्, न च सुज्ञेयमपि च्छद्मस्थैरिति सामान्यविशेषरूपेण पञ्चप्रकारत्वरूपेण मूलभेदभूतेन व्याख्यानं, सयोगजाश्च प्रत्यक्ष-

गम्या· परिणामजाश्चेति परिणामव्याख्यानावसरे व्याख्याता इति न काप्यसङ्गति·। तथा च कपिशादिवद्यदि संयोगजा वर्णाः परिगणनीयास्तर्हि न केवलास्ते सप्त, किन्त्वेकत्रिंशदेव व्याख्येया । अन्यच्च–कपिशस्य सयोगरूपत्वे यथा पृथक् ख्यान तथाऽन्येषामपि किमिति धूसरादिवर्णानां नाख्यान ? चित्रतयाभिमाने च तेषा किं न कपिशस्यापि, अवयवाना भिन्नभिन्नवर्णताकृतत्वादिति चेत्, न, तदपि अवयवाना भिन्नवर्णत्वे केवलमौपचारिकमेवावयविनस्त-द्वर्णत्वम् । न हि प्रत्यवयव कपिशत्वादि विद्यते । यथा हि द्वित्वादि अपेक्षाबुद्धिजनित, तथा कपिशत्वादि । ततो न भेदाख्यान पार्थक्येन भवति युक्तियुक्तम् । चित्रत्व च सामान्यरूपेण परिगण्यमानमपि न मूलभेदतामर्हति सयोगजत्वात् । ननु परिणामव्याख्याने किं तर्हि मूलभेदा अपि परिगणिता? यतो न ते सयोगजा इति चेत् । सत्य, परमन्यवर्णपुद्गलानामन्यवर्णत्वेन परिणतिसद्भावात्तेषा मूलभेदाना पारिणामिकभङ्गवृन्दे आख्यानम् । यद्वा–तीव्रमन्दभावस्तत्तद्वर्णस-मायोगेऽपि भवन् विलोक्यत एवेति तेषा पारिणामिकतयाख्यानम् । वर्णसमायोगेन भवन्त्येव तथापरिणामा प्रत्येकपरिगणितवर्णरूपा इति तेषा तथाख्यानम् । ननु च कथ तर्हि मूलभेदा कथ वा कापोतादय उत्तरभेदा ? इति चेत्, न लक्ष्यन्तेऽत्र सयुक्ता वर्णा कथञ्चिदपि, कापोतादिषु तु ये ये संयुज्यन्ते ते ते ज्ञायन्तेऽवयव-विभागे सूक्ष्मनिभालने वा तत्तच्छाययेति तेषा पृथग्वर्णत्वं वर्णितं शास्त्रकृद्भि कृष्णादीनाम्, न तु कपिशादीनामिति ज्ञेयं सूक्ष्मधिया सूक्ष्मधीभिर्यथागम विभाव्य । यद्वा–पञ्चापि वर्णा सन्त्येव प्रतिस्कन्ध, पर यदोपष्टम्भकं यथाऽवाप्नोति तदा तथा परिण-मतीति । दृश्यते कृष्णादे संयोगजत्वमपि कस्यचित्, पर नैतावता मूलभेदविलोपापत्ति । अयमेव न्यायो वायुसयोगजन्यत्वेऽपि

पानीयस्य भिन्नकायत्वेऽवगन्तव्य, यतस्तत्रापि विद्यत एव वायुकायतया परिणतानां पुद्गलाना तथास्वभावतापरिणतो वा वायुरुभयमीलनेनोदकतया नोभयज्ञाज्ञेयोऽवयवत्वे तु तथैवोपलब्धे रूपस्पर्शवत उपलम्भे सर्वथा नैकेन्द्रियव्यापारः, यथा न वाऽवयवज्ञान विनाऽवयविज्ञान, स्पष्टाश्चेदवयवा न च वायुद्वयस्य स्पष्टताऽप्सु, किन्तु तदेकरूपतया परिणत वायुद्वन्द्व तथा स्पष्टमेव पार्थक्य, अन्यथा कापोतादीनामवयवोल्लेखो भवेत् । न च वाच्यम्, तथापार्थक्येऽपि जीवनिकायत्वेन कथ पार्थक्यमिति । यथा हि नराणा शरीर कृम्यादिभि स्वशरीरतया परिणाम्यते, परिणमति च तदेव पुनर्धान्यरूपापत्त्या मानुषशरीररूपतयैव विध्वस्य वायुरपगच्छन्ति उत्पद्यन्ते चाप्कायिका अप्यत्रेति विवेचनीयं विवेकिना वर्णितपरिणामवत्प्रकृतिवच्च । रसादिष्वपि ज्ञेयम् । रस्यन्त—आस्वाद्यन्त इति रसास्तिक्तादय पञ्चधा । ननु च कथ पञ्चैव रसा, षष्ठस्य लवणस्यापि भावात्, अम्ललवणयोश्च स्पष्टैव वेविद्यते भिदेति चेत् । सत्य वेविद्यते । पठ्यते चात एव स्थानान्तरे—"तित्ते वा कडुए वा कसाए वा अबिले वा महुरे वा लवणे वा" इति । अत्र तु "रसओ परिणया जे उ पचहा ते उ कित्तिया । तित्त—कडुयकसाया अबिला महुरा तहा ॥१॥" इत्यादाविव तस्य सयोगजत्वाभिप्रायेण न पृथक् परिगणना, दृश्यते चौदनादौ मात्रया क्षिप्त लवण केवलमाधुर्यपोषकम् । न हि तत्रानुभूयते क्षारतालेशोऽपि । न चाल्पत्वादभिभूत स रस इति वाच्यम्, तथा सति माधुर्यविशेषोपलम्भायोगात् । सयोगत्वेऽपि कपिशादिवत् कापोतादिवद्वा । अवयवोल्लेखाभावस्तु तथापरिणते, तथात्वेऽपि पृथगगणनं तु मधुरादिपोषकत्वाभावप्रसङ्गात् । अम्लादयोऽपि क्षारानुगृहीता एव स्वस्वभावं याथातथ्येन दर्शयन्ति । तथा च परिणा-

म्यय रसः पारिणामिकोऽपि चेति न तस्य पार्थक्यम् । लवणो रसश्चैवलक्षणः पठ्यते पुराणैः—"यल्लवण. स्यन्दयत्यास्यं कपोल-गलदाहहृत्" इति । एतच्च मधुरादीनां संयोगेनासम्भवीति । किञ्चाम्लफलानामेव रससमुदायो भवत्येव क्षार इत्यम्लपरिणामिता स्पष्टैव लवणस्येति । रसपञ्चकलक्षणानि चैव—

"तिक्तो विशदयत्यास्यं रसन प्रतिहन्ति च । उद्वेजयति जिह्वाग्र कुर्वंश्चिमिचिमा कटु ॥ स्रावयत्यक्षिनासाग्र कपोलौ दहतीव च । कषायो जडयेज्जिह्वां कण्ठश्रोतोविवन्धकृत् ॥ अम्ल. क्षालयते मुख हर्षणो रोमदन्तानामक्षिभ्रुवनिकोचनः । तेषा विद्याद्रस स्वादु यो वक्त्रमनुलिम्पति । आस्वाद्यमानो देहस्य ह्लादनोऽक्षप्रसादन । प्रिय. पिपीलिकादीनाम्" इति । अनानुपूर्व्या चाख्यानमेषां पारमर्षक्रमानुरोधेन । भिषग्वाङ्मये तु मधुराम्ल-लवण-तिक्त-कटु-कषाया इत्येवानुक्रम । बोध्यमत्रैदम्पर्यविवुभुत्सुभिः-यद्वयवह्रियते शुण्ठ्यादि तिक्त, कटु च निम्बादि, परं गुणाद्यनुसारेण पारमर्षे वैद्यके चेष्यते शुण्ठ्यादीना कटुता, तिक्तता च निम्बादीनाम् । स्पष्टीभविष्यति चोपरितनतल्लक्षण-श्लोकान्तर्गतवाक्याभ्या क्रमेण "रसन प्रतिहन्ति कुर्वंश्चिमिचिमा" मिति लक्षणाभ्याम् । कर्माण्यप्येवविधान्येवानयोः, आख्यायते चात एव सर्वेषा कर्माणि, तद्यथा—

मधुरो रस·— आजन्मसात्म्यात्कुरुते धातूना प्रवलं वलम् । वालवृद्धक्षतक्षीणवर्णकेशेन्द्रियौजसम् ॥१॥ प्रशस्तो वृंहण कण्ठ्यः स्तन्यसन्धानकृद् गुरु. । आयुष्यो जीवनः स्निग्ध पित्तानिलविषापह ॥२॥ कुरुतेऽत्युपयोगेन स-मेद कफजान् गदान् । स्थौल्याग्निसादसन्न्यासमेहगण्डार्वुदादिकान् ॥३॥ अम्लोऽग्निदीप्तिकृत्स्निग्धो हृद्य पाचनरोचन । उष्णवीर्यो हिमस्पर्श प्रीणनो भेदनो लघुः

॥४॥ करोति कफपित्तासम्मूढवातानुलोमनम् । सोऽत्यभ्यस्तस्तनो कुर्याच्छैथिल्य तिमिर भ्रमम् ॥५॥ कण्डूपाण्डुत्ववीसर्पशोफविस्फोटतृड्ज्वरान् । तिक्त स्वयमरोचिष्णुररुचिं क्रमितृड्विषम् ॥६॥ कुष्ठमूर्छाज्वरोत्क्लेशदाहपित्तकफान् जयेत् । क्लेदमेदोवसामज्जशकृन्मूत्रोपशोपण: ॥७॥ लघुर्मेध्यो हिमो रूक्ष स्तन्यकण्ठविशोधन । धातुक्षयानिलव्याधीनतियोगात्करोति स ॥८॥ कटुर्गलामयो दर्दकुष्ठालसकशोफजित् । व्रणावसादनस्नेहमेद क्लेदोपशोषण. ॥९॥ दीपन. पाचनो रुच्य शोधनोऽन्नस्य शोषण । छिनत्ति बन्धान् स्रोतासि विवृणोति कफापह. ॥१०॥ कुरुते सोऽतियोगेन तृष्णा शुक्रबलक्षयम् । मूर्छामाकुञ्चन कम्प कक्षिपृष्ठादिषु व्यथाम् ॥११॥ कषाय पित्तकफहा गुरुरस्रविशोधन । पीडनो रोपण शीत. क्लेदमेदोविशोषण ॥१२॥ आमसस्तभनो ग्राही रूक्षोऽतित्वक्प्रसादन । करोति शीलित सोऽतिविष्टम्भाध्मानहृद्रुज ॥१३॥ तृट्कार्श्यपौरुषभ्रशस्रोतोरोधमलग्रहान ।" इति । लवणस्याप्यभिहित कर्म, तदप्याख्यायते येनेतररसानामशागकर्मसाधर्म्येण तस्य सयोगजत्व प्रतिभायात्—"लवण स्तम्भसघातबन्धविध्यापनोऽग्निकृत् । स्नेहनः स्वेदनस्तीक्ष्णो रोचनश्छेदभेदकृत् ॥१॥ सोऽनियुक्तोऽस्रवपन खलतिपलित वलिम् । तृट्कुष्ठविषवीसर्पान् जनयेत्क्षपयेद्बलम् ॥२॥" इति । तिक्तकटुगुणौ च स्पष्टतया प्रत्यायकावेव क्रमेण निम्बशुण्ठ्यादीना, यत उच्यते—

"तिक्त पटोलीत्रायन्तीवालकोशीरचन्दनम् । भूनिम्बनिम्बकटुकातगरागुरुवत्सकम् ॥१॥ नक्तमालद्विरजनीमुस्तमूर्वाटरूषकम् । पाठापामार्गकास्यायो गुडूचीधन्वयासकम् ॥२॥ पञ्चमूल महद्व्याघ्रयौ विशालातिविषावचेति" । तथा—"कटुको हिगुमरिचक्रमिजि पञ्चकोलकम्" इति च । नाथ धार्या लेशतोऽपि रसविपर्यये

रसवता विप्रतिपत्तिः। तत्त्वत तिक्तादिरसपञ्चक, व्यवहारा-नुगतिमाश्रित्य तु षट्क रसाना, तत्राद्ये भङ्गा परिणामे एकत्रिंशत, द्वितीयस्मिस्तु त्रिषष्टि, यत उच्यते–

"षट् पञ्चका षट् च पृथग्रसा स्युश्चतुर्द्विकौ पञ्चदशप्रकारौ। भेदास्त्रिका विंशतिरेकमेव द्रव्य षडास्वादमिति त्रिषष्टि ॥१॥"

अवयवभेदे तु प्रत्येकमपरिमिता भेदा इति वर्णवदेव विभावनीयमिति न पुनर्वचनीयम्। सान्निपातिकसान्निपातिकभेदे क्रियमाणेऽपि भवेदेव विशेषसङ्ख्या पुर पुर इति स्मरणार्थं चात्रोल्लेख। तथा गन्धयते इति गन्धो "बस्ति गन्धिण् अर्दने" इतिपाठात्। स च सुरभीतरभेदेन द्विधैव। सयोगजस्तु केवल एक एव द्वयोस्तथाभावादेव, पर तारतम्यकृता अनेके भवेयुर्भेदा अविरुद्धाश्च परिणामाख्याने। तथा "सठाण"त्ति। तत्र सन्तिष्ठ-त्यनेनेति सस्थान परिमण्डलादि पञ्चधा। यदाहु–

सठाणपरिणया जे उ पचहा ते वियाणिया। परिमडला य वट्टा य तसा चउरस आयय ॥१॥" त्ति। ननु सस्थानानि श्रूयन्तेऽन्यत्र षट् समचतुरस्रादीनि, यदुच्यते–"समचतुरस निग्गोह साई खुज्जाइ वामण हुड।"त्ति। कथमत्र पञ्चाऽन्यादृशानि चेति चेत्। सत्यम्, पर तानि शरीराण्याश्रित्य लक्षणसहितरहितत्वेन भिद्यन्ते जन्तो कर्मोदयानुसारेण। इमानि तु पुद्गलेषु प्रयोग-विस्रसोभयोद्भवानि पञ्चधैवेति नानयोर्विरोध। पञ्चकं चैत-दाकृतिमात्रमभिप्रेत्योक्तम्, परिमाणेन त्वमिता एव भेदा एषाम्। आकृत्यापि चैषा घनप्रतरौजोयुग्मकृता भेदा पठ्यन्त एव, येन भवन्त्यष्टादश भेदा सस्थानानाम्। यदाहु–

परिमडले य वट्टे तसे चउरस आयए चेव। घणपयर पढमवज्ज ओय पएसे य जुम्मे य ॥१॥"[उत्तरा० नि०]त्ति।

अत्र परिमण्डलस्यान्तो रिक्तत्वनियमाद् घनप्रतरभेदतया निषेध आख्यायि । यद्यपि कैश्चिदाख्यायते यद्वृत्तमेव सस्थान मूलप्रकृत्या तस्यैव तथा तथा सयोगे तथा तथा सयोग इति, पर नैतदतिचारु, त्र्यस्त्रचतुरस्रादौ कोणाभावप्रसङ्गात् । न चाकृतिशास्त्रे बिन्दू-नामिवास्ति परमाणूनामाकृतिर्यदपेक्षया वृत्तस्यैव मूलसस्थानत्वं स्यात् इत्यल प्रसङ्गेन । आद्यस्य द्विभेदत्वाच्छेषाणां च चतुर्णां चतुश्चतुर्भेदवत्त्वादष्टादश भेदा सस्थानस्य मौलिका., यत आहुः—

पचय बारसय खलु सत्तय बत्तीसय च वट्टम्मि । तिय छक्क य पणतीसा चउरो य हवति तसम्मि ॥१॥ नव चेव तहा चउरो-सत्तावीसा य अट्ठ चउरसे । तिग दुग पन्नरसेव य छच्चेव य आयए हुति ॥२॥ पनरस पणयाल बारस छब्भेया आययम्मि सठाणे । परिमडलम्मि बीसा चत्ता य भवे पएसाणं ॥३॥ इति ।

गमनिका च सौकर्यायैवं विज्ञेय—तावदित घनत्वमन्तो भृत सर्वत: सम च, प्रतरत्वमन्तो भृत पर न सर्वतस्तथा, ओजस्त्वं विषम-प्रदेशश्रेणिक, युग्मत्व च प्रदेशयुगलश्रेणिक, जघन्यपदे चैतत्सङ्ख्य-कप्रदेशैरेवोद्भवन्ति सस्थानानि । तत्र परिमण्डलस्यौजआदि-विभागाभावात्तदुल्लङ्घ्य वृत्तादिक्रमेण प्रतिपादनम् । तत्र सर्वत-श्चतुर्षु प्रदेशेषु स्थापितेषु मध्ये चैकस्मिन् स्थापिते तस्मिन् भवति वृत्त प्रतरौजआख्यम् । स्थापना .:. । प्रतरयुग्माख्ये च वर्त्तुलाकारेण प्रथम युगल पश्चाद्द्विश्चत्वार पश्चाद्द्वौ चेति द्वादश प्रदेशिक वृत्त भवति । जघन्यत इति तु सर्वत्रावधार्य-मेवानुक्तमपि, स्थापना .::. । घनौजोवृत्त च चतुर्षु प्रदेशेषु सर्वत एकस्मिश्च पूर्ववत्स्थापिते तस्यैकस्योपर्यधश्चैकैको न्यस्यः प्रदेश. । तथा च सप्तप्रदेशमान तद्भवति । स्थापना ·३· । घनयुग्मवृत्ते च द्वात्रिंशत्प्रदेशाना, ते चैव पूर्वोक्तप्रतरयुग्मस्थापनाया मध्यभागवृ-

त्तिप्रदेशे चतुष्के प्रत्येकं चत्वारश्चत्वारो न्यस्याः प्रदेशा । शेषेपु त्वष्टस्वेकैकः। तथा च सर्वे द्वात्रिंशदेव। स्थापना च २ २ / २ ४ ४ २ / २ ४ ४ २ / २ २ इति वृत्तचतुष्कम्। त्र्यस्रचतुष्क चैव–प्रतरौजस्त्र्यस्रं त्रिभिः प्रदेशैस्त्र्यस्रतया स्थापितैरेव निष्पद्यते। स्थापना ⁛ । प्रतरयुग्मत्र्यस्रे च षट् प्रदेशा. पूर्वोक्तस्थापनाया पुरत प्रदेशत्रिकस्थापने तथाऽऽकृतिभावात्। स्थापना ⁛ ⁛ । घनौजस्त्र्यस्र तु प्रदेशाना पञ्चत्रिंशता। तच्चैव–प्रथमपङ्क्त्या प्रदेशपञ्चक न्यस्यमेकशो, द्वितीयस्यां तु द्विश्चत्वार, तृतीयस्या त्रिस्त्रय', चतुर्थ्यां तु चतु.कृत्वो द्वौ द्वौ, पञ्चम्या तु पञ्चकृत्व एकैकः। सर्वे चैते पञ्चत्रिंशदेव। स्थापना त्वियं ५ / ४ ४ / ३ ३ ३ / २ २ २ २ / १ १ १ १ १ । घनयुग्मत्र्यस्रे तु चत्वार एव प्रदेशा', पूर्वोक्तप्रतरौजस्त्र्यस्रप्रथमपाङ्क्तिकप्रदेशोपरि द्वितीयविन्यासे तावतामेव भावादाकृतिरपि च जायत एवाभिप्रेता। स्थापना ⁛ । इति त्र्यस्रचतुष्कम्। अथ चतुरस्रचतुष्क, तत्र प्रतरौजश्चतुरस्रे नवप्रदेशा.। कथमिति चेत्?, प्रथमपङ्क्तौ क्रमेण त्रय एकैकास्तदधो द्वितीयपङ्क्त्या तथा त्रयस्तृतीयस्यामपि च, तथा च नवैव प्रदेशाः। स्थापना च ⁙⁙⁙। प्रतरयुग्मचतुरस्रे चत्वारः प्रदेशाः प्रथमद्वितीयपङ्क्त्योस्तथाकारेण द्वयोर्द्वयोर्न्यासात्। स्थापना ⁛। घनौजश्चतुरस्र तु प्रदेशाना सप्तविंशत्या, कथमिति चेत् पूर्वोक्तप्रतरौजश्चतुरस्रे उपर्यधश्चैकैककन्यासे तावता तथाऽऽकृत्या च भावात् स्थापना ३ ३ ३ / ३ ३ ३ / ३ ३ ३ घनयुग्मचतुरस्रे तु प्रदेशाष्टकमेव कथ पूर्वोक्तप्रतरयुग्मचतुरस्रस्योपरि तथैव तावता न्यासात् स्थापना चेयं २ २ / २ २ एवं चतुरस्रचतुष्क अथायतचतुष्क तत्र प्रतरौजआयत प्रदेशपञ्चदशकनिष्पन्न कथमिति चेत् तिसृष्वपि पङ्क्तिषु तदाकारेण पञ्चपञ्चप्रदेशा स्थाप्या. स्थापना ⁙⁙⁙⁙⁙ प्रतरयु-

ग्मायतेतु पडेव त्रयाणा त्रयाणा श्रेणिद्वये स्थापनात् स्थापना ::: घनौजआयते पञ्चचत्वारिंशत् प्रदेशाना कथमिति चेत् प्रथमद्वितीयतृतीयासु पङ्क्तिषु प्रतरौजस्तया न्यस्तासु उपर्यधश्चैकैक प्रदेश प्रतिप्रदेश न्यस्यते, जायते पञ्चचत्वारिंशत्। घनौज-आयत च सस्थान, भवन्ति च पञ्चदश त्रिगुणिता. पञ्चचत्वारिंशत्। स्थापना ३३३३३ ३३३३३ ३३३३३ । घनयुग्मायते तु द्वादश प्रतरयुग्मायतस्योपरि प्रतिप्रदेशमेकैकप्रदेशस्थापनया द्विगुणिताना षण्णा द्वादशभावात्। स्थापना २२२ २२२ । एवमायतचतुष्कम्। परिमण्डल तु सस्थान न सम्भवति चतुर्धा, किन्तु घनप्रतरभेदेन द्विधैव, प्रतिपादित च प्रागेतत्। तत्र प्रतरपरिमण्डले विंशति प्रदेशा। कथ ? चतसृषु दिक्षु प्रत्येक श्रेण्या प्रदेशचतुष्क स्थाप्यम्। अन्तरान्तरा चैकैक. प्रदेशस्तथा च विंशतिरेव प्रदेशानाम्। स्थापना च । तथा घनपरिमण्डले तु चत्वारिंशत्प्रदेशानाम्, विंशतेरुपरि पूर्वोक्तानामेकैकप्रदेशस्थापनात् द्वे विंशती च चत्वारिंशत् स्थापना । अत्रेदमवधेयम्—यत्प्रतरौजोवृत्ते प्रदेशपञ्चक तत्र यदि नान्तस्त्य स्यात्,स्यात् परिमण्डलता,पूर्वादिदिक्के चापनीते तु घनयुग्मत्र्यस्रता स्यादिति युक्तमेव जघन्यत प्रदेशपञ्चकनिष्पन्नमेतदिति। प्रतर-युग्मवृत्ते च द्वादशप्रदेशात्मके यद्यपनीयन्ते विषमसङ्ख्याका प्रदेशा, स्यादोजस्ता प्रदेशाना, सस्थानस्य चाऽऽयततादि प्रतिदिश द्विद्विप्रदेशभावे च मध्येऽवश्य प्रदेशचतुष्कमेव योग्यमन्यथा शुषिरभावात्। घनौजोवृत्ते तु प्रदेशद्वयवृद्धि विना घनत्वस्य सवृत्तत्वस्य निवृत्तिरेव न स्यादिति सप्तप्रदेशता। घनयुग्मवृत्ते च या द्वात्रिंशत् प्रदेशाना, तत्रेद तत्त्व—युग्मत्वादेव प्रतिदिश स्थाप्यौ द्वौ द्वौ प्रदेशौ। तथा च स्थापने च सुतरा मध्ये प्रदेशचतुष्कस्थापनस्यावश्यकता, अन्यथा शुषिरतासस्थानभेदयो. प्रसङ्गात्।

एव प्रतरौजस्त्र्यस्रे त्रिप्रदेशनिष्पन्नत्व, युग्मे च षडेव प्रदेशास्तस्मिन् युग्मत्वादेव। घनौजस्त्र्यस्रे पञ्चत्रिंशत्, कथमेतावता जघन्यत्व ? न्यूनसङ्ख्येभ्यो भावादिति चेच्छृणु, घनत्व विषमत्व त्र्यस्रत्वं चेति त्रीण्यत्र समानेयानि। तत्र प्रदेशत्रिकेण प्रदेशषट्केन ओजोयुग्मप्रतरता, द्वादशभिस्त्रिद्वियुगलैकत्रिकन्यासीभूतैर्नौजस्त्व। तथा च द्वियुग्मैककलक्षणेन प्रदेशचतुष्केणापि न तथा चतुर्द्वित्रिकत्रिद्विकचतुरेककप्रदेशैरपि विषमता नापि अत एव स्याच्चान्यथा घनताहानि। ततश्चायात शकुन्तपोतन्यायेन पञ्चद्विचतुष्कत्रित्रिकचतुर्द्विकपञ्चैककलक्षणै. पञ्चत्रिंशतैव प्रदेशैर्घनौजत्र्यस्रनिष्पत्ति., सुवर्णकृदधिकरण्याख्योपकरणसम चैतत्। घनयुग्मत्र्यस्रे तु चतुर्णामिव सद्भावाद्, अन्यथा प्रतरस्यौजस्य च भावात्। तथा चतुरस्र प्रतरौजीय नवप्रदेशोद्भव, यत एकैकेन द्वन्द्वेन वा निष्पादने वा चतुरस्रत्व यद्यपि, तथापि नौजस्त्व, समसङ्ख्याकत्वात् प्रदेशाना त्रिभिस्त्रिभिरेव तन्निष्पाद्य चतुरस्रसस्थानम्। तथा च पङ्क्तित्रिक अङ्कत्रिकं च धार्यं त्रिक-त्रिकगुणित च नवैवेति। प्रतरयुग्मचतुरस्रे तु युग्मसङ्ख्याया अविरोधात् पूर्वपरित्यक्तचतुरेककलक्षण प्रदेशचतुष्क गृह्यते जघन्यत्वादेतस्य। घनौजचतुरस्रे तु चतुरेककेन चतुर्द्विकेन च, यद्यपि चतुर्भिरष्टभिश्च निष्पद्येत चतुरस्रता, परमुभयत्र युग्मता, प्रतरतापि चाद्ये इति तावुपेक्ष्य त्रिभिर्ग्रहणे प्रतिपङ्क्ति त्रित्रिकभावात् पङ्क्तित्रिकेण सप्तविंशतिरेव स्यु प्रदेशा। युग्मघनचतुरस्रे तु समसङ्ख्याया अव्याघातकत्वात् पूर्वपरित्यक्तचतुर्द्विकलक्षणप्रदेशाष्टक परिग्राह्य, न्यूनै करणे तु विषमतायाश्चतुरस्रताया वा व्याघातापत्ते.। प्रतरौजआयते तु प्रदेशपञ्चदशक कथं न न्यूनै प्रदेशैरिति चेत्। अवधारयत—आयामश्चेद्विष्कम्भात् पृथुलो व्यवह्रियते आयत इति, प्रदेशश्चैकोऽनित्थ-

न्थसस्थानत्वान्न पृथुलतयैव व्यपदेष्टु शक्य इति एकैकप्रदेश-निष्पन्नैकपङ्क्तिगप्रदेशत्रयलक्षणमायत न गृह्यते। द्वितीयपङ्क्ते-स्तथारूपाया न्यासे तु प्रदेशाना न स्यादोजस्ता, विषमकरणे तु प्रतरतापि व्यवच्छिद्येतेत्येवं यावन्न प्रतिपङ्क्ति पञ्चपञ्चैकका-स्तिसृषु पङ्क्तिषु [न] गृह्यन्ते तावन्नोजस्ता प्रतरता चाऽऽयतता-न्विताऽधिगम्यते। पञ्च च त्रिगुणिताः पञ्चदशैव। युग्मे तु पूर्व-परित्यक्त प्रदेशषट्कनिष्पन्नमायतं ग्राह्यं, समताया अव्याघातक-त्वात्। घनौजायते तु पञ्चदशभिः प्रतरायतं निष्पन्नमिति वर्तत एव हृदि। अथ यदि त्रिंशद् गृह्यन्ते प्रदेशाः, स्याद्युग्मतापातः, अन्यथा च सस्थानविषमतेति पञ्चत्रिकमय्या पङ्क्त्या त्रि-स्थापितया स्थापना कार्या। तथा च पञ्चचत्वारिंशदेव, त्रिगुणि-ताना पञ्चाना पञ्चदशभावात्, त्रिगुणिताश्च पुनस्ते जाताः पञ्चचत्वारिंशदेव। घनयुग्मायत तु पूर्वोक्तद्वादशप्रदेशमयेन पङ्क्तिद्विकेन द्विकपूरितेन त्रिस्थानवता स्यादेवेति। अर्वाक्करणे समताव्याघातो घनत्वव्याघातो वा। निरूपितमेव सस्थानचतुष्कस्य प्रतिभेदचतुष्कभावेन जघन्यप्रदेशनिष्पाद्य सस्थानवृन्दम्। प्रतरप-रिमण्डल सस्थान जघन्यतोऽपि प्रदेशाना विंशत्यैव। अत्रावधारणीयं तावदेतावद्यदुत–परिमण्डलेऽपि सस्थाने बाह्यतो भवत्येव वृत्ता-कारोऽन्तरपि च शुषिर वृत्तेनैव वेष्टनीय, यद्यपि स्याद्युग्मजन्यमपि घने तथा चान्त प्रदेशचतुष्कसद्भावाद् वृत्ताकारेण परिमण्डले सस्थाने प्रतरे विंशतिर्घने च चत्वारिंशदेव स्युः प्रदेशा इति सम्भाव्यते। अन्यथा वैतत्परिभावनीय यथागम, नात्र नियमित व्याख्यानात्कस्यचित्सूत्रस्येति। न च वाच्यं कथमेतावन्त्येव सस्था-नानि? अर्वकपित्थादीनामप्याकाराणा सद्भावादिति। सर्वेषा-मत्रैवान्तर्भावात्, अर्धवृत्तार्धपरिमण्डलार्धचतुरस्रादीनामपि त्वनन्त-

संस्थानत्वाभावात् । न च निष्पद्यन्ते तान्यनुररीकृत्य लक्षणानि समस्तानाम् । न च वाच्यं त्र्यस्रचतुष्केण भविष्यति चतुरस्रं, तन्नार्थं पृथक् चतुरस्रसंस्थानेनेति । स्थूलपदार्थानां त्र्यस्रचतुष्केण कथञ्चित्तथाभावेऽपि प्रदेशनिष्पन्नानां तेषां समुदितानां तथाऽऽकृत्यभावात् । मध्ये प्रदेशचतुष्कस्य शुषिरीभावादेकस्य वा सममध्यप्रदेशस्य कथमप्यनागमात्, प्रदेशस्य विभागाभावात् । न च चतुरस्रं चतुर्धा विभक्तुमपि शक्यते,येन स्यात् त्र्यस्रचतुष्कं,ततो व्यवहारेऽपि चाकृतिभेदात्परिगणनीयमेव त्र्यस्रं चतुरस्रं वा पृथक्तया। अक्षराण्यङ्का वस्तूनि पृथिव्यादिभूतानां संस्थानानि चैतदुद्भवान्येव । स्थापयित्वा च पट्टिकायां संस्थानपञ्चकं यथाक्रममन्वेष्य प्रयोज्यानि । तथा "फास"त्ति । तत्र स्पृश्यते योऽसौ स्पर्शः । स च गुर्वादिभेदेनाष्टधा । यदाहुः—"फासा गुरु-लहु-मिउ-खर-सीउण्ह-सिणिद्ध रुक्खट्ठ"त्ति । तत्र "गृ निगरणे" इति तौदादिकस्तस्मादौणादिकः "कृग्र ऋत उर् च" [७३४] इति किदु, गिरति—पतत्यधोऽनेनेति गुरुः स्पर्शः अथ पतनकारणं वायुश्च सहचारि कारणं, तेन रुद्धवायोर्नलिकादेर्जलादेरपतनेऽपि न नास्त्येव जले गुरुता, अन्यथा वायुरोधाभावे कथं युज्यते वा पातो जलादेः? कथं न पतत्यर्कतूलादि ?। न च कथं तर्हि पतनतो निश्चितगुरुत्वमपि काष्ठादिकं न निमज्जति जले इति वाच्यम्, जलस्य यत्तत्सद्भावो (स्वभावो) यन्नैतादृशमधो नयति, नैतावता तस्य गुरुत्वं न। यतः किमु जले काष्ठादेः पाषाणादेरल्पमानत्वप्रतिभाने तस्य मानमन्यन्नैव वास्तवमिति वक्तुं शक्येत, किन्तु जलस्वभावेनैव तथा प्रतिभासः । केचिदाहुः— यद् गुरुत्वेनाकृष्यते पदार्थः क्षितितलमध्यविन्दुनेति, तच्चिन्त्यं, । यद्यप्याकर्षणकारणं तु गुरुत्वमेवेति तैरभ्युपगम्यत एव, परं विप्रतिपत्तिरेतावत्येव—यद् गुरुत्वेन पतति,

गुरुत्वेनाकृष्य मध्यविन्दु वा पातयतीति । तत्र यदि गुरुत्वेन पतेत् यथागुरुत्व कालविलम्बोऽल्पाल्पतरादि , आकृष्येत च यदि तर्ह्या-कर्षणे न यथालघु प्रथममाकर्षणात् पदार्थानां स्यात् पातो गुर्वल्प-तामनुसृत्य । भवति च पातो यथागुरु अल्पाल्पतरादिकालेन । ततो नाकर्षणशक्ति । अन्यच्च–क्षितिमध्यविन्दुनाकर्षणे च न स्याच्छी-घ्रगतिक पदार्थः सन्नताया भूमौ । अन्यान्यविन्दुपरिकल्पनेऽपि च गमनाभावे कथ मध्यविन्दोरेव परावृत्तिर्येन स्यादवितथमेतत् । यथागुरुत्वाकर्षोऽपि च विना सम्बन्ध कल्प्यमानो न विद्वज्जनमन-श्चमत्करोति । आकर्षणमसम्बन्धश्चेत्यस्य विप्रतिहतत्वात् लोह-लोहोपलयोर्यथापदार्थमाकर्षसत्ता प्रत्यक्षसिद्धैव, पर नैतावता यथागुरुक कल्प्यमानमाकर्षण शोभायै । न हि सुवर्णस्यानुच्छि-द्यमानद्रवताऽत्यन्ताग्निसयोगेऽपि दृष्टेतीतरेऽपि तथाभूता. कल्प-यितु पार्यन्त प्रवीणेन परमार्थप्रतिपादयित्रा । कश्च मध्यविन्दु-र्भौतिकोऽन्यो वा ? केन च ज्ञात. प्रमाणेनासौ ? कथं च ज्ञाता शक्तिरपि तस्य ? इत्यादि त्वन्यदेव । अन्यथासिद्धिश्च गुरुत्वेनाक-र्षणस्य स्पष्टैव, तेनैवान्वयव्यतिरेकानुविधानात् स्वतन्त्रत्वा-भावाच्च । न सहकारित्वमप्युच्यमान युक्त्यनुरोधीति । एतद्वि-परीतो लघुरुत्पतनकारणम् । न च गुरुत्वाभावो लघुत्व, लघुत्वा-भावस्यैव किमिति नाङ्गीक्रियते गुरुत्वम् । यथा हि तत्पतनकारण तथैवेदमुत्पतनकारणम् । ईक्ष्यन्ते चार्कतूलादयो लघुत्वेनाकाशमनु-धावन्तस्ततो वास्तवमेव लघुत्वम्, न गुरुत्वाभावरूपम् । किञ्च–यथा हि गुरु पदार्थोऽन्येषा काष्ठादीना लघूनामपि यथा निमज्ज-नकारको जलादौ, तथैव लघुरपि धूमादिर्गुरूणामप्यन्येषामूर्ध्व-नयनप्रत्यलो विलोक्यत एव वस्त्रगृहादीना तथारूपेणोत्पतनम्, तदभावरूपत्वेऽस्य युक्तिमनुसरति । न हि पतनाभाव उत्पतन-

मुत्पतनाभावो वा पतनमिति वक्तुं शक्येत। यथारुच्याख्याने तु किमिति शीतोष्णे सुखदुःखे संयोगवियोगौ इत्यादि स्वीकरणीयौ एकाभावत्वमेव द्वितीयस्यैवोच्यते किमु न। असमवायिकारणत्वादि त्वितरत्रापि तुल्यमेव। किञ्च–यथा गुरुरयं इति स्वातन्त्र्येण प्रतीयते पदार्थो गुरुतया, तथैव लघुरयमित्यपि प्रतीयत एव स्वातन्त्र्येण। न च भ्रान्तेयमिति वक्तुं शक्यम्, प्रतीतिमात्रस्य भ्रान्तत्वप्रसङ्गात्। न च बाधकमत्र। यदि च लघोरेव 'नायं गुरु'-रिति प्रतीत्या बाधमुत्प्रेक्ष्य स्वोत्प्रेक्षया कल्प्यते प्रतीते भ्रान्तत्वम्, सुखिन्यपि नायं दुःखीति, शीते च नायमुष्ण इति, वियुक्ते च नायं संयुक्त इति प्रतीत्या किं न सुखादीनामपि दुःखाद्यभावताऽनुपज्येत? किञ्च-यदि गुरुत्वाभावस्यैवाभिप्रेतं स्याल्लघुत्वम्, स्यादेवाकाशात्मादेरपि गुरुत्वाभावान्वितत्वाल्लघुत्वेन व्यवहारः। यदि च स्वतन्त्रमेव स्वीक्रियेत लघुत्वं, तदा तदभावान्नैवाकाशादेर्गुरुतया लघुतया व्यवहारापत्तिः। न च गुणादीनामपि गुणे गुणाभावाद् गुरुत्वाभावादिना लघुत्वापत्तिः। किञ्च–यदि गुरुत्वाभावो लघुत्वं, तदेव चोत्पतनकारणमित्यभ्युपगम्यते, न स्यात्सूर्यचन्द्रमसोः प्रभाया आगमनमत्र। स्याच्चाग्निमात्रस्योर्ध्वमेवार्कतूलादीनामिव गमनम्। तथा चानायत्यैवायुष्मदावासाना सदान्धतमसवत्तया रसातलताऽयत्नसिद्धैव। कथं च विद्युदादेः पातोऽनुभवसिद्धोऽपि सङ्गमनीयो गुरुत्वाभावमात्रेणोत्पतनवादिभिः। अस्माकं तथानियमाभावात्पदार्थानां विचित्रस्वभावत्वाज्ज्वालादेरूर्ध्वज्वलनं विद्युत्प्रकाशसूर्येन्दुप्रभाणां चाविरुद्धः समागमः। न च वाच्यं कथमग्निवदूर्ध्वगमनस्वभावो जीवः कर्मविमुक्तो गच्छत्यूर्ध्वमालोकान्तादस्पृशद्गत्या समयेनेति, तथा यदूर्ध्वं ज्वलति ज्वलनं इति चोच्यमानं घटामञ्चेदिति। तत्र ह्यग्निशिखाया

एवाभिधानादग्निशब्देन । यदाहु'—"यथाधस्तिर्यगूर्ध्वं लेष्टुवाय्वग्निवीचय" इति । तन्नास्माक पदार्थस्वरूपानुसारिणामस्ति दूपणकणिका विहाय मिथ्यात्वान्वितधीपूत्कृतामसती दूषणावलीमिति । तथा 'मृदु'रिति । तत्र "मृदश् क्षोदे" इति क्र्यादिको धातुस्तस्माच्च "पृकाहृपिधृपीपिकुहिभिदिविदिमृदिव्यधिगृध्यादिभ्य: कित्" इत्यौणादिके किदौ मृदुरिति । मृद्नाति च मृदु स्पर्शो दु खं, सुखसाधनत्वात्तस्य, कर्कशता वा कोमलपापाणादिना घर्षणे कोमलतोपलम्भात् ततो मृदुता । न च वाच्य सयोगविशेप एवाय न तु गुण इति । सयोगविशेपमात्रेण तदनुत्पत्ते । अस्तु वा सयोगविशेष: कारणम्; पर नैतावता तस्य तन्मयत्वम्, मृदु: पापाण इत्यादेरनुभवात् । मृदुतूलिकादीना च स्पष्टैव सुखसाधनतेति नायमपलाप्य. प्रमाणेन पदार्थ प्रतितिष्ठापयिपुभि: । अन्यथा पुद्गलसयोगजत्वात्सुखदु खजीवितमरणाना न तेषामपि पदार्थता वास्तविकी स्वीकार्या स्यात्, तन्न मृदुर्न गुण. । तथा "खर"त्ति । खरो मृदुविपरीत. । "खन खनने" इति भौवादिकस्तस्मात् "जठरऋकरमकरशङ्करकर्पूरकर्परतोमरप्रामरपामरप्राम्बरसगरनगरतगरोर्दरादरगृदरदृदरकृदरकुकुन्दरगोर्वराम्बरमुखरखरडहरकुञ्जराजगरादय:"[४०३]इतिसूत्रेणौणादिकेन डिरप्रत्ययनिपातनेन खर इति। केचित्तु "आतो डोऽह्वावाम" [५।१।७६] इतिसूत्रेण डप्रत्ययमामत्य ख–हृपीक राति–अभिभवतीति खर इत्यप्याहु । यतो न हि पाणिनीये स्वादिषु ऋजादिषु वोपात्त खर इति तेपामावश्यकमेव व्युत्पादनमिति। न च मृदुत्वाभाव एव खरत्वम्, स्पष्ट दु खसाधनत्वात् पार्थक्य तस्य। तथा दृश्यन्त एव घर्षणादय खरताप्रभवा । न चैतेऽभावप्रयुक्ता इति । तथा "सीय"त्ति । शीत., तत्र शेरते इन्द्रियाणि स्तब्धीभावादनेनास्मिन् वेति शीत । "शीङक् स्वप्ने"

इत्यादादिकस्तस्मात् "शीरीभूदूमूघृपा" ० [२०१] इत्यादिनौणादिकः कित्तः प्रत्यय । तथा च शीत इति । स्पष्टश्चाय स्पर्शविशेषतया । न ह्यननुभूत केनाप्यस्ति शिशिरजडतोद्भवमशर्म, यो विप्रतिपद्येतैतस्मिन्, न वा विना जीवन जीवति कश्चिदसुभृद्योऽपलपेदेनम् । तथा "उण्ह"त्ति । उष्ण, ओषति-दहति शरीरादिकमित्युष्ण, "उषू दाहे" इति भौवादिकस्तस्माच्च "घृवीह्वाशुष्युपि" इत्यौणादिके किति णे उष्ण इति सिध्यति । दह्यते चोष्णेनेन्द्रियादिक, स्पष्ट चेदमिति न विप्रतिपत्ति. । तथा 'सिणिद्ध"त्ति । स्निग्ध, "ष्णिहीच् स्नेहने" स्नेहयत्यास्वादयन्तमिति स्निग्ध, "अकर्मकपिव भुजे" [५।१।११] इति कर्त्तरि "ज्ञानेच्छार्चार्थ" इत्यादेराकृतिगणत्वाच्च वर्त्तमाने क्ते "मुहद्रुहस्नुहस्निहो वा" इति घे "अधश्चतुर्थात्" इति तस्य धादेशे स्निग्धो घृतादिगत स्पर्शविशेष । तथा "रुक्ख"त्ति रूक्षः, तत्र "रूक्षण् पारुष्ये" इत्यदन्तश्चौरादिक परस्मैपदी । लिहादित्वादचि रूक्ष., रूक्षयति चैष स्पर्श आस्वादयन्तमनिष्टत्वात्, पापप्रकृतितया च गण्यते अत एव "गुरु खर रुक्खं" इतिवचनात् । एतेऽष्टावपि स्पर्शा. । ननु शीतोष्णयोर्भवतु स्पर्शत्व, गुरुलघुमृदुखरस्निग्धरूक्षाणा कथ स्पर्शत्व ? यतो न तावद् गुरुलघू स्पर्शमात्रवेद्यौ, तेपामुत्पाटनेन सञ्चालनेन वा बोधात्, स्पर्शाख्या तु तस्यैवार्हा, यः स्पर्शमात्रेण वेद्यते यथा शीतोष्णौ । तथा मृदुखरयोरपि न केवलस्पर्शमात्रवेद्यताऽस्ति, किन्त्विहापोहगम्यावेव । तथा स्निग्धरूक्षावपि । तन्नैते स्पर्शतयोदितु योग्या षडिति चेत् । सत्य, ब्रूत तावत्केनेमे वेद्यन्ते ? मनसा तु न केवलेन, सहोपयोगे तु किं न शब्दादिष्वपि तस्योपयोगः ? असाधारण्येन यथा तत्र श्रावणत्वादि, तथैवात्र किं न स्पार्शनत्वादि ?। किञ्च—गुरुभारादिना क्रमण श्रान्तिर्घर्षण दाहश्च नान्येन्द्रियाणा बाधाकर, किन्तु

स्पर्शनस्यैव विधत्ते बाधाम् । आपेक्षिकत्व च शीतोष्णयोरपि,अन्यो-न्यापेक्षया व्यवह्रियत एव ते,न नैतावता स्पार्शन(स्पर्श)त्वमेषाम् । ननु च स्पर्शनेद्रियज्ञेयाना स्पर्शत्वे किं सङ्ख्यासयोगवियोगपृथक्त्व-परापरत्वादीना न स्पर्शत्वमुच्यते इति ? चेत् । सत्य, पर न ते सयोगाद्या केवलस्पर्शनवेद्या गुरुत्वादीनामिव, किन्तु स्पर्शनेन चक्षुषा चेत्युभयेन्द्रियवेद्या । न च वाच्य उष्णशीतादि वेद्यते जिह्वयेति नैवम् तदपि स्पर्शतयाख्यातुमुचितमिति। न रसना स्पर्शनरहितेति सहचरित प्रतिभासते शीतोष्णादि, पर तत्स्पर्शनेनैव ज्ञापितम्, तस्या रसादेरेव ज्ञापकत्वात् । ननु च कथमष्टावेव स्पर्शा आख्यायन्ते ? । यतोऽगुरुलघ्वमृदुखराऽनुष्णशीताऽस्निग्धरूक्षाणामपि स्पर्शाना सद्भावादिति चेत् । सत्य, न तावद्वेद्यमगुरुलघुत्वम्, अमूर्त्तानामिन्द्रियेणावेदनात्तद्वता मूर्त्ताना च द्व्यणुकादीनामपि तद्वतामवेदनान्नासौ स्पर्शगोचरोऽगुरुलघ्वाख्य स्पर्श । पठ्यते चात एव परमाणौ स्पर्शद्वयमेव । यदाहुः—

"कारणमेव तदन्त्य सूक्ष्मो नित्यश्च भवति परमाणु । एकरसवर्णगन्धो द्विस्पर्श कार्यलिङ्गश्च ॥१॥" इति । स्पर्शद्वय च शीतोष्णयो स्निग्धरूक्षयोर्मध्ये एकैकेन भावात् । गुरुलघुमृदुखरास्तु सहत्युत्पन्नास्तथा नामृदुखरस्यापि पाठो युक्त । तथा(न) कोऽपि पुद्गलस्कन्धोऽणुर्वा शीतोष्णस्निग्धरूक्षयोरन्यतमेनैकतरेण हीनोऽस्ति, येनानुष्णशीतादि स्पर्शो व्याख्यायेतेन्द्रियावरणक्षयोपशमतीव्रत्वाभावाच्च मन्दो नायाति गोचरम् । नैतावता न स ,अन्यथा परमाण्वादौ रूपाभावाभ्युपगमप्रसङ्गात् । न च वाच्यमुष्ण. स्पर्शोऽनलस्य शीतश्चोदकस्येति पृथिवीपवनयोरनुष्णाशीतस्पर्शवत्त्वमभ्युपेयमेव, तयोः स्पर्शवत्त्वाच्छीतोष्णयोरभावादयोगाच्चेति । शीतकालादौ पक्ष्ममात्रमप्यदलेदिनोऽदाहिनश्च

पाषाणादौ शीताद्युपलम्भात् । अग्निकणा जलकणाश्च तत्र प्रविष्टा इति चेदाः ? किं जलानलयोर्विरोधोऽपि विस्मृत ? न चाकाशादौ जलादिस्पृश्यपि शीतादेरस्ति कदापि लेशत उपलम्भ.। मूर्त्तेष्वेव स इति चेदस्तु मूर्त्तगुण । नन्वग्निप्रभृतिस्पर्शाल्लभ्यते उष्णादिस्पर्श- वत्त्व तदभावे च नोष्णो न वा शीत उपलभ्यते इति पृथ्व्यादीना- मनुष्णाशीतस्पर्शवत्त्वमेव योग्यमिति चेत्सत्यम्, तीव्रतत्तत्स्पर्शे तत्तत्कारणताऽस्ति, पर नैवान्यत्र नैव स्पर्शो न वासौ न शीत उष्णो वा,अस्ति च चन्दनादौ पार्थिवे सार्षपे च शीतोष्णौ स्पर्शावु- पलभ्यमाने वायावपि च । न चोष्णशीतान्यतराभाववान् कोऽप्यर्थः स्पर्शनविषयतामागच्छति । यद्वाऽग्ने. पार्थिवाणूपादानत्वादुदकस्य च वायूपादानत्वात् किमिति तत्र 'यद्द्रव्य'मिति नियमेन न तत्त- त्स्पर्शवत्ता, चन्द्रार्ककान्तोपलादुदकाग्न्योरुद्भवाद्वा कथ पार्थिवेऽनु- ष्णाशीत एव स्पर्श इति वक्तु युक्तम् । तथा "ठाण"त्ति । स्थीयतेऽस्मिन्निति स्थानमवगाहना "करणाधारयो." इत्यन. । तच्चैकस्य प्रदेशस्य परमाणुसञ्ज्ञितस्यैकस्मिन्नाकाशप्रदेशे द्व्यणुक- त्र्यणुकयावदनन्तानन्ताणुकस्कन्धस्यापि । कथमेतदिति चेत् । पारद- सुवर्णन्यायेन । पूर्वमेव प्रतिपादितमेतन्मा विस्मार्षीः । आर्षं च–

"एगेण वि से पुण्णे दोहि वि पुण्णे सय पि माएज्जा । कोडि- सएण वि पुण्णे कोडिसहस्स पि माएज्जा ॥१॥ इत्यादि । अन्यथा प्रत्यक्षदृष्टानामनन्तानन्ताणुकस्कन्धानामप्यवगाहनानुपपत्ति । तथा द्व्यणुकादीनामाकाशप्रदेशद्वयावगाहनमपि स्वानधिकप्रदेशमर्यादया असङ्ख्येयप्रदेशावसानमेव चावगाहनम्, तावत एव लोकत्वात् । अलोके च न गति पुद्गलाना, न च स्थित्यवगाहने, सर्वं चैत- 'ल्लोकाकाशेऽवगाह एकप्रदेशादिषु भाज्यः पुद्गलाना'मिति तत्त्वा- र्थसूत्रयुगलपर्यालोचने स्पष्टीभविष्यति । अत एव च "ओगाह-

णट्ठाए चउट्ठाणवडिए"त्ति पारमर्षमपि सङ्ख्येया सङ्ख्येय-भागगुणहान्या सङ्ख्येयासङ्ख्येयभागगुणवृद्धया वा चतु स्थानपति तत्वमुद्घोपयत्तदेव वक्ति । षट्स्थानपतित अन्यथा प्रतिपादयेत्, अनन्तभागगुणहानिवृद्धिसद्भावात् । स्थान वा स्थितिस्तद्रूपेणाव-स्थानकाल स तु द्रव्यार्थतया पुद्गलानामनाद्यनन्त । यतो न हि जहति पुद्गला पुद्गलता मूर्त्तानाममूर्त्तत्वेन परिणत्यभावात्, पर स्कन्धादिरूपापेक्षयाऽस्त्येव स्थितिनियम, यदपेक्षया पर्याय-परिणति पुद्गलाना विचित्ररूपोपलभ्यमाना घटाकोटिमाटीकते । तच्च परमाणोरारभ्य यावदनन्ताणुकस्कन्धानां जघन्यत एक समय उत्कृष्टतोऽसङ्ख्यात' कालः। कुत इति चेत्तावत्यतिक्रान्तेऽने-हस्यवश्यं परावृत्ते । अत एव च स्थित्यपेक्षयापि चतु स्थानपतित-त्वमण्वादीना गीयते आगमे । न च विमानादितया परिणताना पुद्गलाना शाश्वतभावाद्वाच्योऽनाद्यनन्तोऽपि काल. स्थिततयेति । न हि तत्रावस्थिता एव परमाणव स्कन्धा वा, किं तु गिरिसरि-त्प्रवाहन्यायेनान्यान्याण्वादिसमागमो विगमश्च प्राक्तनानामिति नानन्तः कालोऽभिप्रेय' स्थिततया । एव च शाश्वताना सजीव-त्वेऽपि जीवानामपरापरेषामुत्पादादावपि सति न तद्रूपपरिणताना-मशाश्वतत्वम्, साधारणाना चोच्छिन्नानामप्यन्तर्मुहूर्त्तमायुरघटमान तत्र नूत्ननूत्नानामुत्पादात् । दृश्यते च च्छिन्नानामपि साधारणाना गृहादावपि पल्लवाद्युद्गमो गुडूच्यादीना तादृश एव स्वभावस्तेषा यत्स्वयोग्यमाहार समीरणादिभ्योऽप्यादत्ते वर्धते च । तथा च का हानिर्नवीननवीनजीवोत्पादे प्राक्तनव्यये तु न कोऽपि विवाद इत्यपि प्रतिपादितमेव ज्ञेयम् । एतेन नामरादिकुण्डलादीनामपि शाश्वततया जीवविकलत्व केवलपुद्गलमयत्व वेत्यलमप्रस्तुतेन । तथा "गइ"त्ति गम्यते इति गति, स्त्रियां क्तिरिति क्तौ,

"गमा" इत्यनुनासिकलुकि च गतिरिति । सा चानेकप्रकारा स्पृशद्गत्यस्पृशद्गतिवक्रगत्यादिभेदेन । न च वाच्यं कथमचेतनत्वादणूना गतिः, चेष्टारहिततत्वात्तेषामिति । नहि क्रिया चेतनावत्त्वेन व्याप्तेति नियमः, उद्गच्छद्भानुप्रभापिञ्जरितजालकादौ स्पष्टं गतिमत्त्वेक्षणात्पुद्गलानाम् । न च नियता गतिस्तेषां तत्र येन वाय्वादिनियता सा भवेत्, अभावे चाणूना गत्यादेः कथं घटपटशकटादेः पुरातनीभावेन जर्जरीभावः सम्पद्येत, सन्ध्याभ्रादयो वोत्पद्येरन् विलीयेरँश्च । न चैतत्पुद्गलानां गत्याद्यभावे युक्तम् । कथं च प्रतिवस्तु परमाण्वपचयः प्रत्यक्षसिद्धोऽभ्युपगतो वा युज्यते । न द्वयणुकादित्वापत्तिः परमाणूना गत्यभावे, प्रत्यक्षं च विलोक्यते शक्रधनुरादीना परिणतिर्वियुक्तता चेति स्वीकार्यैव पुद्गलाना गतिमत्ता, अन्यथा सूर्याचन्द्रमसोरुद्योतोऽपि नैवावाप्नुयाद् भूलोकम् । यद्दृष्टमप्युपलप्स्यते, तत्र व्यवहारितामनुपतति, पारमर्षं च—

"जण्ण परमाणुपोग्गला लोगस्स पुरत्थिमिल्लाओ चरिमंताओ पच्चत्थिमिल्लं चरमंतं एगसमएण गच्छइ, पच्चत्थिमिल्लाओ वा चरिमंताओ पुरत्थिमिल्लं वा चरमंतं एगसमएण गच्छति, दाहिणिल्लाओ चरमंताओ वा उत्तरिल्लं चरमंतं एगसमएण गच्छति उत्तरिल्लाओ वा चरमंताओ वा दाहिणिल्लं चरमंतं एगसमएण गच्छइ" इत्यादि । न च कथमेतत्सम्भवि, गतिमत्त्वेऽपि पुद्गलानामेतादृक्शीघ्रगत्ययोगादिति शङ्कनीयम् । यतो विद्युत्प्रकाशो यथा पुद्गलमय एवास्तृणाति विश्वं विश्वं स्वरोचिषा क्षणेन । यद्वा—विद्युद्यन्त्रप्रयुक्तो ध्वनिः खटत्कारेण सममेव शतावधिकान् क्रोशानतिक्रम्य पुनस्तत्रैव तदैवापक्रामन् विलोक्यते । एतच्च स्थूलदृष्ट्या स्थूलस्कन्धानां यदि प्रेक्ष्यते, का वार्ता तर्हि परमाणुतामृतापरमाणूना, गुरुत्वलेशस्याप्यभावस्तत्र यतः । तत्र यथार्थप्रतिपादक-

परमागमप्रणेतृपरमपुरुषगुणवेदिनां श्रद्धावतां किमिति शङ्कनीयम् यथार्थवस्तुस्वरूपे ?। एव च वर्णादीना द्वन्द्व । एते च द्रव्यगुण इति सूचिता गुणा व्याख्याताः। सस्थान-स्थान-गतयश्च परिणामरूपा अपि कथञ्चिद् गुणत्वमप्येतेषामिति सप्रधार्य साहचर्याद्वोक्ता। तत्त्वतस्तु वर्णरसगन्धस्पर्शा इत्येव गुणाः, स्पर्शस्य बन्धानुलोम्यादिनान्यत्र पाठ.। तथा चैषा चतुर्णां गुणत्व, शेषाणा च परिणामत्वम्। यद्वा—अत्र न द्रव्यगुण इत्यादिविभागो लोकव्याख्याने, किन्तु सामान्येनैव पर्यायलोकव्याख्येति न विचारकणिकाऽपि। वर्णादीना च परिणामत्व तु पूर्वं प्रतिपादितमेव। तथा वर्णभेदा । वर्णाना कृष्णादीनामुपलक्षणत्वाद्रसादीना तिक्तादीना भेदा अवान्तरप्रकारा सयोगजा परिणामविशेषा वा पूर्वोक्ताः कापोताद्या, पश्चाद्वर्णादिना द्वन्द्वेन द्वन्द्विते वर्णरसगन्धसस्थानस्पर्शस्थानगतिवर्णभेदा इति। वर्णभेदपार्थक्य च शेषाणामुपलक्षकत्वात्। यद्वा—समस्तानामेक एव द्वन्द्वो, भवति चाभिप्रेतानामेकसमासान्तर्गतानामपि 'अष्टापायविनिर्मुक्ततदुत्थगुणभूतये' इत्यादाविव प्रक्रम्यमाणानामपि ग्रहणम्। चकार. परिणामानामानन्त्यज्ञापनाय। यद्वा—सावान्तरभेदाना भेदाना समस्ताना परिणामत्वज्ञापनाय। किमित्येवमित्याहु—"परिणामे अ बहुविहे"त्ति। यद्वा—वर्णादिकानिति द्वितीयान्ततया व्याख्येयम्। तथा च वर्णादिकान् बहुविधान् परिणामानित्यर्थः। परिणमन पूर्वावस्थापरित्यागेनावस्थान्तरगमन "नार्थान्तरगमो यस्मात्सर्वथैव न चागम" इत्यादिवचनान्न मूलवस्तुस्वरूपस्य च च्युति. परिणाम इतिलक्षणः। ते च बहव -अपरिमिता आनन्त्यादेव तेषाम्। न ह्येकगुणकृष्णत्वादिविवक्षया परिगणितु पर्याया शाशक्यन्ते शक्तिमद्भिरपि विधाः—प्रकारा, रसादीनामपि तथाभावात् प्रकारपर्यन्तानुधावन

येषा ते बहुविधास्तानिति। योजना तु पूर्वं विहितैव। चकारश्चात्र न केवल, उक्ता सादिका एव परिणामाः किन्त्वन्येऽनादिका अपीत्यनुक्तानादिपरिणामसूचनाय। तान् किमित्याह—"पज्जवलोगं वियाणाहि"त्ति। पर्ययनं—मूलस्वरूपापरित्यागेन परावर्त्तनं पर्यायः पर्याया वा, स एव ते वा लोको लोक्यमानत्वाद् द्रव्यादौ प्रलयनाद्वा लोकः पर्यायलोकः। प्राकृते हि निलयनादेरपि लुक्काद्यादेशभावात्। पृषोदरादिना च ककारलोपादि। एवमेव च "आलुक्कइ पलुक्कइ लुक्कइ सलुक्कइ य एगट्ठे"त्यत्र प्रणीतैकार्थता घटते। लोकृधातोर्वोपसर्गेण भिन्नभिन्नार्थवाचकतामभिप्रेत्य तथैकार्थतादर्शनं, लोकव्याख्योपयुक्तोऽष्टमो भेद पर्यायलोकस्तम्। विजानीहि-विविधैर्हेतुयुक्त्यादिभिः प्रकारैर्जानीह्यवबुध्यस्व। न हि वचनगौरवमात्रेण ग्राह्य वचन मामकम्, किन्तु हेतुयुक्त्यादिनाऽविरुद्धत्वेन निश्चित्य, आप्तोपज्ञमनुल्लङ्घ्यमदृष्टेष्टविरोधकमित्येवंविधस्यैवाप्तागमरूपत्वात्। एव च पर्यवसितम् पर्यायलोकस्वरूप, तत्पर्यवसानाच्च लोकनिक्षेपाष्टक पर्यवसितम्, तथा चोत्तरित कतिविधश्चासाविति। लोकभेदनिरूपणाय चैवविधोऽतिविस्तृत क्वचिदप्रस्तुतवदाभासमानो विदुषा हास्यास्पदमवज्ञास्पद चेद्धबोधानामुद्वेजकश्च बोधबाधासहिष्णूना प्रबन्धोऽकारि। क्षन्तव्योऽयमागोऽविहितयथारुचिविधानानामस्माकम्, केवल कर्तृत्वाकर्तृत्वादि विवेच्यमान कीदृश लोकमपेक्ष्य युज्यत इतिविचारोपयोगित्वमात्रेणैतावतोऽतिमहतो निबन्धस्याभिधानात्। विधीयते चाभियुक्ततरैरपि निर्युक्तिभाष्यविधानबद्धावधानधाराभि पूज्यपादैरपि अप्रस्तुतनिराकरणपूर्वं प्रस्तुतस्यावगमायैव यथार्थतया निक्षेपादि। ततो नापकर्णनीयमिद, आवश्यकं च लोकस्वरूपस्य यथावत्परिज्ञानमिति विस्तृता भेदानुभेदा इति।

।। सम्पूर्णो लोकविंशिकाविवृतेराद्य. खण्ड उपोद्घातप्रतायक ।।

नमोऽस्तु सूरये तस्मै यदुपज्ञावलम्बनात् ।
यथामत्यज्ञबोधाय लोकस्वरूपमाततम् ।।१।।
सिद्धान्तोत्तीर्णमुदित मत्या मान्द्यात्सुबोधरहिततया ।
मिथ्या तद्दुष्कृतं मे भूयाद्भूयां च बोधियुतः ।।२।।

